M-2904

| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/ अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विकम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| श्रीमद्भागवत | | धार्मिकग्रंथ | पूर्ण | श्रीधर | 3/12 | 278 | संस्कृत | कागद | | | | |

श्रीगणेशायनमः ॥ श्रीमज्जगद्गुरवेनमः ॥ श्रीकृष्णायनमः ॥ ‘ शेषाशेषमुखव्याख्याचातुर्यंत्वेकवक्रतः ॥ दधानमद्भुतंवंदेपरमानंदमाधवम् ॥ १ ॥
श्रीमाधवंप्रणम्योमाधवंविश्वेशमादरात् ॥ तद्भक्तियंत्रितःकुर्वेगीताव्याख्यांसुबोधिनीम् ॥ २ ॥ भाष्यकारमतंसम्यक्तद्व्याख्यातृगिरस्तथा ॥ यथामतिस
मालोच्यगीताव्याख्यांसमारभे ॥ ३ ॥ गीताव्याख्यायतेयस्याःपाठमात्रादयत्नतः ॥ सेयंसुबोधिनीटीकासदाध्येयामनीषिभिः ॥ ४ ॥ ’ इहखलुसकल
लोकहितावतारःसकलवंदितचरणःपरमकारुणिकोभगवान्देवकीनंदनस्तत्त्वाज्ञानविजृंभितशोकमोहविभ्रंशितविवेकतयानिजधर्मत्यागपरधर्माभिसंधिपरमर्जुनंध
र्मज्ञानरहस्योपदेशप्लवेनतस्माच्छोकमोहसागरादुद्दधार तमेवभगवदुपदिष्टमर्थंकृष्णद्वैपायनःसप्तभिः श्लोकशतैरुपनिबबंध तत्रचप्रायशः श्रीकृष्णमु

॥ धृतराष्ट्रउवाच ॥ ॥ धर्मक्षेत्रेकुरुक्षेत्रेसमवेतायुयुत्सवः ॥ मामकाःपांडवाश्चैवकिमकुर्वतसंजय ॥ १ ॥
॥ संजय उवाच ॥ ॥ दृष्ट्वातुपांडवानीकंव्यूढंदुर्योधनस्तदा ॥ आचार्यमुपसंगम्यराजावचनमब्रवीत् ॥ २ ॥
पश्यैतांपांडुपुत्राणामाचार्यमहतींचमूम् ॥ व्यूढांद्रुपदपुत्रेणतवशिष्येणधीमता ॥ ३ ॥

खान्निःसृतानेवश्लोकानलिखत् काश्चित्तत्संगतयेस्वयंव्यरचयत् यथोक्तंगीतामाहात्म्ये ‘ गीतासुगीताकर्तव्याकिमन्यैःशास्त्रविस्तरैः ॥ यास्वयं पद्मनाभस्यमुखप
द्माद्विनिःसृता’इति तत्रतावद्धर्मक्षेत्रइत्यादिनाविषीदन्निदमब्रवीदित्यंतेनग्रंथेनश्रीकृष्णार्जुनसंवादप्रस्तावायकथानिरूप्यते धर्मक्षेत्रइति । भोसंजय!धर्मभूमौकुरुक्षे
त्रेमत्पुत्राःपांडुपुत्राश्च युयुत्सवःयोद्धुमिच्छंतः समवेताःमिलिताःसंतः किंकृतवंतः ॥ १ ॥ दृष्ट्वेति । पांडवानामनीकंसैन्यंव्यूढंव्यूहरचनयाव्यवस्थितंदृष्ट्वाद्रोणाचार्य
समीपंगत्वाराजादुर्योधनोवक्ष्यमाणंवाक्यमुवाच ॥ २ ॥ तदेववाक्यमाह पश्यैतामित्यादिनवभिःश्लोकैः । भोआचार्य! पांडवानांविततांचमूंसेनांपश्य द्रुपदपुत्रेण

धृष्टद्युम्नेनव्यूढांव्यूहरचनयाअधिष्ठिताम् ॥ ३ ॥ अत्रशूराइति । अत्रास्यांचमवां इषवोबाणाअस्यंतेक्षिप्यंतेएभिरितिइष्वासाःधनूंषि महातइष्वासायेषांतेतथा भीमार्जुनौतावदत्रातिप्रसिद्धौयोद्धारौ ताभ्यांसमाःशूराः शौर्येणक्षात्रधर्मेणउपेताःसंति तानेवनामभिर्निर्दिशति युयुधानःसात्यकिः ॥ ४ ॥ किंच धृष्टकेतुरिति । चेकितानोनामएकोराजा नरपुंगवःनरश्रेष्ठःशैब्यः ॥ ५ ॥ युधामन्युश्चेति । विक्रांतोयुधामन्युर्नामैकः सौभद्रोऽभिमन्युःद्रौपदेयाःद्रौपद्यांपंचभ्योयुधिष्ठिरादिभ्योजाताःप्रतिविंध्यादयःपंच महारथादीनांलक्षणम् 'एकोदशसहस्राणियोधयेद्यस्तुधन्विनाम॥शस्त्रशास्त्रप्रवीणश्चमहारथइतिस्मृतः॥अमितान्योधयेद्यस्तुसंप्रोक्तो

अत्रशूरामहेष्वासाभीमार्जुनसमायुधि ॥ युयुधानोविराटश्चद्रुपदश्चमहारथः ॥ ४ ॥ धृष्टकेतुश्चेकितानःकाशिराजश्चवीर्यवान् ॥ पुरुजित्कुंतिभोजश्चशैब्यश्चनरपुंगवः ॥ ५ ॥ युधामन्युश्चविक्रांतउत्तमौजाश्चवीर्यवान् ॥ सौभद्रोद्रौपदेयाश्चसर्वएवमहारथाः ॥ ६ ॥ अस्माकंतुविशिष्टायेतान्निबोधद्विजोत्तम ॥ नायकाममसैन्यस्यसंज्ञार्थंतान्ब्रवीमिते ॥ ७ ॥ भवान्भीष्मश्चकर्णश्चकृपश्चसमितिंजयः ॥ अश्वत्थामाविकर्णश्चसौमदत्तिस्तथैवच ॥ ८ ॥ अन्येचबहवःशूरामदर्थेत्यक्तजीविताः ॥ नानाशस्त्रप्रहरणाःसर्वेयुद्धविशारदाः ॥ ९ ॥

ऽतिरथस्तुसः । रथीत्वेकेनयोयुद्धयेत्तन्न्यूनोर्धरथीमत'इति ॥ ६ ॥ अस्माकमिति । निबोधबुद्धयस्व नायकाःनेतारः संज्ञार्थंसम्यग्ज्ञानार्थमित्यर्थः ॥ ७ ॥ तानेवाह भवानिति द्वाभ्याम् भवान्द्रोणः । समितिंसंग्रामंजयतीतितथा सौमदत्तिःसोमदत्तस्यपुत्रोभूरिश्रवाः ॥ ८ ॥ अन्येचेति । मदर्थेमत्प्रयोजनार्थंजीवितंत्यक्तुमध्यवसिताइत्यर्थः । नानाअनेकानिशस्त्राणिप्रहरणसाधनानियेषांते युद्धेविशारदाःनिपुणाइत्यर्थः ॥ ९ ॥

ततःकिमित्यतआह अपर्याप्तमिति । तत्तथाभूतैर्वीरैर्युक्तमपिभीष्मेणाभिरक्षितमप्यस्माकंबलंसैन्यमपर्याप्तं तैःसहयोद्धुमसमर्थंभाति इदंतुएतेषांपांडवानांबलंभी मेनाभिरक्षितंसत्पर्याप्तंसमर्थंभाति भीष्मस्योभयपक्षपातित्वात् अस्मद्बलंपांडवसैन्यंप्रत्यसमर्थम् भीमस्यैकपक्षपातित्वात् ॥ १० ॥ तस्मात्भवद्भिरेवंवर्तितव्य मित्याह अयनेष्विति । अयनेषुव्यूहप्रवेशमार्गेषुयथाभागंविभक्तांस्वांस्वांरणभूमिमपरित्यज्यावस्थिताःसंतःसर्वेभीष्ममेवाभितोरक्षंतुतथाऽन्यैर्युध्यमानःपृष्ठतः कैश्चिन्नहन्येततथारक्षंतु भीष्मबलेनैवास्माकंजीवितमितिभावः ॥ ११ ॥ तदेवंबहुमानयुक्तंराज्ञोदुर्योधनस्यवाक्यंश्रुत्वाभीष्मःकिंकृतवांस्तदाह तस्येति । तस्य

**अपर्याप्तंतदस्माकंबलंभीष्माभिरक्षितम् ॥ पर्याप्तंत्विदमेतेषांबलंभीमाभिरक्षितम् ॥ १० ॥ अयनेषुचसर्वेषुयथाभागमवस्थिताः ॥**
**भीष्ममेवाभिरक्षंतुभवंतःसर्वएवहि ॥ ११ ॥ तस्यसंजनयन्हर्षंकुरुवृद्धःपितामहः ॥ सिंहनादंविनद्योच्चैःशंखंदध्मौप्रतापवान् ॥ १२ ॥**
**ततःशंखाश्चभेर्यश्चपणवानकगोमुखाः ॥ सहसैवाभ्यहन्यंतसशब्दस्तुमुलोऽभवत् ॥ १३ ॥ ततःश्वेतैर्हयैर्युक्तेमहतिस्यंदनेस्थितौ ॥**
**माधवःपांडवश्चैवदिव्यौशंखौप्रदध्मतुः ॥ १४ ॥**

राज्ञःहर्षंसंजनयन्कुर्वन्पितामहोभीष्मउच्चैःमहांतंसिंहनादंकृत्वाशंखंदध्मौवादितवान् ॥ १२ ॥ तदेवंसेनापतेःभीष्मस्ययुद्धोत्सवमालक्ष्यसर्वतोयुद्धोत्सवः प्रवृत्तइत्याह ततइति । पणवाः आनकाः गोमुखाश्चवाद्यविशेषाः सहसैवतत्क्षणमेवाभ्यहन्यंतवादिताः सचशंखादिशब्दस्तुमुलोमहानभवत् ॥ १३ ॥ ततःपांडवसैन्येप्रवृत्तंयुद्धोत्सवमाह ततइतिपंचभिः । ततः कौरवसैन्यवाद्यकोलाहलानंतरं स्यंदनेरथेस्थितौसंतौकृष्णार्जुनौदिव्यौशंखौप्रकर्षेणदध्मतुः वादयामासतुः ॥ १४ ॥

तदेवविभागेनदर्शयन्नाह पांचजन्यमिति। पाचजन्यादीनिश्रीकृष्णादिशंखानांनामानि भीमंघोरंकर्मयस्यसःवृकवदुदरंयस्यसवृकोदरोमहाशंखंपौंड्रंदध्मावितिः॥१५ अनंतविजयमिति। नकुलःसुघोषंनामशंखंदध्मौ सहदेवोमणिपुष्पकंनाम ॥ १६ ॥ काश्यश्चेति। काश्यःकाशीराजः कथंभूतःपरमःश्रेष्ठः इष्वासोधनुर्यस्य सः ॥ १७ ॥ द्रुपदइति। हेपृथिवीपते! हेधृतराष्ट्र! ॥१८॥सचशंखानांनादस्त्वदीयानांमहाभयंजनयामासेत्याह सघोषइति। धार्तराष्ट्राणांत्वदीयानांहृदयानिविदा

पांचजन्यंहृषीकेशोदेवदत्तंधनंजयः ॥ पौंड्रंदध्मौमहाशंखंभीमकर्मावृकोदरः ॥ १५ ॥ अनंतविजयंराजाकुंतीपुत्रोयुधिष्ठिरः ॥ नकुलः सहदेवश्चसुघोषमणिपुष्पकौ ॥ १६ ॥काश्यश्चपरमेष्वासःशिखंडीचमहारथः ॥ धृष्टद्युम्नोविराटश्चसात्यकिश्चापराजितः ॥ १७ ॥ द्रुपदोद्रौपदेयाश्चसर्वशःपृथिवीपते ॥ सौभद्रश्चमहाबाहुःशंखान्दध्मुःपृथक्पृथक् ॥ १८ ॥ सघोषोधार्तराष्ट्राणांहृदयानिव्यदारयत् ॥ नभश्चपृथिवींचैवतुमुलोव्यनुनादयन् ॥ १९ ॥ अथव्यवस्थितान्दृष्ट्वाधार्तराष्ट्रान्कपिध्वजः ॥ प्रवृत्तेशस्त्रसंपातेधनुरुद्यम्यपांडवः ॥ २० ॥ हृषीकेशंतदावाक्यमिदमाहमहीपते ॥ अर्जुन उवाच ॥ सेनयोरुभयोर्मध्येरथंस्थापयमेऽच्युत ॥ २१ ॥ यावदेतान्निरीक्षेऽहंयोद्धुकामानवस्थितान् ॥ कैर्मयासहयोद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥ योत्स्यमानानवेक्षेऽहंयएतेऽत्रसमागताः ॥ धार्तराष्ट्रस्यदुर्बुद्धेर्युद्धेप्रियचिकीर्षवः ॥ २३ ॥

रितवान् किंकुर्वन् नभश्चपृथिवींचैवतुमुलोव्यनुनादयन् ॥ १९ ॥ तस्मिन्समयेश्रीकृष्णमर्जुनोविज्ञापयामासेत्याह अथेतिचतुर्भिः। व्यवस्थितान्युद्धोद्योगेन स्थितान् कपिध्वजःअर्जुनः ॥ २० ॥ हृषीकेशमिति। तदेववाक्यमाह सेनयोरिति ॥ २१ ॥ यावदेतानिति। ननुत्वंयोद्धानतुयुद्धप्रेक्षकस्तत्राह कैःसहमया योद्धव्यम् ॥२२॥ योत्स्यमानानिति। धार्तराष्ट्रस्यदुर्योधनस्यप्रियंकर्तुमिच्छंतोयइहसमागताःतान्यावद्द्रक्ष्यामितावदुभयोःसेनयोर्मध्येमेरथंस्थापयेत्यन्वयः ॥२३॥

ततःकिंप्रवृत्तमित्यपेक्षायांसंजयउवाच एवमिति । गुडाकानिद्रातस्याईशेनजितनिद्रेणार्जुनेनैवमुक्तःसन् हेभारतधृतराष्ट्र ! सेनयोर्मध्येरथानामुत्तमंरथंहृषीकेशः स्थापितवान् ॥ २४॥ भीष्मद्रोणइति । महीक्षितांपितामहद्रोणराज्ञांचप्रमुखतःसंमुखेरथंस्थापयित्वा हेपार्थ ! एतान्कुरून्पश्येत्युवाच ॥ २५ ॥ ततःकिंप्रवृत्त मित्यतआह पितॄन्पितृव्यादीनित्यर्थः। पुत्रान्पौत्राननितिदुर्योधनादीनांयेपुत्राःपौत्राश्चतानित्यर्थः । सखीन्मित्राणि सुहृदःकृतोपकारांश्चापश्यत् ॥ २६ ॥ ततः

॥ संजयउवाच ॥ ॥ एवमुक्तोहृषीकेशोगुडाकेशेनभारत ॥ सेनयोरुभयोर्मध्येस्थापयित्वारथोत्तमम् ॥ २४ ॥ भीष्मद्रोणप्रमुखतः सर्वेषांचमहीक्षिताम् ॥ उवाचपार्थपश्यैतान्समवेतान्कुरूनिति ॥ २५ ॥ तत्रापश्यत्स्थितान्पार्थःपितॄनथपितामहान् ॥ आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥ श्वशुरान्सुहृदश्चैवसेनयोरुभयोरपि ॥ २६ ॥ तान्समीक्ष्यसकौंतेयःसर्वान्बंधूनवस्थितान् ॥ कृपया परयाविष्टोविषीदन्निदमब्रवीत् ॥ २७ ॥ ॥ अर्जुनउवाच ॥ ॥ दृष्ट्वेमंस्वजनंकृष्णयुयुत्सुंसमुपस्थितम् ॥ सीदंतिममगात्राणिमुखं चपरिशुष्यति ॥ २८ ॥ वेपथुश्चशरीरेमेरोमहर्षश्चजायते ॥ गांडीवंस्रंसतेहस्तात्त्वक्चैवपरिदह्यते ॥ २९ ॥

किंकृतवानित्यतआह तानिति । आविष्टोव्याप्तःयुक्तःविषीदन्विशेषेणसीदन् अवसादंग्लानिंलभमानः ॥ २७ ॥ किमब्रवीदित्यपेक्षायामाह दृष्ट्वेममित्यादियावदध्यायसमाप्ति। हेकृष्ण! योद्धुमिच्छंतंपुरतःसम्यगवस्थितंइमंबंधुजनंदृष्ट्वामदीयानिगात्राणिकरचरणादीनिसीदंतिविशीर्यंते ।किंच मुखंपरिसमंतात् शुष्यतिनिर्द्रवी भवति ॥ २८ ॥ किंच वेपथुश्चेति । वेपथुःकंपः रोमहर्षःरोमांचः स्रंसतेनिपतति परिदह्यतेसर्वतःसंतप्यते ॥ २९ ॥

अन्यच्च नचेति । विपरीतानिनिमित्तानिअनिष्टसूचकानिशकुनानिपश्यामि ॥ ३० ॥ किंच नचेति । स्वजनंआहवेयुद्धेहत्वाश्रेयःफलंनपश्यामि विजयादिकंफलं
किंनपश्यसीतिचेत्तत्राह नकांक्षइति ॥ ३१ ॥ एतदेवप्रपंचयति किंनइतिसार्धाभ्याम् । यदर्थमस्माकंराज्यादिकमपेक्षितंतएतेप्राणधनानित्यक्त्वात्यागमंगीकृत्ययु
द्धार्थमवस्थिताः अतःकिमस्माकंराज्यादिभिःकृत्यमित्यर्थः ॥ ३२ ॥ ३३ ॥ ननुयदिकृपयात्वमेतान्नहंसितर्हित्वामेतेराज्यलोभेनहनिष्यंत्येवअतस्त्वमेवैतान्ह

नचशक्नोम्यवस्थातुंभ्रमतीवचमेमनः ॥ निमित्तानिचपश्यामिविपरीतानिकेशव ॥ ३० ॥ नचश्रेयोऽनुपश्यामिहत्वास्वजनमाहवे ॥
नकांक्षेविजयंकृष्णनचराज्यंसुखानिच ॥ ३१ ॥ किंनोराज्येनगोविंदकिंभोगैर्जीवितेनवा ॥ येषामर्थेकांक्षितंनोराज्यंभोगाःसुखानिच
॥ ३२ ॥ तइमेऽवस्थितायुद्धेप्राणांस्त्यक्त्वाधनानिच ॥ आचार्याःपितरःपुत्रास्तथैवचपितामहाः ॥ ३३ ॥ मातुलाःश्वशुराःपौत्राःशा
लाःसंबंधिनस्तथा ॥ एतान्नहंतुमिच्छामिघ्नतोऽपिमधुसूदन ॥ ३४ ॥ अपित्रैलोक्यराज्यस्यहेतोःकिंनुमहीकृते ॥ निहत्यधार्तराष्ट्रान्नः
काप्रीतिःस्याज्जनार्दन ॥ ३५ ॥ पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥ तस्मान्नार्हावयंहंतुंधार्तराष्ट्रान्स्वबांधवान् ॥ स्वजनंहिकथं
हत्वासुखिनःस्याममाधव ॥ ३६ ॥

त्वाराज्यंभुंक्ष्वतत्राह एतानितिसार्धेन । घ्नतोप्यस्मान्घातयतोपिएतान्त्रैलोक्यराज्यस्यापिहेतोस्तत्प्राप्त्यर्थमप्यहंहंतुंनेच्छामि किंपुनर्महीमात्रप्राप्त्यर्थमित्यर्थः॥ ३४॥
॥३५॥ ननुच 'अग्निदोगरदश्चैवशस्त्रपाणिर्धनापहः ॥ क्षेत्रदारापहर्ताचषडेतेआततायिनः' इतिस्मरणात् अग्निदइत्यादिभिःषड्भिरपिहेतुभिरेतेतावदाततायिनः
आततायिनांचवधोयुक्तएव'आततायिनमायांतंहन्यादेवाविचारयन्॥नाततायिवधेदोषोहंतुर्भवतिकश्चन' इतिवचनात्तत्राहसार्धेन पापमिति।आततायिनमायांतमित्या

दिकमर्थशास्त्रंधर्मशास्त्राद्दुर्बलम् यथोक्तंयाज्ञवल्क्येन 'स्मृत्योर्विरोधेन्यायस्तुबलवान्व्यवहारतः॥अर्थशास्त्राच्चबलवद्धर्मशास्त्रमितिस्थितिः' तस्मादाततायिनाम प्येतेषामार्यादीनांवधेऽस्माकंपापमेवभवेत् अन्याय्यत्वादधर्मत्वाच्चैतद्वधस्य ॥ ३६ ॥ नचेहसुखंस्यादित्याह स्वजनंहीति । ननुतवैतेषामपिबंधुवधदोषेस मानेसतियथैवैतेबंधुवधदोषमंगीकृत्ययुद्धेप्रवर्तंते तथैवभवानपिप्रवर्ततांकिमनेनविषादेनेत्यतआह यद्यपीतिद्वाभ्याम् । राज्यलोभेनोपहतंभ्रष्टविवेकंचेतोयेषांतेएते दुर्योधनादयोयद्यपिदोषंनपश्यंति तथाप्यस्माभिर्दोषंप्रपश्यद्भिरस्मात्पापान्निवर्तितुंकथंनज्ञेयम् निवृत्तावेवबुद्धिःकर्तव्येत्यर्थः ॥३७॥३८॥ तमेवदोषंदर्शयति कुल

यद्यप्येतेनपश्यंतिलोभोपहतचेतसः ॥ कुलक्षयकृतंदोषंमित्रद्रोहेचपातकम् ॥ ३७ ॥ कथंनज्ञेयमस्माभिःपापादस्मान्निवर्तितुम् ॥
कुलक्षयकृतंदोषंप्रपश्यद्भिर्जनार्दन ॥ ३८ ॥ कुलक्षयेप्रणश्यंतिकुलधर्माःसनातनाः ॥ धर्मेनष्टेकुलंकृत्स्नमधर्मोऽभिभवत्युत ॥ ३९ ॥
अधर्माभिभवात्कृष्णप्रदुष्यंतिकुलस्त्रियः ॥ स्त्रीषुदुष्टासुवार्ष्णेयजायतेवर्णसंकरः ॥ ४० ॥ संकरोनरकायैवकुलघ्नानांकुलस्यच ॥
पतंतिपितरोह्येषांलुप्तपिंडोदकक्रियाः ॥ ४१ ॥ दोषैरेतैःकुलघ्नानांवर्णसंकरकारकैः ॥ उत्साद्यंतेजातिधर्माःकुलधर्माश्चशाश्वताः
॥ ४२ ॥ उत्सन्नकुलधर्माणांमनुष्याणांजनार्दन ॥ नरकेनियतंवासोभवतीत्यनुशुश्रम ॥ ४३ ॥

क्षयइति । सनातनाःपरंपराप्राप्ताः उतअपि अवशिष्टंकुलमधर्मोऽभिभवतिव्याप्नोति ॥३९॥ ततश्चअधर्माभिभवादिति॥४०॥एवंसति संकरइति । एषांकुलघ्नानांपि तरःपतंति हियस्मात् लुप्ताःपिंडोदकक्रियायेषांते ॥४१॥ उक्तंदोषमुपसंहरति दोषैरितिद्वाभ्याम् । उत्साद्यंतेलुप्यंतेजातिधर्माःवर्णधर्माःकुलधर्माश्चचकारादाश्रमध र्मादयोऽपिगृह्यंते॥४२॥उत्सन्नेति । उत्सन्नाःकुलधर्मायेषामितिउत्सन्नजातिधर्मादीनामप्युपलक्षणम् अनुशुश्रुमश्रुतवंतोवयम् 'प्रायश्चित्तमकुर्वाणाःपापेषुनिरता

नराः ॥ अपश्चात्तापिनः कष्टान्निरयान्यांतिदारुणान्' इत्यादिवचनेभ्यः ॥ ४३ ॥ बंधुवधाध्यवसायेनसंतप्यमानआह अहोइति । स्वजनंहंतुमुद्यताइति । यतएतन्महत
पातकंकर्तुमध्यवसायंकृतवंतोवयम् अहोबतकष्टमित्यर्थः ॥ ४४ ॥ एवंतप्तःसन्मृत्युमेवाशासानआह यदीति । अकृतप्रतीकारंतूष्णीमुपविष्टंमांयदिहनिष्यंतितर्हितद्ध
ननंममक्षेमतरमत्यंतंहितंभवेत् पापानिष्पत्तेः ॥ ४५ ॥ ततःकिंवृत्तमित्यपेक्षायां संजयउवाच एवमिति । संख्येसंग्रामे रथोपस्थेरथस्योपरिउपाविशत् उपविवेश शोकेन

अहोबतमहत्पापंकर्तुंव्यवसितावयम् ॥ यद्राज्यसुखलोभेनहंतुंस्वजनमुद्यताः ॥ ४४ ॥ यदिमामप्रतीकारमशस्त्रंशस्त्रपाणयः ॥ धार्तराष्ट्रा
रणेहन्युस्तन्मेक्षेमतरंभवेत् ॥ ४५ ॥ ॥ संजयउवाच ॥ एवमुक्त्वार्जुनःसंख्येरथोपस्थउपाविशत् ॥ विसृज्यसशरंचापंशोकसंविग्नमानसः
॥ ४६ ॥ इतिश्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रेश्रीकृष्णार्जुनसंवादेअर्जुनविषादयोगोनामप्रथमोऽध्यायः ॥ १ ॥
संजयउवाच ॥ तंतथाकृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ॥ विषीदंतमिदंवाक्यमुवाचमधुसूदनः ॥ १ ॥ ॥ श्रीभगवानुवाच ॥ कुतस्त्वाक
श्मलमिदंविषमेसमुपस्थितम् ॥ अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥

संविग्नंप्रकंपितंमानसंचित्तंयस्यसः ॥ ४६ ॥ इतिश्रीसुबोधिन्यांटीकायांश्रीधरस्वामिविरचितायांप्रथमोऽध्यायः ॥ १ ॥ ॥ ततःकिंवृत्तमित्यपेक्षायांसंजय
उवाच तंतथेति । अश्रुभिःपूर्णेआकुलेईक्षणेयस्यतम् तथोक्तप्रकारेणविषीदंतमर्जुनंप्रतिमधुसूदनइदंवाक्यमुवाच ॥ १ ॥ तदेववाक्यमाह श्रीभगवानुवाच कुत
इति । कुतोहेतोः त्वाइतित्वाम् विषमेसंकटे इदंकश्मलंसमुपस्थितंअयंमोहःप्राप्तः यतआर्यैरसेवितम् अस्वर्ग्यमधर्म्यम् अयशस्करंच ॥ २ ॥

तस्मात् क्लैब्यमिति । हेपार्थ! क्लैब्यंकातर्यं मास्मगमः नप्राप्नुहि यतस्त्वय्येतन्नोपपद्यतेयोग्यंनभवति क्षुद्रंतुच्छम् हृदयदौर्बल्यंकातर्यंत्यक्त्वायुद्धायोत्तिष्ठ हेपरंतपशत्रु
तापन ॥ ३ ॥ नाहंकातर्येणयुद्धादुपरतोऽस्मि किंतुयुद्धस्यान्याय्यत्वादित्यर्जुनउवाच कथमिति । भीष्मद्रोणौपूजायामर्हौयोग्यौतौप्रतिकथमहंयोत्स्यामि तत्रापिइ
षुभिः यत्रवाचापियोत्स्यामीतिवक्तुमनुचितंतत्रबाणैःकथंयोत्स्यामीत्यर्थः । हेअरिसूदनशत्रुसूदन ॥ ४ ॥ तर्हितवदेहयात्रापिनस्यादितिचेत्तत्राह गुरूनिति ।
गुरून्द्रोणादीनहत्वापरलोकविरुद्धोगुरुवधस्तमकृत्वाइहलोकेभिक्षान्नमपिभोक्तुं श्रेयः उचितम् विपक्षेतुनकेवलंपरत्रदुःखम् इहैवतुनरकदुःखमनुभवेयामित्याह

क्लैब्यंमास्मगमःपार्थनैतत्त्वय्युपपद्यते ॥ क्षुद्रंहृदयदौर्बल्यंत्यक्त्वोत्तिष्ठपरंतप ॥ ३ ॥ ॥ अर्जुनउवाच ॥ कथंभीष्ममहंसंख्येद्रोणंचम
धुसूदन ॥ इषुभिःप्रतियोत्स्यामिपूजार्हावरिसूदन ॥ ४ ॥ गुरूनहत्वाहिमहानुभावान्श्रेयोभोक्तुंभैक्ष्यमपीहलोके ॥ हत्वाऽर्थकामां
स्तुगुरूनिहैवभुंजीयभोगान्रुधिरप्रदिग्धान् ॥ ५ ॥ नचैतद्विद्मःकरतन्नोगरीयोयद्वाजयेमयादिवानोजयेयुः ॥ यानेहत्वानजिजीविषा
मस्तेऽवस्थिताःप्रमुखेधार्तराष्ट्राः ॥ ६ ॥

हत्वेति । गुरून्हत्वाइहैवतुरुधिरेणप्रदिग्धान्प्रकर्षेणालिप्तान् अर्थकामात्मकान्भोगानहंभुंजीयअश्नीयाम् यद्वा अर्थकामानितिगुरूणांविशेषणम् अर्थतृष्णाकुलत्वादेते
तावद्युद्धान्ननिवर्तेरन् तस्मादेतद्वधःप्रसज्येतैवेत्यर्थः । तथाचयुधिष्ठिरंप्रतिभीष्मेणोक्तम् 'अर्थस्यपुरुषोदासोदासस्त्वर्थोनकस्यचित् ॥ इतिसत्यंमहाराजबद्धोऽस्म्यर्थे
ननकौरवैः' इति ॥५॥ किंच यद्यपिअधर्ममंगीकरिष्यामस्तथापिकिमस्माकंजयःपराजयोवाभवेदितिनज्ञायतइत्याह नचेति । एतद्द्वयोर्मध्येनोऽस्माकंकतरत्किंनाम
गरीयोऽधिकतरंभविष्यतीतिनविद्मः तदेवद्वयंदर्शयति यद्वा एतान्वयंजयेमजेष्यामःयदिवानोऽस्मानेतेजयेयुःजेष्यंतीति किंचास्माकंराजयोऽपिफलतःपराजयए वे

त्याह यानेवहत्वाजीवितुंनेच्छामस्तएवैतेसंमुखेअवस्थिताः ॥ ६ ॥ कार्पण्येति । तस्मात्कार्पण्यदोषोपहतस्वभावः एतान्हत्वाकथंजीविष्यामइतिकार्पण्यं दोषश्चस्व
कुलक्षयकृतःताभ्यामुपहतोऽभिभूतःस्वभावःशौर्यादिलक्षणोयस्यसोऽहंत्वांपृच्छामि तथाधर्मेसंमूढंचेतोयस्यसःयुद्धंत्यक्त्वाभिक्षाटनमपिक्षत्रियस्यधर्मोवाऽधर्मोवेति
संदिग्धचित्तःसन्नित्यर्थः अतोमेयन्निश्चितंश्रेयोयुक्तंस्यात्तद्ब्रूहि किंच तेऽहंशिष्यःशासनार्हः अतस्त्वांप्रपन्नंशरणागतंमांशाधिशिक्षय ॥७॥ त्वमेवाविचार्ययद्युक्तं

कार्पण्यदोषोपहतस्वभावःपृच्छामित्वांधर्मसंमूढचेताः ॥ यच्छ्रेयःस्यान्निश्चितंब्रूहितन्मेशिष्यस्तेऽहंशाधिमांत्वांप्रपन्नम् ॥ ७ ॥ नहिप्रपश्या
मिममापनुद्याद्यच्छोकमुच्छोषणमिंद्रियाणाम् ॥ अवाप्यभूमावसपत्नमृद्धंराज्यंसुराणामपिचाधिपत्यम् ॥ ८ ॥ ॥ संजयउवाच ॥ एवमु
क्त्वाहृषीकेशंगुडाकेशःपरंतप ॥ नयोत्स्यइतिगोविंदमुक्त्वातूष्णींबभूवह ॥ ९ ॥ तमुवाचहृषीकेशःप्रहसन्निवभारत ॥ सेनयो
रुभयोर्मध्येविषीदंतमिदंवचः ॥ १० ॥ ॥ श्रीभगवानुवाच ॥ अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्चभाषसे ॥ गतासूनगतासूं
श्चनानुशोचंतिपंडिताः ॥ ११ ॥

तत्कुर्विंतिचेत्तत्राह नहीति । इंद्रियाणामुच्छोषणमतिशोषणकरंमदीयंशोकंयत्कर्मापनुद्यादपनयेत्तदहंनप्रपश्यामि यद्यपिभूमौनिष्कंटकंसमृद्धंराज्यंप्राप्स्यामि तथा
सुरेंद्रत्वमपियदिप्राप्स्यामि एवमभीष्टंतत्सर्वमवाप्यापिशोकापनोदनोपायंनप्रपश्यामीत्यन्वयः ॥ ८ ॥ एवमुक्त्वाऽर्जुनःकिंकृतवानित्यपेक्षायांसंजय उवाच एव
मितिस्पष्टार्थः ॥ ९ ॥ ततःकिंवृत्तमित्यपेक्षायामाह तमुवाचेति । प्रहसन्निवप्रसन्नमुखःसन्नित्यर्थः ॥ १० ॥ देहात्मनोरविवेकादस्यैवंशोकोभवतीतितद्विवेकप्रद
र्शनार्थंश्रीभगवानुवाच अशोच्यानिति । शोकस्याविषयभूतानेवबंधूंस्त्वमन्वशोचःअनुशोचितवानसि 'दृष्ट्वेमंस्वजनंकृष्णयुयुत्सुंसमुपस्थितामि'त्यादिनातत्र 'कुत

स्त्वाकश्मलमिदंविषमेसमुपस्थितमि'त्यादिनामयाबोधितोपि पुनश्चप्रज्ञावतांपंडितानांवादानशब्दान्कथंभीष्ममहंसंख्यइत्यादीन्केवलंभाषसे नतुपंडितोऽसि यतः
गतासूनगतप्राणान्बंधूनगतासूंश्चजीवतोपिबंधुहीनाएतेकथंजीविष्यंतीतिनानुशोचंति ॥ ११ ॥ अशोच्यत्वेहेतुमाह नत्वेवेति । यथाऽहंपरमेश्वरोजातुकदाचित्
लीलाविग्रहस्याविर्भावेतिरोभावेपिनासमितिनैव अपितुआसमेव अनादित्वात् नचत्वंनासीःनाभूःअपित्वासी रेव, इमेचजनाधिपाःनृपाः नासन्निर्तिन अपि
तुआसन्नैव मदंशत्वात्, तथाऽतःपरंइतउपर्यपिनभविष्यामोनस्थास्यामइतिचनैवअपितुस्थास्यामएव जन्ममरणशून्यत्वादशोच्याइत्यर्थः ॥ १२ ॥ नन्वीश्वरस्य
तवजन्मादिशून्यत्वंसत्यमेव जीवानांतुजन्ममरणेप्रसिद्धेतत्राह देहिनइति । देहिनो देहाभिमानिनोजीवस्ययथाऽस्मिन्स्थूलदेहेकौमाराद्यवस्थादेहनिबंधनाएव

नत्वेवाहंजातुनासंनत्वंनेमेजनाधिपाः ॥ नचैवनभविष्यामःसर्वेवयमतःपरम् ॥ १२ ॥ देहिनोऽस्मिन्यथादेहेकौमारंयौवनंजरा ॥ तथादे
हांतरप्राप्तिर्धीरस्तत्रनमुह्यति ॥ १३ ॥ मात्रास्पर्शास्तुकौंतेयशीतोष्णसुखदुःखदाः ॥ आगमापायिनोनित्यास्तांस्तितिक्षस्वभारत ॥१४॥

नतुस्वतःपूर्वावस्थानाशेऽवस्थांतरोत्पत्तावपिसएवाहमितिप्रत्यभिज्ञानात्तथैवैतद्देहनाशेदेहांतरप्राप्तिरपिलिंगदेहानिबंधना नतुतावतात्मनोनाशः जातमात्रस्यपूर्वसं
स्कारिणस्तन्यपानादौप्रवृत्तिदर्शनात् अतोधीरः धीमांस्तत्रतयोर्देहनाशोत्पत्त्योर्नमुह्यति आत्मैवमृतोजातश्चेतिनमन्यते ॥ १३ ॥ ननुगतानागतानहंनशोचामि
किंतुतद्वियोगादिदुःखभाजमात्मानमेवेतिचेत्तत्राह मात्रास्पर्शाइति । मीयंतेज्ञायंतेविषयाआभिरितिमात्राइंद्रियवृत्तयः तासांस्पर्शाःविषयैःसंबंधाः तेशीतोष्णादि
प्रदाभवंति तेत्वागमापायित्वादनित्याअस्थिराः अतस्तांस्तितिक्षस्वसहस्व यथाजलातपादिसंपर्कास्तत्तत्कालकृताःस्वभावतःशीतोष्णादिप्रयच्छंति एवमिष्टसंयोग

वियोगाअपिसुखदुःखादिप्रयच्छंतितेषांचास्थिरत्वात्सहनंतवधीरस्योचितं नतुतन्निमित्तहर्षविषादपारवश्यमित्यर्थः ॥ १४ ॥ तत्प्रतीकारप्रयत्नादपितत्सहनमेवो चितंमहाफलत्वादित्याह यमिति। एतेमात्रास्पर्शाःयंपुरुषंनव्यथयंति नाभिभवंतिसमेसुखदुःखेयस्यतम् सतैरविक्षिप्यमाणोधर्मज्ञानद्वाराअमृतत्वायमोक्षायकल्प तेयोग्योभवति ॥ १५ ॥ ननुतथाऽपिशीतोष्णादिकमतिदुःसहंकथंसोढव्यम् अत्यंतंतत्सहनेचकदाचिद्देहनाशस्यापिसंभवादित्याशंक्यतत्त्वविचारतःसर्वंसोढुं शक्यमित्याशयेनाह नेति। असतः अनात्मधर्मत्वादविद्यमानस्यशीतोष्णादेरात्मनिभावः सत्तानविद्यते तथासतः सत्स्वभावस्यात्मनो भावोविनाशोनविद्यते

**यंहिनव्यथयंत्येतेपुरुषंपुरुषर्षभ ॥ समदुःखसुखंधीरंसोऽमृतत्वायकल्पते ॥ १५ ॥ नासतोविद्यतेभावोनाभावोविद्यतेसतः ॥ उभयोरपिदृष्टोंऽतस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥ अविनाशितुतद्विद्धियेनसर्वमिदंततम् ॥ विनाशमव्ययस्यास्यनकश्चित्कर्तुमर्हति ॥ १७ ॥ अंतवंतइमेदेहानित्यस्योक्ताःशरीरिणः ॥ अनाशिनोऽप्रमेयस्यतस्माद्युध्यस्वभारत ॥ १८ ॥**

एवमुभयोःसदसतोरंतोनिर्णयोदृष्टः कैस्तत्त्वदर्शिभिर्वस्तुयाथात्म्यविद्भिः एवंभूतविवेकेनसहस्वेत्यर्थः ॥ १६ ॥ तत्रसत्स्वभावमविनाशिवस्तुसामान्येनोक्तंविशे षतोदर्शयति अविनाशीति । येनसर्वमिदमागमापायधर्मकंदेहादिकंततं तत्साक्षित्वेनव्याप्तम् तत्तुआत्मस्वरूपंअविनाशि विनाशशून्यंविद्धिजानीहि तत्रहेतुमाह विनाशमिति ॥ १७ ॥ आगमापायधर्मकंसंदर्शयति अंतवंतइति । अंतोविनाशोविद्यतेयेषांतेअंतवंतः नित्यस्यसर्वदैकरूपस्य शरीरिणःशरीरवतः अतएवअना शिनः विनाशरहितस्याप्रमेयस्यायपरिच्छिन्नस्यात्मनइमेसुखदुःखादिधर्मकादेहाउक्तास्तत्त्वदर्शिभिः यस्मादेवमात्मनोनविनाशः नचसुखदुःखादिसंबंधः तस्मा न्मोहजंशोकंत्यक्त्वायुद्धचस्व स्वधर्मंमात्याक्षीरित्यर्थः ॥ १८ ॥

तदेवंभीष्मादिमृत्युनिमित्तःशोकोनिवारितःयच्चात्मनोहंतृत्वनिमित्तंदुःखमुक्तम् एतान्नहंतुमिच्छामीत्यादिना तदपितद्वदेवनिर्निमित्तमित्याह यएनमिति । एनमा त्मानं आत्मनोहननक्रियायांकर्मत्वंकर्तृत्वमपिनास्तीत्यर्थः तत्रहेतुः नायमिति ॥ १९ ॥ नहन्यतइत्येतदेवषड्भावविकारशून्यत्वेनद्रढयति नेति । नजायतइति जन्मप्रतिषेधः नम्रियतेचेतिविनाशप्रतिषेधः वाशब्दौचार्थे नचायंभूत्वाउत्पद्यभविताभवतिअस्तित्वंभजते किंतुप्रागेवस्वतःसद्रूपइतिजन्मानंतरास्तित्वलक्षण द्वितीयविकारप्रतिषेधः तत्रहेतुःयस्मादजः योहिजायतेसजन्मांतरमस्तित्वंभजते नतुयःस्वयमेवास्तिसभूयोऽप्यन्यदस्तित्वंभजतइत्यर्थः नित्यःसर्वदैकरूपइतिवृ द्धिप्रतिषेधः शाश्वतःशश्वद्भवइत्यपक्षयप्रतिषेधः पुराणइतिविपरिणामप्रतिषेधः पुराऽपि नवएवनतुपरिणामतोरूपांतरंप्राप्यनवोभवतीत्यर्थः यद्वा नभवितेत्यस्यानु

यएनंवेत्तिहंतारंयश्चैनंमन्यतेहतम् ॥ उभौतौनविजानीतोनायंहंतिनहन्यते॥१९॥नजायतेम्रियतेवाकदाचिन्नायंभूत्वाभविताावानभूयः ॥
अजोनित्यःशाश्वतोयंपुराणोनहन्यतेहन्यमानेशरीरे॥२०॥वेदाविनाशिनंनित्यंयएनमजमव्ययम्॥कथंसपुरुषःपार्थकंघातयतिहंतिकम्२१

षंगंकृत्वाभूयोऽधिकंयथाभवतितथानभवतीतिवृद्धिप्रतिषेधः अजोनित्यइतिचोभयवृद्ध्यभावेहेतुरित्यपौनरुक्त्यम तदेव जायतेअस्तिवर्धतेपरिणमतेअपक्षीयते नश्यतीत्येवंयास्कादिभिर्वेदवादिभिरुक्ताःषड्भावविकारानिरस्ताः यदर्थमेतेविकारानिरस्तास्तंप्रस्तुतंविनाशाभावमुपसंहरति नहन्यतेहन्यमानेशरीरइति ॥ २० ॥ अतएवंहतृत्वाभावोऽपिपूर्वोक्तःप्रसिद्धइत्याह वेदेति । नित्यंवृद्धिशून्यमव्ययमपक्षयशून्यम अजमविनाशिनंचयोवेद सपुरुषःकंहंति कथंवाहंति एवंभूतस्यवधे साधनाभावात् तथास्वयंप्रयोजकोभूत्वान्येनकंघातयति नकंचिदपिकथंचिदपीत्यर्थः अनेनमय्यपिप्रयोजकत्वाद्दोषदृष्टिंमाकार्षीः इत्युक्तंभवति ॥ २१ ॥

नन्वात्मनोऽविनाशित्वेपितदीयशरीरनाशंपर्यालोच्यशोचामीतिचेत्तत्राह वासांसीति। कर्मनिबंधनभूतानांदेहानामवश्यंभावित्वान्नजीर्णदेहनाशेशोकावकाशइत्यर्थः ॥ २२ ॥ कथंहंतीत्यनेनोक्तंवधसाधनाभावंदर्शयन्नाविनाशित्वमात्मनःस्फुटीकरोति नैनमिति। आपोनैनंक्लेदयंति मृदुकरणेनशिथिलंनकुर्वंति ॥ २३ ॥ तत्रहेतूनाह अच्छेद्यइतिसार्धेन निरवयवत्वादच्छेद्योऽयमक्लेद्यश्चअमूर्तत्वात्अदाह्योद्रवत्वाभावादशोष्यइतिभावः इतश्चछेदादियोग्योनभवतियतोनित्यः अविनाशीसर्वत्रगतः स्थाणुःस्थिरस्वभावःरूपांतरापत्तिशून्यः अचलःपूर्वरूपापरित्यागी सनातनः अनादिः ॥ २४ ॥ किंचअव्यक्तश्चक्षुराद्यविषयः

वासांसिजीर्णानियथाविहायनवानिगृह्णातिनरोऽपराणि ॥ तथाशरीराणिविहायजीर्णान्यन्यानिसंयातिनवानिदेही ॥ २२ ॥ नैनंछिंदंतिशस्त्राणिनैनंदहतिपावकः॥ नचैनंक्लेदयंत्यापोनशोषयतिमारुतः ॥ २३ ॥ अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्यएवच ॥ नित्यः सर्वगतःस्थाणुरचलोऽयंसनातनः॥२४॥ अव्यक्तोऽयमचिंत्योऽयमविकार्योऽयमुच्यते ॥ तस्मादेवंविदित्वैनंनानुशोचितुमर्हसि ॥ २५ ॥ अथचैनंनित्यजातंनित्यंवामन्यसेमृतम् ॥ तथापित्वंमहाबाहोनैनंशोचितुमर्हसि ॥ २६ ॥

अचिंत्योमनसोऽप्यविषयः अविकार्यःकर्मेंद्रियाणामप्यगोचरइत्यर्थः उच्यतइतिनित्यत्वादावभियुक्तोक्तिंप्रमाणयति उपसंहरतितस्मादिति ॥ २५ ॥तदेवमात्मनोजन्मविनाशाभावान्नशोकःकार्यइत्युक्तम् इदानींदेहेनसहात्मनोजन्मतद्विनाशेनचविनाशमंगीकृत्यापिशोकोनकार्यइत्याह अथचेति। अथचयद्यप्येनमात्मानंनित्यंसर्वदातत्तद्देहेजातेजातंमन्यसे तथातद्देहेमृतेमृतंमन्यसे पुण्यपापयोस्तत्फलभूतयोर्जन्ममरणयोरात्मगामित्वात् तथापि त्वंशोचितुंनार्हसि ॥ २६ ॥

कुतइत्यतआह जातस्येति।हियस्मात्जातस्यस्वारंभककर्मक्षयेमृत्युर्ध्रुवोनिश्चितः मृतस्यतत्तद्देहकृतेनकर्मणाजन्मापिध्रुवमेव तत्तस्मादेवमपरिहार्येऽर्थेऽवश्यंभावि निजन्ममरणलक्षणेऽर्थेत्वंविद्वान्शोचितुंनार्हसि योग्योनभवसीत्यर्थः ॥ २७ ॥ किंच देहादीनांचस्वभावंपर्यालोच्यतदुपाधिकेआत्मनोजन्ममरणेचशोकोनकार्यइत्याह अव्यक्तादीनीति। अव्यक्तंप्रधानंतदेवआदिःपूर्वरूपंयेषांतान्यव्यक्तादीनि भूतानिशरीराणिकारणात्मनापिस्थितानामेवोत्पत्तेः तथाव्यक्तंअभिव्यक्तंमध्यंजन्ममरणांतरालस्थितिलक्षणंयेषाम् अव्यक्तेनिधनंलयोयेषांतानीमान्येवंभूतान्येवतत्रतेषुकापरिदेवनाकः शोकनिमित्तोविलापः प्रतिबुद्धस्यस्वप्नदृष्टवस्तुष्विवशोकोन

जातस्यहिध्रुवोमृत्युर्ध्रुवंजन्ममृतस्यच ॥ तस्मादपरिहार्येऽर्थेनत्वंशोचितुमर्हसि ॥ २७ ॥ अव्यक्तादीनिभूतानिव्यक्तमध्यानिभारत ॥ अव्यक्तनिधनान्येवतत्रकापरिदेवना ॥ २८ ॥ आश्चर्यवत्पश्यतिकश्चिदेनमाश्चर्यवद्वदतितथैवचान्यः ॥ आश्चर्यवच्चैनमन्यःशृणोतिश्रुत्वाप्येनंवेदनचैवकश्चित् ॥ २९ ॥ देहीनित्यमवध्योऽयंदेहेसर्वस्यभारत ॥ तस्मात्सर्वाणिभूतानिनत्वंशोचितुमर्हसि ॥ ३० ॥ स्वधर्ममपिचावेक्ष्यनविकंपितुमर्हसि ॥ धर्म्याद्धियुद्धाच्छ्रेयोऽन्यत्क्षत्रियस्यनविद्यते ॥ ३१ ॥

युज्यतइत्यर्थः ॥ २८ ॥ कुतस्तर्हिविद्वांसोऽपिलोकेशोचंति आत्माज्ञानादेवेत्याशयेनात्मनोदुर्विज्ञेयतामाह आश्चर्यवदिति। कश्चिदेनमात्मानं शास्त्राचार्योपदेशाभ्यांपश्यन्आश्चर्यवत्पश्यति सर्वगतस्यानित्यज्ञानानंदस्वभावस्यात्मनोऽलौकिकत्वादैंद्रजालिकवदघटमानंपश्यन्निवविस्मयेनपश्यतिअसंभावनाभिभूतत्वात् तथा आश्चर्यवदन्योवदतिचशृणोतिचान्यःकश्चित्पुनःविपरीतभावनाभिभूतः श्रुत्वापिनैववेद चशब्दादुक्त्वापिनसम्यग्वेदेतिद्रष्टव्यम् ॥ २९॥ तदेवंदुर्बोधमात्मतत्त्वंसंक्षेपेणोपदिशन्अशोच्यत्वमुपसंहरति देहीति ॥ ३० ॥ यच्चोक्तमर्जुनेन'वेपथुश्चशरीरेमेरोमहर्षश्चजायत'इतितदप्ययुक्तमित्याह स्वधर्ममिति। आत्मनोनाशाभावादे

वैतेषांहननेऽपिविकंपितुंनार्हसि किंच स्वधर्ममपिअवेक्ष्यविकंपितुंनार्हसीतिसंबंधः यच्चोक्तं'नचश्रेयोऽनुपश्यामिहत्वास्वजनमाहव'इत्यादितत्राह धर्म्यादिति। धर्मादनपेतान्न्याय्याद्युद्धादन्यत् ॥३१॥ किंचमहतिश्रेयसिस्वयमेवोपगतेसति कुतोविकंपसइत्याह यदृच्छयेति। यदृच्छयाप्रार्थितमेवोपपन्नंप्राप्तमीदृशंयुद्धंसुखिनः सभाग्याएवलभंते यतोनिरावरणंस्वर्गद्वारमेवैतत् यद्वा यएवंविधंयुद्धंलभंतेतएवसुखिनइत्यर्थः एतेन 'स्वजनंहिकथंहत्वासुखिनःस्याम'तियदुक्तंतन्निरस्तं भवति ॥३२॥ विपक्षेदोषमाह अथचेत्त्वमिति ॥३३॥ किंच अकीर्तिमिति। अव्ययांशाश्वतीं संभावितस्यबहुमानितस्याकीर्तिर्मरणादतिरिच्यते अधिकतराभवति

**यदृच्छयाचोपपन्नंस्वर्गद्वारमपावृतम् ॥ सुखिनःक्षत्रियाःपार्थलभंतेयुद्धमीदृशम् ॥ ३२ ॥ अथचेत्त्वमिमंधर्म्यंसंग्रामंनकरिष्यसि ॥ ततःस्वधर्मंकीर्तिंचहित्वापापमवाप्स्यसि ॥ ३३ ॥ अकीर्तिंचापिभूतानिकथयिष्यंतितेऽव्ययाम् ॥ संभावितस्यचाकीर्तिर्मरणाद तिरिच्यते ॥ ३४ ॥ भयाद्रणादुपरतंमंस्यंतेत्वांमहारथाः ॥ येषांचत्वंबहुमतोभूत्वायास्यसिलाघवम् ॥ ३५ ॥ अवाच्यवादांश्चबहून्वदि ष्यंतितवाहिताः ॥ निंदंतस्तवसामर्थ्यंततोदुःखतरंनुकिम् ॥ ३६ ॥ हतोवाप्राप्स्यसिस्वर्गंजित्वावाभोक्ष्यसेमहीम् ॥ तस्मादुत्तिष्ठकौंते ययुद्धायकृतनिश्चयः ॥ ३७ ॥**

॥ ३४ ॥ किंच भयादिति। येषांबहुगुणत्वेनत्वंपूर्वंसंमतोऽभूस्तएवभयेनसंग्रामात्त्वांनिवृत्तंमन्येरन्ततश्चपूर्वंबहुमतोभूत्वालाघवंयास्यसि ॥ ३५ ॥ किंच अवाच्येति। अवाच्यान्वादान्वचनानर्हान्शब्दांस्तवाहितास्त्वच्छत्रवोवदिष्यंति ॥ ३६ ॥ यच्चोक्तं'नचैतद्विद्मःकतरन्नोगरीयोयद्वाजयेमयदिवानोजयेयुरि'तितत्राह। हतोवेति। पक्षद्वयेऽपितवलाभएवेत्यर्थः ॥ ३७ ॥

यदप्युक्तंपापमेवाश्रयेदस्मानितितत्राह सुखदुःखइति । सुखदुःखेसमेकृत्वा तथातयोःकारणभूतौयौलाभालाभावपितयोरपिकारणभूतौजयाजयावपिसमौकृत्वाएते
षांसमत्वेकारणंहर्षविषादराहित्यं युज्यस्वसन्नद्धोभव सुखाद्यभिलाषंहित्वास्वधर्मबुद्ध्यायुद्ध्यमानःपापंनप्राप्स्यसीत्यर्थः ॥ ३८ ॥ उपदिष्टंज्ञानयोगमुपसंहरंस्ता
त्साधनंकर्मयोगंप्रस्तौति एषातइति । सम्यक्ख्यायतेप्रकाश्यतेवस्तुतत्त्वमनयेतिसंख्यासम्यक्ज्ञानंतस्मिन्प्रकाशमानमात्मतत्त्वंसांख्यंतस्मिन्करणीयाबुद्धिरेषातव
भिहिता एवमभिहितायामपिसांख्यबुद्धौतवचेदात्मतत्त्वमपरोक्षंनसंभवतितर्ह्यंतःकरणशुद्धिद्वाराऽऽत्मतत्त्वापरोक्षार्थंकर्मयोगेत्विमांबुद्धिंशृणु ययाबुद्ध्यायुक्तःपरमे

सुखदुःखेसमेकृत्वालाभालाभौजयाजयौ ॥ ततोयुद्धाययुज्यस्वनैवंपापमवाप्स्यसि ॥ ३८ ॥ एषातेऽभिहितासांख्येबुद्धिर्योगेत्विमां
शृणु ॥ बुद्ध्यायुक्तोययापार्थकर्मबंधंप्रहास्यसि ॥ ३९ ॥ नेहाभिक्रमनाशोऽस्तिप्रत्यवायोनविद्यते ॥ स्वल्पमप्यस्यधर्मस्यत्रायतेमह
तोभयात् ॥ ४० ॥ व्यवसायात्मिकाबुद्धिरेकेहकुरुनंदन ॥ बहुशाखाह्यनंताश्चबुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥

श्वरार्पितकर्मयोगेनशुद्धांतःकरणःसन् तत्प्रसादप्राप्तापरोक्षज्ञानेनकर्मात्मकंबंधंप्रकर्षेणहास्यसि त्यक्ष्यसि ॥ ३९ ॥ ननुकृष्यादिवत्कर्मणांकदाचिद्विघ्नबाहुल्यने
फलेव्यभिचारान्मंत्राद्यंगवैगुण्येनचप्रत्यवायसंभवात्कुतःकर्मयोगेनकर्मबंधप्रहरणंतत्राह नेहेति । इहनिष्कामकर्मयोगेअभिक्रमस्यप्रारंभस्यनाशोनिष्फलत्वंनास्ति
प्रत्यवायश्चनविद्यतेईश्वरोद्देशेनैवविघ्नवैगुण्याद्यसंभवात् किंच अस्यधर्मस्यस्वल्पमापिउपक्रममात्रमपिकृतंमहतोभयात्संसारात्त्रायतेरक्षति नतुकाम्यकर्मवत्
किंचिदंगवैगुण्यादिनानैष्फल्यमस्येत्यर्थः ॥ ४० ॥ कुतइत्यपेक्षायामुभयोर्वैषम्यमाह व्यवसायेति । इहईश्वराराधनलक्षणेकर्मयोगेव्यवसायात्मिकापरमेश्वरभक्त्यैव

ध्रुवंतरिष्यामीतिनिश्चयात्मिकाएकैवैकनिष्ठैवबुद्धिर्भवतिअव्यवसायिनांतुबहिर्मुखानांकामिनांकामानामानंत्यादनंताः तत्रापिकर्मगुणफलादिभेदात्बहुशाखाश्चबुद्धयोभवंति ईश्वराराधनार्थंहिनित्यनैमित्तिकंकर्मकिंचिदंगवैगुण्येनापिननश्यति यथाशक्नुयात्तथाकुर्यादितिहितद्विधीयते नचवैगुण्यम ईश्वरोद्देशेनैववैगुण्योपरमात् नतुतथाकाम्यंकर्म “अग्निहोत्रंजुहुयात्स्वर्गकामः, दध्नेंद्रियकामोजुहुयात्” अतोमहद्वैषम्यामितिभावः ॥४१॥ ननुकामिनोऽपिकष्टान्कामान्विहायव्यवसायात्मिकामेवबुद्धिंकिंनकुर्वंतितत्राह यामिति। पुष्पितांविषलतावदापातरमणीयांप्रकृष्टांपरमार्थफलपरामेववदंतिवाचंस्वर्गादिफलश्रुतिंये तेषांतयावाचाऽपहृतचेतसांव्यवसायात्मिकाबुद्धिर्नविधीयतइतितृतीयेनान्वयः किमितितथावदंति यतोऽविपश्चितोमूढाः तत्रहेतुः वेदेयेवादाःअर्थवादाः “अक्षय्यंहवैचातुर्मास्ययाजिनः सुकृ

यामिमांपुष्पितांवाचंप्रवदंत्यविपश्चितः ॥ वेदवादरताःपार्थनान्यदस्तीतिवादिनः ॥ ४२ ॥ कामात्मानःस्वर्गपराजन्मकर्मफलप्रदाम् ॥ क्रियाविशेषबहुलांभोगैश्वर्यगतिंप्रति ॥ ४३ ॥ भोगैश्वर्यप्रसक्तानांतयापहृतचेतसाम् ॥ व्यवसायात्मिकाबुद्धिःसमाधौनविधीयते ॥ ४४ ॥

तंभवति, अपामसोमममृताअभूम” इत्याद्याः तेष्वेवरताःप्रीताः अतएवअतःपरमन्यदीश्वरतत्त्वंप्राप्यंनास्तीतिवचनशीलाः ॥ ४२ ॥ अतएवकामात्मानइति कामात्मानःकामाकुलचित्ताःअतःस्वर्गएवपरःपुरुषार्थोयेषांते जन्मचतत्रकर्माणिचतत्फलानिचप्रददातीतितथाताम् भोगैश्वर्ययोर्गतिंप्राप्तिंप्रतिसाधनभूतायेक्रियाविशेषाःतेबहुलायस्यांतांप्रवदंतीत्यनुषंगः ॥ ४३ ॥ ततश्च भोगैश्वर्यप्रसक्तानामिति भोगैश्वर्ययोःप्रसक्तानांअभिनिविष्टानां तयापुष्पितयावाचाप्रहृतंआकृष्टंचेतोयेषांतेषां समाधिःचित्तैकाग्र्यंपरमेश्वरैकाग्र्याभिमुखत्वंतस्मिन्निश्चयात्मिकाबुद्धिर्नविधीयते कर्मकर्तरिप्रयोगोनोत्पद्यतइत्यर्थः ॥ ४४ ॥

ननुचयदिस्वर्गादिकंपरमंफलंनभवतितर्हिकिमितिवेदैस्तत्साधनतयाकर्माणिविधीयंतेतत्राह त्रैगुण्यविषयाइति । त्रिगुणात्मकाःसकामायेऽधिकारिणस्तद्विषयास्तेषां कर्मफलसंबंधप्रतिपादकावेदाः त्वंतुनिस्त्रैगुण्योनिष्कामोभव तत्रोपायमाह निर्द्वंद्वःसुखदुःखशीतोष्णादियुगुलानिद्वंद्वानितद्रहितोभव तानिसहस्वेत्यर्थः कथमित्यत्राह नित्यसत्वस्थः सन्धैर्यमवलंब्येत्यर्थः तथानिर्योगक्षेमः अप्राप्तस्वीकारोयोगः प्राप्तपरिपालनंक्षेमं तद्रहितः आत्मवान्अप्रमत्तः नहिद्वंद्वाकुलस्ययोगक्षेमव्यापृतस्यचप्रमादिनः त्रैगुण्यातिक्रमः संभवतीति ॥ ४५ ॥ ननुवेदोक्तनानाफलपरित्यागेननिष्कामतयाईश्वराराधनाविषयाव्यवसायात्मिकाबुद्धिरे

त्रैगुण्यविषयावेदानिस्त्रैगुण्योभवार्जुन ॥ निर्द्वंद्वोनित्यसत्वस्थोनिर्योगक्षेम आत्मवान् ॥४५॥ यावानर्थउदपानेसर्वतःसंप्लुतोदके ॥ तावान्सर्वेषुवेदेषुब्राह्मणस्यविजानतः ॥ ४६ ॥ कर्मण्येवाधिकारस्तेमाफलेषुकदाचन ॥ माकर्मफलहेतुर्भूर्मातेसंगोऽस्त्वकर्मणि ॥ ४७ ॥

वेत्याशंक्याह यावानिति । उदकंपीयतेऽस्मिन्नित्युदपानंवापीकूपतडागादितस्मिन्स्वल्पोदकेएकत्रकृत्स्नस्याभावात् तत्रतत्रपरिभ्रमणेनविभागशोयावान्स्नानपानादिरर्थःप्रयोजनंभवतितावान्सर्वोप्यर्थःसर्वतःसंप्लुतोदकेमहाह्रदेएकत्रैवयथाभवति एवंयावान्सर्वेषुवेदेषुतत्तत्कर्मफलरूपोऽर्थः तावान्सर्वोपिविजानतोव्यवसायात्मिकबुद्धियुक्तस्यब्राह्मणस्यब्रह्मनिष्ठस्यभवत्येव ब्रह्मानंदेक्षुद्रानंदानामंतर्भूतत्वात् "एतस्यैवानन्दस्यान्यानिमात्रामुपजीवंति"इतिश्रुतेः तस्मादियमेवबुद्धिः सुबुद्धिरित्यर्थः ॥ ४६ ॥ तर्हिसर्वकर्मफलानिपरमेश्वराराधनादेवभविष्यंतीत्यभिसंधाय प्रवर्तेत किं कर्मणेत्याशंक्यतद्वारयन्नाह कर्मण्येवेति । ते तव तत्त्वज्ञानार्थिनः

कर्मण्येवाधिकारः तत्फलेषुबंधहेतुष्वधिकारःकामोमास्तु ननुकर्मणिकृतेतत्फलंस्यादेव भोजनेकृतेतृप्तिवदित्याशंक्याह माकर्मफलहेतुर्भूः कर्मफलंप्रवृत्तिहे
तुर्यस्यतथाभूतोमाभूः कामितस्यैवस्वर्गादेर्नियोज्यविशेषणत्वेन फलत्वादकामितंफलंनस्यादितिभावः अतएवफलंबंधकंभविष्यतीतिभयादकर्मणिकर्माऽकरणेपि
तवसंगोनिष्ठामास्तु ॥ ४७ ॥ किंतर्हि योगस्थइति । योगःपरमेश्वरैकपरतातत्रस्थितः कर्माणिकुरु तथासंगंकर्तृत्वाभिनिवेशंत्यक्त्वाकेवलमीश्वराश्रयेणैवकुरु
तत्फलस्यज्ञानस्यापिसिद्ध्यसिद्ध्योःसमोभूत्वाकेवलमीश्वरार्पणेनैवकुरु यतएवंभूतंसमत्वमेवयोगउच्यतेसद्भिः चित्तसमाधानरूपत्वात् ॥ ४८ ॥ काम्यंतुकर्मा
तिनिकृष्टमित्याह दूरेणेति । बुद्ध्याव्यवसायात्मिकयाकृतःकर्मयोगोबुद्धियोगः बुद्धिसाधनभूतोवातस्मात्सकाशात्अन्यत्काम्यंकर्मदूरेणावरंअत्यंतमपकृष्टम्

**योगस्थःकुरुकर्माणिसंगंत्यक्त्वाधनंजय ॥ सिद्ध्यसिद्ध्योःसमोभूत्वासमत्वंयोगउच्यते ॥ ४८ ॥ दूरेणह्यवरंकर्मबुद्धियोगाद्धनंजय ॥ बुद्धौ शरणमन्विच्छकृपणाःफलहेतवः ॥ ४९ ॥ बुद्धियुक्तोजहातीहउभेसुकृतदुष्कृते ॥ तस्माद्योगाययुज्यस्वयोगःकर्मसुकौशलम् ॥ ५० ॥**

हियस्मादेवंतस्माद्बुद्धौज्ञानेशरणमाश्रयंकर्मयोगमन्विच्छअनुतिष्ठ यद्वा बुद्धौशरणंत्रातारमीश्वरमाश्रयेत्यर्थः फलहेतवस्तुसकामानराः कृपणाःदीनाः “ यो
ह्येवाएतदक्षरमविदित्वागार्ग्यस्माल्लोकात्प्रैःतिसकृपण ” इतिश्रुतेः ॥ ४९ ॥ बुद्धियोगयुक्तस्तुश्रेष्ठइत्याह बुद्धीति । सुकृतंस्वर्गादिप्रापकं दुष्कृतंनिरयादिप्रा
पकं तेउभेइहैवजन्मनिपरमेश्वरप्रसादेनंजहातित्यजतितस्माद्योगायतदर्थायकर्मयोगाययुज्यस्वघटस्व यतः कर्मसुयत्कौशलंबंधकानामपितेषांईश्वराराधनेन
मोक्षपरत्वसंपादनचातुर्यंसएवयोगः ॥ ५० ॥

कर्मणांमोक्षसाधनत्वप्रकारमाह कर्मेति । कर्मजंफलंत्यक्त्वाकेवलमीश्वराराधनार्थमेवकर्मकुर्वाणामनीषिणोज्ञानिनोभूत्वाजन्मरूपेणबंधेनविनिर्मुक्ताःसंतोऽनामयं सर्वोपद्रवरहितंविष्णोःपदंमोक्षाख्यंगच्छंति॥५१॥कदातत्पदमहंप्राप्स्यामीत्यपेक्षायामाह यदेतिद्वाभ्याम् । मोहोदेहादिष्वात्मबुद्धिःतदेवकालिलं । 'कलिलंगहनंविदुरि' त्यभिधानकोशस्मृतेः ततश्चायमर्थः एवंपरमेश्वराराधनेक्रियमाणेयदातत्प्रसादेनतवबुद्धिःदेहाभिमानलक्षणंमोहमयंगहनंदुर्गविशेषणातितरिष्यति तदाश्रोतव्यस्यश्रुतस्यार्थस्यचानिर्वेदंवैराग्यंगंतासिप्राप्यासि तयोरनुपादेयत्वेनजिज्ञासांनकरिष्यसीत्यर्थः ॥ ५२ ॥ ततश्चश्रुतीति । श्रुतिभिःनानालौकिकवैदिकार्थश्रवणैः

कर्मजंबुद्धियुक्ताहिफलंत्यक्त्वामनीषिणः ॥ जन्मबंधविनिर्मुक्ताःपदंगच्छन्त्यनामयम् ॥ ५१ ॥ यदातेमोहकलिलंबुद्धिर्व्यतितरिष्यति ॥ तदागंतासिनिर्वेदंश्रोतव्यस्यश्रुतस्यच ॥ ५२ ॥ श्रुतिविप्रतिपन्नातेयदास्थास्यतिनिश्चला ॥ समाधावचलाबुद्धिस्तदायोगमवाप्स्यसि ॥ ५३ ॥ अर्जुनउवाच ॥ स्थितप्रज्ञस्यकाभाषासमाधिस्थस्यकेशव ॥ स्थितधीःकिंप्रभाषेतकिमासीतव्रजेतकिम् ॥ ५४ ॥

विप्रतिपन्नाइतःपूर्वंविक्षिप्तासतीतवबुद्धिर्यदासमाधौस्थास्यतीति समाधीयतेचित्तमस्मिन्नितिसमाधिःपरमेश्वरः तस्मिन्निश्चलाविक्षेपव्यावृत्तिविषयांतरैरनाकृष्टातएवाचलाअभ्यासपटुत्वेनतत्रैवस्थिरालयव्याप्तिः सती तदायोगंयोगफलंतत्त्वज्ञानमवाप्यासि ॥५३॥ पूर्वश्लोकोक्तस्यात्मतत्वज्ञस्यलक्षणंजिज्ञासुःअर्जुनउवाचस्थितप्रज्ञस्येति ।स्वाभाविकेसमाधौस्थितस्यातएवस्थितानिश्चलाप्रज्ञाबुद्धिर्यस्यतस्यकाभाषा भाष्यतेऽनयेतिभाषा लक्षणमितियावत् केनलक्षणेनस्थितप्रज्ञउच्यतइत्यर्थः तथास्थितधीः किंकथंभाषणमासनंव्रजनंचकुर्यादित्यर्थः ॥ ५४ ॥

अत्रचयानिसाधकस्यज्ञानसाधनानितान्येवस्वाभाविकानिसिद्धस्यलक्षणानि अतःसिद्धस्यलक्षणानिकथयन्नेवांतरंगाणिज्ञानसाधनान्याह यावदध्यायसमाप्ति तत्र प्रथमप्रश्नोत्तरमाह प्रजहातीतिद्वाभ्यां।श्रीभगवानुवाच मनसिस्थितान्कामान्यदाप्रकर्षेणजहातित्यागेहेतुः आत्मन्येवस्वस्मिन्नेवपरमानंदरूपेआत्मनास्वयमेवतुष्ट इति आत्मारामःसन्यदाक्षुद्रविषयाभिलाषांस्त्यजति तदातेन लक्षणेनमुनिःस्थितप्रज्ञउच्यतइत्यर्थः ॥ ५५ ॥ किंच दुःखेष्विति। दुःखेषुप्राप्तेष्वपि अनुद्विग्नम क्षुभितंमनोयस्यसः सुखेषुविगतास्पृहायस्यसः तत्रहेतुः वीताअपगतारागभयक्रोधायस्मात् तत्र रागःप्रीतिःसमुनिः स्थितधीः स्थितप्रज्ञइत्युच्यते ॥ ५६ ॥

**श्रीभगवानुवाच ॥ प्रजहातियदाकामान्सर्वान्पार्थमनोगतान् ॥ आत्मन्येवात्मनातुष्टःस्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥ दुःखे ष्वनुद्विग्नमनाःसुखेषुविगतस्पृहः ॥ वीतरागभयक्रोधःस्थितधीर्मुनिरुच्यते ॥ ५६ ॥ यःसर्वत्रानभिस्नेहस्तत्तत्प्राप्यशुभा शुभम् ॥ नाभिनंदतिनद्वेष्टितस्यप्रज्ञाप्रतिष्ठिता ॥ ५७ ॥ यदासंहरतेचायंकूर्मोऽङ्गानीवसर्वशः ॥ इंद्रियाणींद्रियार्थेभ्यस्त स्यप्रज्ञाप्रतिष्ठिता ॥ ५८ ॥**

कथंभाषेतेत्यस्योत्तरमाह यइति । यः सर्वत्रपुत्रादिष्वपिअनभिस्नेहशून्यः अतएवबाधितानुवृत्त्यातत्तच्छुभमनुकूलंप्राप्यनाभिनन्दति न प्रशंसति अशुभं प्रति कूलं प्राप्यनद्वेष्टिनानिंदति किंतुकेवलमुदासीनएवभाषते तस्यप्रज्ञाप्रतिष्ठितेत्यर्थः ॥ ५७ ॥ किंच यदेति। यदाचायंयोगीइन्द्रियार्थेभ्यः सकाशातइंद्रियाणि संहरते प्रत्याहरति अनायासेनसंहारेदृष्टांतः अंगानिकरचरणादीनिकूर्मोयथास्वभावेनैवआकर्षति तद्वत् ॥ ५८ ॥

ननुनेंद्रियाणांविषयेष्वप्रवृत्तिःस्थितप्रज्ञस्यलक्षणंभवितुमर्हति जडानामातुराणामुपवासपराणांचविषमेष्वप्रवृत्तेरविशेषात्तत्राह विषयाइति । इंद्रियैर्विषयाणामाहरणं-
ग्रहणमाहारः निराहारस्येंद्रियैर्विषयग्रहणमकुर्वतोदेहिनोदेहाभिमानिनोऽज्ञस्यविषयाविनिवर्तंते तदनुभवोनिवर्ततइत्यर्थः किंतु रसोरागोऽभिलाषस्तद्वर्जम्अभि
लाषस्तुनानिवर्ततइत्यर्थःरसोऽपिरागोऽपिपरंपरमात्मानंदृष्ट्वाऽस्यस्थितप्रज्ञस्यस्वतोनिवर्ततेनश्यतीत्यर्थः यद्वा निराहारस्योपवासपरस्यविषयाःप्रायशोविनिवर्तंते क्षुधा
संतप्तस्यशब्दस्पर्शाद्यपेक्षाभावात् परंतुरसवर्जम् रसापेक्षातुननिवर्ततइत्यर्थः शेषंसमानम्॥ ५९ ॥ इंद्रियसंयमंविनातुस्थितप्रज्ञतानसंभवति अतःसाधकाव

विषयाविनिवर्तंतेनिराहारस्यदेहिनः ॥ रसवर्जंरसोऽप्यस्यपरंदृष्ट्वानिवर्तते ॥ ५९ ॥ यततोह्यपिकौन्तेयपुरुषस्यविपश्चितः ॥ इन्द्रि
याणिप्रमाथीनिहरंतिप्रसभंमनः ॥ ६० ॥ तानिसर्वाणिसंयम्ययुक्तआसीतमत्परः ॥ वशेहियस्येंद्रियाणितस्यप्रज्ञाप्रतिष्ठिता ॥ ६१ ॥
ध्यायतोविषयान्पुंसःसंगस्तेषूपजायते ॥ संगात्संजायतेकामःकामात्क्रोधोऽभिजायते ॥ ६२ ॥

स्थायांतत्रमहान्प्रयत्नःकर्तव्यइत्याह यततोह्यपीतिद्वाभ्यां । यततःमोक्षेप्रयतमानस्यापिविपश्चितोविवेकिनोऽपिमनःइंद्रियाणिप्रसभंबलाद्धरंति यतःप्रमाथीनिप्रम
थनशीलानिप्रक्षोभकाणि ॥ ६० ॥ यस्मादेवंतस्मात् तानीति । युक्तोयोगीतानींद्रियाणिसंयम्यमत्परःसन् आसीत यस्यवशेवशवर्तीनि एतेनकथमासीतेतिप्रश्न
स्यवशीकृतेंद्रियःसनआसीतेत्युत्तरमुक्तंभवति ॥ ६१ ॥ बाह्येंद्रियसंयमाभावेदोषमुक्त्वा मनःसंयमाभावेदोषमाह ध्यायतइतिद्वाभ्याम् । गुणबुद्ध्याविषया
न्ध्यायतःपुरुषस्यतेषुसंगआसक्तिर्भवति आसक्त्याचतेष्वधिकःकामोभवति कामाच्चकेनचित्प्रतिहतात्क्रोधोभवति ॥ ६२ ॥

किंच क्रोधादिति । क्रोधात्संमोहः कार्याकार्यविवेकाभावः ततः शास्त्राचार्योपदिष्टार्थस्मृतेर्विभ्रमोविचलनं ततोबुद्धेश्चेतनायासविनाशः वृक्षादिष्विवाभिभवः ततः प्रणश्यतिमृततुल्योभवति॥६३॥ नन्विंद्रियाणांविषयप्रवणस्वभावानांनिरोद्धुमशक्यत्वादयंदोषोदुष्परिहरइतिस्थितप्रज्ञत्वंकथंस्यादित्याशंक्याह रागेतिद्वाभ्याम्। रागद्वेषरहितैर्विगतदर्पैरिंद्रियैर्विषयांश्चरन्भुंजानोऽपिप्रसादंशांतिंप्राप्नोति रागद्वेषराहित्यमेवाह आत्मनोमनसोवश्यैर्विधेयोवशवर्तीआत्मामनोयस्येति अनेनैवकथंव्रजेतभुंजीतेत्यस्यचतुर्थप्रश्नस्यस्वाधीनैरिंद्रियैर्विषयानधिगच्छतिइत्युत्तरमुक्तंभवति ॥ ६४ ॥ प्रसादेसतिकिंस्यादित्यत्राह प्रसादइति । प्रसादेसतिसर्वदुःखनाशस्ततश्च

क्रोधाद्भवतिसंमोहः संमोहात्स्मृतिविभ्रमः ॥ स्मृतिभ्रंशाद्बुद्धिनाशोबुद्धिनाशात्प्रणश्यति ॥ ६३ ॥ रागद्वेषवियुक्तैस्तुविषयानिंद्रियैश्चरन् ॥ आत्मवश्यैर्विधेयात्माप्रसादमधिगच्छति ॥ ६४ ॥ प्रसादेसर्वदुःखानांहानिरस्योपजायते ॥ प्रसन्नचेतसोह्याशुबुद्धिःपर्यवतिष्ठते ॥ ६५ ॥ नास्तिबुद्धिरयुक्तस्यनचायुक्तस्यभावना ॥ नचाभावयतःशांतिरशांतस्यकुतःसुखम् ॥ ६६ ॥ इंद्रियाणांहिचरतांयन्मनोऽनुविधीयते ॥ तदस्यहरतिप्रज्ञांवायुर्नावमिवांभसि ॥ ६७ ॥

प्रसन्नचेतसोबुद्धिःप्रतिष्ठिताभवतीत्यर्थः ॥ ६५ ॥ इंद्रियन्निग्रहस्यस्थितप्रज्ञतासाधनत्वंव्यतिरेकमुखेनोपपादयति नास्तीति । अयुक्तस्यावशीकृतेंद्रियस्यनास्तिबुद्धिः शास्त्राचार्योपदेशाभ्यामात्मविषयाबुद्धिःप्रज्ञैवनोत्पद्यते कुतस्तस्यप्रतिष्ठावार्तावाकुतइत्यतआह नचायुक्तस्यभावनाध्यानंभावनयाहिबुद्धेरात्मनिप्रतिष्ठाभवतिसाचायुक्तस्ययतोनास्ति नचभावयतआत्मध्यानमकुर्वतःशांतिःआत्मनिचित्तोपरतिःअशांतस्यकुतःसुखं मोक्षानंदइत्यर्थः ॥ ६६ ॥ नास्तिबुद्धिरयुक्तस्येत्यत्रहेतु

माह इंद्रियाणामिति। इंद्रियाणामवशीकृतानांस्वैरंविषयेषुचरतांमध्येयदेवैकमिंद्रियंमनोऽनुविधीयते अवशीकृतंसदिंद्रियेणसहगच्छति तदेवैकमिंद्रियमस्यमनसः पुरुषस्यवाप्रज्ञांहरति विषयविक्षिप्तांकरोति किमुतवक्तव्यंबहूनिप्रज्ञांहरंतीति यथाप्रमत्तस्यकर्णधारस्यनावंवायुःसमुद्रेसर्वतःपरिभ्रामयाति तद्वत् ॥६७॥ इंद्रियसंयमस्यस्थितप्रज्ञत्वसाधनत्वलक्षणत्वंप्रोक्तमुपसंहराति तस्मादिति। प्रतिष्ठिताभवतीत्यर्थः लक्षणत्वोपसंहारेतस्यप्रज्ञाप्रतिष्ठिताज्ञातव्येत्यर्थः महाबाहोइतिसंबोधनंवैरिनिग्रहसमर्थस्यतवात्रापिसामर्थ्यंभवेदितिसूचयति ॥ ६८ ॥ ननुचकश्चिदपिप्रसुप्तइवदर्शनादिव्यापारशून्यःसर्वात्मनानिगृहीतेंद्रियोलोकेनदृश्यते अतोऽसंभावितमिदंलक्षणमित्याशंक्याह यानिशेति।सर्वेषांभूतानांयानिशानिशेवनिशाआत्मानिष्ठा आत्माज्ञानध्वांतावृतमतीनांतस्यांदर्शनादिव्यवहाराभावात् तस्यामात्मनिष्ठायां

तस्माद्यस्यमहाबाहोनिगृहीतानिसर्वशः ॥ इंद्रियाणींद्रियार्थेभ्यस्तस्यप्रज्ञाप्रतिष्ठिता ॥ ६८ ॥ यानिशासर्वभूतानातस्यांजागर्तिसंयमी ॥ यस्यांजाग्रतिभूतानिसानिशापश्यतोमुनेः ॥ ६९ ॥ आपूर्यमाणमचलप्रतिष्ठंसमुद्रमापःप्रविशंतियद्वत् ॥ तद्वत्कामायंप्रविशंतिसर्वेसशांतिमाप्नोतिनकामकामी ॥ ७० ॥

संयमीनिगृहीतेंद्रियोजागर्तिप्रबुद्ध्यते यस्यांतुविषयबुद्ध्याभूतानिजाग्रतिप्रबुद्ध्यंते साआत्मतत्त्वंपश्यतोमुनेर्निशा तस्यांदर्शनादिव्यापारस्तस्यनास्तीत्यर्थः एतदुक्तंभवति यथादिवांधानामुलूकादीनांरात्रावेवदर्शनंनतुदिवसे एवंब्रह्मज्ञस्योन्मीलिताक्षस्यापिब्रह्मण्यवदृष्टिर्नतुविषयेषु अतो नासंभावितमिदंलक्षणमिति॥६९॥ ननुविषयेषुदृष्ट्यभावेकथमसौतान्भुंक्तेइत्यपेक्षायामाह आपूर्यमाणमिति।नानानदीभिरापूर्यमाणमपिअचलप्रतिष्ठंअनतिक्रांतमर्यादमेवसमुद्रंपुनरप्यन्याआपोयथाप्रविशंति तथाकामाविषयायंमुनिमंतर्दृष्टिंभोगैरविक्रियमाणमेवप्रारब्धकर्मभिराक्षिप्ताःसंतःप्रविशंति सशान्तिंकैवल्यंप्राप्नोति नतुकामकामीभोगकामनाशीलः॥७०

यस्मादेवंतस्माद्विहायेति । प्राप्तान्कामान्विहायत्यक्त्वाउपेक्ष्यअप्राप्तेषुचनिःस्पृहः यतोनिरहंकारः अतएवतद्योगसाधनेषुनिर्ममःसन्नंतर्दृष्टिर्भूत्वायश्चरतिप्रारब्ध वशेनभोगान्भुंक्ते यत्रक्वापिगच्छतिवासशांतिमाप्नोति ॥ ७१ ॥ उक्तां ज्ञाननिष्ठांस्तुवन्नुपसंहरति एषेति । ब्राह्मीस्थितिः ब्रह्मज्ञाननिष्ठाएषाएवंविधांएनांपरमे श्वराराधनेनशुद्धांतःकरणः पुमान्प्राप्यनविमुह्यतिपुनःसंसारमोहंनप्राप्नोति यतः अन्तकालेमृत्युसमयेऽपिअस्यांक्षणमात्रमपिस्थित्वाब्रह्मणिनिर्वाणंलयमृच्छति प्राप्नोति किंपुनर्वक्तव्यंबाल्यमारभ्यस्थित्वाप्राप्नोतीति ॥ ७२ ॥ 'शोकपंकनिमग्नंयःसांख्ययोगोपदेशतः ॥ उज्जहारार्जुनंभक्तंसकृष्णःशरणंमम' ॥ १ ॥ इति

विहायकामान्यःसर्वान्पुमांश्चरतिनिःस्पृहः ॥ निर्ममोनिरहंकारःसशांतिमधिगच्छति ॥ ७१ ॥ एषाब्राह्मीस्थितिःपार्थनैनांप्राप्यवि मुह्यति ॥ स्थित्वास्यामंतकालेऽपिब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥ इतिश्रीमद्भगवद्गीता० सांख्ययोगोनामद्वितीयोऽध्यायः ॥ २ ॥

अर्जुन उवाच ॥ ॥ ज्यायसीचेत्कर्मणस्तेमताबुद्धिर्जनार्दन ॥ तत्किंकर्मणिघोरेमांनियोजयसिकेशव ॥ १ ॥

श्रीमद्भ०सुबोधिन्यांटीकायांद्वितीयोऽध्यायः ॥२॥ एवंतावदशोच्यानन्वशोचस्त्वमित्यादिनाप्रथमंमोक्षसाधनत्वेनदेहात्मविवेकबुद्धिरुक्तातदनंतरमेषातेऽभिहिता सांख्येबुद्धिर्योगेत्विमांशृण्वित्यादिनाकर्मचोक्तंनचतयोर्गुणप्रधानभावःस्पष्टंदर्शितः तत्रबुद्धियुक्तस्यस्थितप्रज्ञस्यनिष्कामत्वनियतेंद्रियत्वनिरहंकारत्वाद्यभिधाना देषाब्राह्मीस्थितिःपार्थेतिसप्रशंसमुपसंहाराच्च बुद्धिकर्मणोर्मध्येबुद्धेःश्रैष्ठ्यंभगवतोऽभिमतंमन्वानोऽर्जुनउवाच ज्यायसीचेदिति । कर्मणःसकाशान्मोक्षांतरंगत्वेन बुद्धिर्ज्यायसीअधिकतराश्रेष्ठाचेत्तवसंमता तर्हिकिमर्थंतयुद्धयस्वेतितस्मादुत्तिष्ठेतिचवारंवारंवदन्घोरेहिंसात्मकेकर्मणिमांनियोजयसिप्रवर्तयसि ॥ १ ॥

ननुधर्म्याद्धियुद्धाच्छ्रेयोऽन्यत्क्षत्रियस्यनविद्यतइत्यादिनाकर्मणोऽपिश्रेष्ठत्वमुक्तमेवेत्याशंक्याह व्यामिश्रेणेति।क्वचित्कर्मप्रशंसाक्वचिज्ज्ञानप्रशंसेत्येवं व्यामिश्रंसं
देहोत्पादकमिवयद्वाक्यंतेनमेबुद्धिंमतिमुभयत्रदोलायितांकुर्वन्मोहयसीव परमकारुणिकस्यतवमोहकत्वंनास्त्येवतथापिभ्रांत्याममैवंभातिइतीवशब्देनोक्तं अतउभ
योर्मध्येयन्द्वंतदेकंनिश्चित्यवदेति यद्वाइदमेवश्रेयःसाधनमितिनिश्चित्ययेनानुष्ठितेनश्रेयोमोक्षमहमाप्नुयांप्राप्स्यामि तदेवैकंनिश्चित्यवदेत्यर्थः ॥ २ ॥ अत्रोत्तरं
श्रीभगवानुवाच लोकेस्मिन्निति । अयमर्थः यदिमयापरस्परनिरपेक्षंमोक्षसाधनत्वेनकर्मज्ञानयोगरूपंनिष्ठाद्वयमुक्तं स्यात्तर्हिद्वयोर्मध्येयन्द्वंतदेकंवदेतित्वदीयः
प्रश्नःसंगच्छेत नतुमयातथोक्तंकिंतुद्वाभ्यामेकैवब्रह्मनि ष्ठोक्ता गुणप्रधानभूतयोस्तयोःस्वातंत्र्यानुपपत्तेः एकस्याएवतुप्रकारभेदमात्रमधिकारभेदेनोक्तमिति अस्मि

व्यामिश्रेणेववाक्येनबुद्धिंमोहयसीवमे ॥ तदेकंवदनिश्चित्ययेनश्रेयोऽहमाप्नुयाम् ॥ २ ॥ श्रीभगवानुवाच ॥
लोकेऽस्मिन्द्विविधानिष्ठापुराप्रोक्तामयानघ ॥ ज्ञानयोगेनसाख्यानांकर्मयोगेनयोगिनाम् ॥ ३ ॥

न्शुद्धाशुद्धान्तःकरणतयाद्विविधेलोकेअधिकारिजनेद्वेविधप्रकारौयस्याःसाद्विविधानिष्ठा मोक्षपरता पुरापूर्वाध्यायेमयासर्वज्ञेनप्रोक्तास्पष्टमेवोक्ता प्रकारद्वयमेवनि
र्दिशति सांख्यानांशुद्धांतःकरणानांज्ञानभूमिकामारूढानांज्ञानपरिपाकार्थं ज्ञानयोगेनध्यानादिना निष्ठाब्रह्मपरतोक्ता‘तानिसर्वाणिसंयम्ययुक्तआसीतमत्पर’इत्यादि
नासांख्यभूमिकामारुरुक्षूणांतुअंतःकरणशुद्धिद्वारातदारोहार्थंतदुपायभूतकर्मयोगाधिकारिणांयोगिनांकर्मयोगेननिष्ठोक्ता ‘धर्म्याद्धियुद्धाच्छ्रेयोऽन्यत्क्षत्रियस्यन-
विद्यत’इत्यादिना अतएवचित्तशुद्ध्यशुद्धिरूपावस्थाभेदेनैवद्विविधापिनिष्ठोक्ता ‘एषातेऽभिहितासांख्येबुद्धिर्योगेत्विमांशृणु’ इति ॥ ३ ॥

अतःसम्यक्चित्तशुद्ध्यर्थंज्ञानोत्पत्तिपर्यंतंवर्णाश्रमोचितानिकर्माणिकर्तव्यानि अन्यथाचित्तशुद्ध्यभावेनज्ञानानुत्पत्तेरित्याह नकर्मणामितिकर्मणामनारम्भादननु
ष्ठानान्नैष्कर्म्यंज्ञानंनाश्नुतेनाप्नोति ननुच "एवमेवप्रव्राजिनोलोकमीप्संतःप्रव्रजंति" इतिसंन्यासस्यमोक्षांगत्वश्रुतेःसंन्यासादेवमोक्षोभविष्यतीति किंकर्मभिरित्याशं
क्योक्तम् नचेति।नचचित्तशुद्धिंविनाकृतात्संन्यसनादेवज्ञानशून्यात्सिद्धिंमोक्षंसमधिगच्छातिप्राप्नोति ॥४॥ कर्मणांचसंन्यासस्तेष्वनासक्तिमात्रंनतुस्वरूपेणाशक्य
त्वादित्याह नहीति।जातुकस्यांचिदवस्थायांक्षणमात्रमपिकश्चिदपिज्ञानीवाऽज्ञोवाकर्मकृत्कर्माण्यकुर्वाणोनतिष्ठाति तत्रहेतुः प्रकृतिजैःस्वभावप्रभवैःरागद्वेषादिगुणैः

**नकर्मणामनारंभान्नैष्कर्म्यंपुरुषोऽश्नुते ॥ नचसंन्यसनादेवसिद्धिंसमधिगच्छति ॥ ४ ॥ नहिकश्चित्क्षणमपिजातुतिष्ठत्यकर्म
कृत् ॥ कार्यतेह्यवशःकर्मसर्वःप्रकृतिजैर्गुणैः ॥ ५ ॥ कर्मेन्द्रियाणिसंयम्ययआस्तेमनसास्मरन् ॥ इंद्रियार्थान्विमूढात्मामिथ्या
चारःसउच्यते ॥ ६ ॥ यस्त्विंद्रियाणिमनसानियम्यारभतेऽर्जुन ॥ कर्मेन्द्रियैःकर्मयोगमसक्तःसविशिष्यते ॥ ७ ॥ नियतंकु
रुकर्मत्वंकर्मज्यायोह्यकर्मणः ॥ शरीरयात्रापिचतेनप्रसिद्ध्येदकर्मणः ॥ ८ ॥**

सर्वोऽपिजनःकर्मकार्यतेकर्मणिप्रवर्तते अवशःअस्वतंत्रःसन्॥५॥अतोऽज्ञंकर्मत्यागिनंनिंदति कर्मेंद्रियाणीति।वाक्पाण्यादीनिकर्मेन्द्रियाण्यपिसंयम्यनिगृह्ययोमन
साभगवद्ध्यानच्छलेनेंद्रियार्थान्विषयान्स्मरन्नास्ते अविशुद्धतयामनसआत्मनिस्थैर्याभावात् समिथ्याचारःकपटाचारोदांभिकउच्यतइत्यर्थः॥६॥एतद्विपरीतःक
र्मकर्ताश्रेष्ठइत्याह यस्त्विति।यस्तुज्ञानेंद्रियाणिमनसानियम्यईश्वरप्रवणानिकृत्वाकर्मेन्द्रियैःकर्मरूपंयोगंउपायमारभतेअनुतिष्ठति असक्तःफलाभिलाषरहितःसन्
सविशिष्यतेविशिष्टो भवति चित्तशुद्ध्याज्ञानवान्भवतीत्यर्थः॥७॥यस्मादेवंतस्मात् नियतमिति।नियतंनित्यंसंध्योपासनादिकर्मकुरु हियस्मादकर्मणःकर्माकरणा

त्सकाशात्कर्मज्यायः अधिकतरम् अन्यथाकर्मणः सर्वकर्मशून्यस्यतवशरीरनिर्वाहोऽपिनभवेत् ॥८॥ सांख्यास्तुसर्वमपिकर्मबंधकत्वान्नकार्यमित्याहुस्तान्निराकुर्वन्नाह यज्ञार्थादिति। यज्ञोऽत्रविष्णुः 'यज्ञोवैविष्णुः' इतिश्रुतेः तदाराधनार्थात्कर्मणोऽन्यत्रतदेकंविनाऽयंलोकः कर्मबंधनः कर्मभिर्बध्यतेनत्वीश्वराराधनार्थेनकर्मणा अतस्तदर्थंविष्णुप्रीत्यर्थंमुक्तसंगोनिष्काम: सन्कर्मसम्यगाचर॥ ९॥ प्रजापतिवचनादपिकर्मकर्तैवश्रेष्ठइत्याह सहयज्ञाइतिचतुर्भिः। यज्ञेनसहवर्तन्तइतिसहयज्ञाः यज्ञाधिकृता ब्राह्मणाद्याः प्रजाः पुरासर्गादौसृष्ट्वाब्रह्माइदमुवाच–अनेनयज्ञेनप्रसविष्यध्वंप्रसूयध्वम् प्रसवोवृद्धिः उत्तरोत्तरामभिवृद्धिंलभध्वमित्यर्थः तत्रहेतुः एषयज्ञः वोयुष्मा

यज्ञार्थात्कर्मणोऽन्यत्रलोकोऽयंकर्मबंधनः ॥ तदर्थंकर्मकौन्तेयमुक्तसंगःसमाचर ॥ ९ ॥ सहयज्ञाःप्रजाःसृष्ट्वापुरोवाचप्रजापतिः ॥
अनेनप्रसविष्यध्वमेषवोऽस्त्विष्टकामधुक् ॥ १० ॥ देवान्भावयतानेनतेदेवाभावयंतुवः ॥ परस्परंभावयंतःश्रेयःपरमवाप्स्यथ ॥ ११ ॥
इष्टान्भोगान्हिवोदेवादास्यंतेयज्ञभाविताः ॥ तैर्दत्तानप्रदायैभ्योयोभुंक्तेस्तेनएवसः ॥ १२ ॥

कंइष्टकामधुक् इष्टान्कामान्दोग्धीतितथाअभीष्टभोगप्रदोऽस्त्वित्यर्थः अत्रचयज्ञग्रहणमावश्यककर्मोपलक्षणार्थम् काम्यकर्मप्रशंसातुप्रकरणेऽसंगतापिसामान्यतोऽकर्मणः कर्मश्रेष्ठमित्येतदर्थेत्यदोषः॥ १०॥ कथमिष्टकामदोग्धायज्ञोभवेदित्यत्राह देवानिति । अनेनयज्ञेनयूयंदेवान् भावयत हविर्भागैः संवर्धयत तेचदेवावोयुष्मान्संवर्धयंतु वृष्ट्यादिनाऽन्नोत्पत्तिद्वारेण एवमन्योन्यंसंवर्धयंतोदेवाश्चयूयंपरस्परंश्रेयोऽभीष्टमर्थंप्राप्स्यथ ॥ ११॥ एतदेवस्पष्टीकुर्वन्कर्माकरणेदोषमाह इष्टानिति । यज्ञैर्भाविताः संतोदेवा वृष्ट्यादिद्वारेण वः युष्मभ्यं भोगान्दास्यंतिहि अतोदेवैर्दत्तानन्नादीनेभ्योदेवेभ्यः पंचयज्ञादिभिरदत्त्वायोभुंक्तेसतुचोरएवज्ञेयः ॥ १२ ॥

अतश्चयजंतएवश्रेष्ठानेतराइत्याह यज्ञशिष्टाशिनइति।वैश्वदेवादियज्ञावशिष्टंयेऽश्नंतितेपंचसूनाकृतैः सर्वैः किल्बिषैर्मुच्यंते पंचसूनाश्चस्मृतावुक्ताः-'कंडनीपेषणीचुल्लीउदकुंभीचमार्जनी॥पंचसूनागृहस्थस्यताभिःस्वर्गंनविंदति' इतियेत्वात्मनोभोजनार्थमेवान्नंपचंति नतुवैश्वदेवाद्यर्थंतेपापाः दुराचाराः अघमेवभुंजते ॥१३॥जगच्चक्रप्रवृत्तिहेतुत्वादपिकर्मकर्तव्यमित्याह अन्नादितित्रिभिः।अन्नाच्छुक्रशोणितरूपेणपरिणताद्भूतान्युत्पद्यंते अन्नस्यचसंभवः पर्जन्याद्वृष्टेः सचपर्जन्योयज्ञाद्भवतिसचयज्ञः कर्मसमुद्भवः कर्मणायजमानादिव्यापारेणसम्यङ्निष्पद्यतइत्यर्थः 'अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठति॥ आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजा' इति

यज्ञशिष्टाशिनःसंतोमुच्यंतेसर्वकिल्बिषैः ॥ भुंजतेतेत्वघंपापायेपचंत्यात्मकारणात् ॥ १३ ॥ अन्नाद्भवंतिभूतानिपर्जन्यादन्नसंभवः ॥
यज्ञाद्भवतिपर्जन्योयज्ञःकर्मसमुद्भवः ॥ १४ ॥ कर्मब्रह्मोद्भवंविद्धिब्रह्माक्षरसमुद्भवम् ॥ तस्मात्सर्वगतंब्रह्मनित्यंयज्ञेप्रतिष्ठितम् ॥ १५ ॥
एवंप्रवर्तितंचक्रंनानुवर्तयतीहयः ॥ अघायुरिंद्रियारामोमोघंपार्थसजीवति ॥ १६ ॥

स्मृतेः॥१४॥तथाकर्मब्रह्मोद्भवमिति । तच्चयजमानादिव्यापाररूपंकर्मब्रह्मोद्भवंविद्धि ब्रह्मवेदः तस्मात्प्रवृत्तंजानीहि तच्चब्रह्मवेदाख्यंअक्षरात्परब्रह्मणःसमुद्भूतंविद्धि "अस्यमहतोभूतस्यनिःश्वसितमेतद्यदृग्वेदोयजुर्वेदःसामवेद" इतिश्रुतेः यतएवमक्षरादेवयज्ञप्रवृत्तेरत्यंतंतस्याभिप्रेतोयज्ञःतस्मात्सर्वगतमप्यक्षरंब्रह्मनित्यंसर्वदायज्ञेप्रतिष्ठितं यज्ञेनोपायभूतेनप्राप्यतइति यज्ञेप्रतिष्ठितमुच्यतेउद्यमस्थासदालक्ष्मीरितिवत् यद्वायस्माज्जगच्चक्रमूलंकर्म तस्मात्सर्वगतंमंत्रार्थवादैःसर्वेषुसिद्धार्थप्रतिपादकेषुभूतार्थाख्यानादिषुगतंस्थितमपिवेदाख्यंब्रह्मसर्वदायज्ञेचतात्पर्यरूपेणप्रतिष्ठितं अतोयज्ञादिकर्मकर्तव्यमित्यर्थः॥१५॥यस्मादेवंपरमेश्वरेणैवभूतानांपुरुषा

र्थसिद्धयेकर्मादिचक्रंप्रवर्तितंतस्मात्तदकुर्वतोवृथैवजीवितमित्याह एवमिति। परमेश्वरत्वाक्यभूताद्वेदाख्याद्ब्रह्मणः पुरुषाणांकर्मणिवृत्तिःततःकर्मनिष्पत्तिःततःपर्जन्यस्त तोऽन्नंततोभूतानि भूतानांचपुनस्तथैवकर्मणिप्रवृत्तिः इत्येवंप्रवर्तितंचक्रंयोनानुवर्तयतिनानुतिष्ठतिसअघायुः अघंपापरूपंआयुर्यस्यसः यतइंद्रियैर्विषयेष्वेवरमति नतुईश्वराराधनार्थेकर्मणि अतोमोघंव्यर्थंसजीवति॥ १६॥ तदेवंनकर्मणामनारंभान्नैष्कर्म्यमित्यादिनाज्ञस्यांतःकरणशुद्धयर्थंकर्मयोगमुक्त्वाज्ञानिनःकर्मानुपयोगमाह यस्त्वितिद्वाभ्याम्। आत्मन्येवरतिःप्रीतिर्यस्य ततश्चात्मन्येवतृप्तः स्वानंदानुभवेननिर्वृतः अतएवात्मन्येवसंतुष्टोभोगापेक्षारहितोयस्तस्यकर्तव्यंनास्ति॥ १७॥ तत्र हेतुमाह नैवतस्येति। कृतेनकर्मणातस्यार्थःपुण्यंनैवास्ति नचाकृतेनकश्चनकोऽपिप्रत्यवायोऽस्तिनिरहंकारत्वेनविधिनिषेधातीतत्वात् तथापि "तस्मात्तदेषांनप्रियंयदे

यस्त्वात्मरतिरेवस्यादात्मतृप्तश्चमानवः ॥ आत्मन्येवचसंतुष्टस्तस्यकार्यंनविद्यते ॥ १७ ॥
नैवतस्यकृतेनार्थोनाकृतेनेहकश्चन ॥ नचास्यसर्वभूतेषुकश्चिदर्थव्यपाश्रयः ॥ १८ ॥

तन्मनुष्याविदुः" इतिश्रुतेः मोक्षेदेवकृतविघ्नसंभवात् तत्परिहारार्थंकर्मभिर्देवाःसेव्या इत्याशंक्योक्तं सर्वभूतेषुब्रह्मादिस्थावरांतेषुकश्चिदपिअर्थव्यपाश्रयः आश्रय एवव्यपाश्रयःअर्थेमोक्षआश्रयणीयोऽस्यनास्तीत्यर्थः विघ्नाभावस्यश्रुत्यैवोक्तत्वात् तथाचश्रुतिः—"तस्यहनदेवाश्चनाभूत्याईशतेआत्माह्येषांसभवति" इति हनेत्य व्ययमप्यर्थे देवाअपितस्यात्मतत्त्वज्ञस्यअभूत्यैब्रह्मताप्रतिबंधनायनेशतेनशक्नुवंतीतिश्रुतेरर्थः देवकृतास्तुविघ्नाः सम्यग्ज्ञानोत्पत्तेःप्रागेव यदेतद्ब्रह्ममनष्याविदु स्तद्देवानांनप्रियमितिश्रुत्यांब्रह्मज्ञानस्यैवाप्रियत्वोक्त्या तत्रैवविघ्नकर्तृत्वस्यसूचितत्वात् ॥ १८ ॥

यस्मादेवंभूतस्यज्ञानिनएवकर्मानुपयोगोनान्यस्यतस्मात्त्वंकर्मकुर्वित्याह तस्मादिति । असक्तःफलसंगरहितःसन्कार्यमवश्यकर्तव्यतयाविहितंनित्यनैमित्तिकंकर्म सम्यगाचर हियस्मात्असक्तःकर्माचरन्पुरुषःपरंमोक्षंचित्तशुद्धिंज्ञानद्वाराप्राप्नोति ॥१९॥ अत्रसदाचारंप्रमाणयति कर्मणैवेति । कर्मणैवशुद्धसत्त्वाःसंतःसंसिद्धिं सम्यग्ज्ञानंप्राप्ताइत्यर्थः यद्यपित्वंसम्यग्ज्ञानिनमेवात्मानंमन्यसेतथापिकर्माचरणंभद्रमेवेत्याह लोकसंग्रहमिति । लोकस्यसंग्रहःस्वधर्मेप्रवर्तनं मयाकर्मणिकृतेजनः सर्वोपिकरिष्यतिअन्यथाज्ञानिदृष्टांतेनअज्ञःकर्मत्यजेदित्येवंलोकरक्षणमपितावत्प्रयोजनंपश्यन्कर्मकर्तुमेवार्हसि नतुत्यक्तुमित्यर्थः ॥ २० ॥ कर्मकरणेलोकसंग्रहो

तस्मादसक्तःसततंकार्यंकर्मसमाचर ॥ असक्तोह्याचरन्कर्मपरमाप्नोतिपूरुषः ॥ १९ ॥ कर्मणैवहिसंसिद्धिमास्थिताजनकादयः ॥ लोकसंग्रहमेवापिसंपश्यन्कर्तुमर्हसि ॥ २० ॥ यद्यदाचरतिश्रेष्ठस्तत्तदेवेतरोजनः ॥ सयत्प्रमाणंकुरुतेलोकस्तदनुवर्तते ॥ २१ ॥ न मेपार्थास्तिकर्तव्यंत्रिषुलोकेषुकिंचन ॥ नानवाप्तमवाप्तव्यंवर्तएवचकर्मणि ॥ २२ ॥ यदिह्ययंनवर्तेयंजातुकर्मण्यतंद्रितः ॥ ममवर्त्मानु वर्तन्तेमनुष्याःपार्थसर्वशः ॥ २३ ॥

यथास्यात्तथाह यदिति।इतरःप्राकृतोजनःतत्तदेवाचरति सश्रेष्ठोजनःकर्मशास्त्रंनिवृत्तिशास्त्रंवायत्प्रमाणंमन्यते तदेवलोकोऽप्यनुसरति॥२१॥अत्रचाहमेवदृष्टांतइ त्याहत्रिभिः नमेपार्थेति । हेपार्थ ! मेकर्तव्यंनास्ति यतस्त्रिष्वपिलोकेष्वनवाप्तंअप्राप्तंसदवाप्तव्यंप्राप्यंनास्ति तथापिकर्मण्यहंवर्ते कर्मकरोम्येवेत्यर्थः ॥२२॥अकरणे लोकस्यनाशंदर्शयति यदीति । जातुकदाचित् अतंद्रितोऽनलसःसन्यदिकर्मणिनवर्तेयं कर्मनानुतिष्ठेयंतर्हिममैववर्त्ममार्गंमनुष्याःअनुवर्ततेअनुवर्तेरन्नित्यर्थः॥२३

ततःकिमतआह उत्सीदेयुरिति । उत्सीदेयुःकर्मलोपेननश्येयुः ततश्चयोवर्णसंकरोभवेत्तस्याप्यहमेवकर्तास्यांभवेयं एवमहमेवप्रजाउपहन्यां मलिनीकुर्याम ॥ २४ ॥ तस्मादात्मविदापिलोकसंग्रहार्थंतत्कृपयाकर्मकार्यमेवेत्युपसंहरति सक्ताइति । कर्माणिसक्ताअभिनिविष्टाःसंतोऽज्ञाःयथाकर्मकुर्वंति असक्तःसन्विद्वानपितथैवकुर्यात् लोकसंग्रहंकर्तुमिच्छुः ॥ २५ ॥ ननुकृपयातत्त्वज्ञानमेवोपदेष्टुंयुक्तंनेत्याह नेति । अज्ञानांअतएवकर्मसंगिनांकर्मासक्तानामकर्तात्मोपदेशेनबुद्धेर्भेदंअन्यथात्वंनजनयेत् कर्मणःसकाशाद्बुद्धिचालनंनकुर्यात् अपितुजोषयेत्सेवयेत् जुषीप्रीतिसेवनयोः अज्ञान्कर्माणिकारयेत् कथं युक्तःअवहितोभूत्वा

उत्सीदेयुरिमेलोकानकुर्यांकर्मचेदहम् ॥ संकरस्यचकर्तास्यामुपहन्यामिमाःप्रजाः ॥ २४ ॥ सक्ताःकर्मण्यविद्वांसोयथाकुर्वंतिभारत ॥ कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥ नबुद्धिभेदंजनयेदज्ञानांकर्मसंगिनाम् ॥ जोषयेत्सर्वकर्माणिविद्वान्युक्तःसमाचरन् ॥ २६ ॥ प्रकृतेःक्रियमाणानिगुणैःकर्माणिसर्वशः ॥ अहंकारविमूढात्माकर्ताहमितिमन्यते ॥ २७ ॥ तत्त्ववित्तुमहाबाहो गुणकर्मविभागयोः ॥ गुणागुणेषुवर्ततंतइतिमत्वानसज्जते ॥ २८ ॥

स्वयंचसमाचरन् बुद्धिचालनेकृतेसतिकर्मसुश्रद्धानिवृत्तेर्ज्ञानस्यचानुत्पत्तेस्तेषामुभयभ्रंशःस्यादितिभावः ॥ २६ ॥ ननुविदुषापिचेत्कर्मकर्तव्यं तर्हिविद्वदविदुषोःकोविशेषंदर्शयति प्रकृतेरितिद्वाभ्याम् । प्रकृतेर्गुणैःप्रकृतिकार्यैरिंद्रियैःसर्वप्रकारेणक्रियमाणानियानिकर्माणि तान्यहमेवकर्ता करोमीतिमन्यते तत्रहेतुः अहंकारेणइंद्रियादिष्वात्माध्यासेनविमूढआत्माबुद्धिर्यस्यसः ॥ २७ ॥ विद्वांस्तुतथानमन्यतइत्याह तत्त्वविदिति । नाहंगुणात्मकइतिगुणेभ्यआत्मनोविभागः नमेकर्माणी

तिकर्मभ्योऽप्यात्मनोविभागस्तयोर्गुणकर्मविभागयोर्यस्तत्त्ववेत्तिसतुनसज्जतेकर्तृत्वाभिनिवेशंनकरोति तत्रहेतुः गुणाइंद्रियाणिगुणेषुविषयेषुवर्तंते नाहमितिमत्वा ॥२८॥नबुद्धिभेदंजनयेदित्युक्तमुपसंहरति प्रकृतेरिति । यैःप्रकृतेर्गुणैःसत्त्वादिभिः संमूढाःसंतोगुणेष्विंद्रियेषुतत्कर्मसुचसज्जंतेवयंकुर्मइति तानकृत्स्नविदोमंदमतीन्कृत्स्नवित्सर्वज्ञोनविचालयेत्॥२९॥तदेवंतत्त्वविदापिकर्मकर्तव्यंत्वंतुनाद्यापितत्त्ववित् अतःकर्मैवकुर्वित्याह मयीति । सर्वाणिकर्माणिमयिसंन्यस्यसमर्प्याध्यात्मचेतसांतर्याम्यधीनोऽहंकरोमीतिदृष्ट्यानिराशीर्निष्कामोऽतएव मत्फलसाधनं मदर्थमिदंकर्मेत्येवंममताशून्यश्चभूत्वा विगतज्वरस्त्यक्तशोकश्चभूत्वा युद्ध्यस्व॥३०॥

**प्रकृतेर्गुणसंमूढाःसज्जंतेगुणकर्मसु ॥ तानकृत्स्नविदोमंदान्कृत्स्नविन्नविचालयेत् ॥ २९ ॥ मयिसर्वाणिकर्माणिसंन्यस्याध्यात्मचेतसा ॥ निराशीर्निर्ममोभूत्वायुद्धयस्वविगतज्वरः ॥ ३० ॥ येमेमतमिदंनित्यमनुतिष्ठंतिमानवाः ॥ श्रद्धावंतोऽनसूयंतोमुच्यंतेतेऽपिकर्मभिः ॥ ३१ ॥ येत्वेतदभ्यसूयंतोनानुतिष्ठंतिमेमतम् ॥ सर्वज्ञानविमूढांस्तान्विद्धिनष्टानचेतसः ॥ ३२ ॥ सदृशंचेष्टतेस्वस्याःप्रकृतेर्ज्ञानवानपि ॥ प्रकृतिंयांतिभूतानिनिग्रहःकिंकरिष्यति ॥ ३३ ॥**

एवंकर्मानुष्ठानेगुणमाह येमेमतमितिमद्वाक्येश्रद्धावंतः । अनसूयंतःदुःखात्मकेकर्मणिप्रवर्तयतीतिदोषदृष्टिमकुर्वंतश्चयेमेमदीयमिदंमतंअनुतिष्ठंति तेऽपिशनैःकर्मकुर्वाणाःसम्यग्ज्ञानिवत्कर्मभिर्मुच्यंते ॥ ३१ ॥ विपक्षेदोषमाह येत्विति । येतुमेमतं ईश्वरार्थंकर्मकर्तव्यमित्यनुशासनमभ्यसूयंतःद्विषंतःनानुतिष्ठंति तान्अचेतसःविवेकशून्यानतएवसर्वस्मिन्कर्मणिब्रह्मविषयेचयज्ज्ञानंतत्रविमूढान्नष्टान्विद्धि ॥ ३२ ॥ नतुतर्हिमहाफलत्वादिंद्रियाणिनिगृह्यनिष्कामाःसंतःसर्वेऽपिस्वध

र्ममेवकिंनानुतिष्ठंतितत्राह सदृशमिति । प्रकृतिःप्राचीनकर्मसस्काराधीनस्वभावःस्वस्याःस्वकीयायाःप्रकृतेःस्वभावस्यसदृशमनुरूपमेवगुणदोषज्ञानवानपिचेष्टते
किंपुनर्वक्तव्यमज्ञश्चेष्टतइतितस्माद्भूतानिसर्वेऽपिप्राणिनः प्रकृतिंयांतिअनुवर्तंते एवंसतिइंद्रियनिग्रहःकिंकरिष्यति प्रकृतेर्बलिष्ठत्वादित्यर्थः ॥ ३३ ॥ नन्वेवं
प्रकृत्यधीनैवचेत्पुरुषस्यप्रवृत्तिःतर्हिविधिनिषेधवैयर्थ्यंप्राप्तमित्याशंक्याह इंद्रियस्येंद्रियस्येति । वीप्सयाप्रत्येकंसर्वेषामिंद्रियाणामित्युक्तम् अर्थेस्वस्वविषयेऽनुकूलेरा
गः प्रतिकूलेद्वेषश्चेत्येवंरागद्वेषौव्यवस्थितौ अवश्यंभाविनौ ततश्च तदनुरूपाप्रवृत्तिरितिभूतानांप्रकृतिः तथापितयोर्वशवर्तीनभवेदितिशास्त्रेणनियम्यते हिय
स्मात् अस्यमुमुक्षोःतौपरिपंथिनौप्रतिपक्षौ अयंभावः विषयस्मरणादिनारागद्वेषावुत्पाद्यानवहितंपुरुषमनर्थेऽपिगंभीरेस्रोतसीवप्रकृतिर्बलात्प्रवर्तयति शास्त्रंतुततः

इंद्रियस्येंद्रियस्यार्थेरागद्वेषौव्यवस्थितौ ॥ तयोर्नवशमागच्छेत्तौह्यस्यपरिपंथिनौ ॥ ३४ ॥
श्रेयान्स्वधर्मोविगुणःपरधर्मात्स्वनुष्ठितात् ॥ स्वधर्मेनिधनंश्रेयःपरधर्मोभयावहः ॥ ३५ ॥

प्रागेवविषयेषुरागद्वेषप्रतिबंधकेपरमेश्वरभजनादौप्रवर्तयति गंभीरस्रोतःपातात्पूर्वमेवनावमाश्रितइवनानर्थंप्राप्नोतीति ॥ ३४ ॥ तदेवंस्वाभाविकींपश्वादिसदृशीं
प्रकृतिंत्यक्त्वास्वधर्मेप्रवर्तितव्यमित्युक्तं तर्हिस्वधर्मस्ययुद्धादेर्दुःखरूपस्ययथावत्कर्तुमशक्यत्वात्परधर्मस्यचअहिंसादेःसुकरत्वाद्धर्मत्वाविशेषाच्चतत्रप्रवर्तितुमिच्छं
तंप्रत्याह श्रेयानिति । किंचिदंगहीनोपिस्वधर्मःश्रेयान्प्रशस्यतरः स्वनुष्ठितात्सर्वांगपूर्त्याकृतादपिपरधर्मात्सकाशात् तत्रहेतुः स्वधर्मेयुद्धादौप्रवर्तमानस्यनिधनं
मरणमपिश्रेष्ठम् स्वर्गादिप्रापकत्वात् परधर्मस्तुस्वस्यभयावहः निषिद्धत्वेननरकप्रापकत्वात् ॥ ३५ ॥

तयोर्नवशमागच्छेदित्युक्तंतदेतदशक्यंमन्वानोऽर्जुनउवाच अथकेनेति । वृष्णेर्वंशेऽवतीर्णोवार्ष्णेयः हेवार्ष्णेयअनर्थरूपंपापंकर्तुमनिच्छन्नपिकेनप्रयुक्तःप्रेरितोऽ यंपुरुषःपापंचरति कामक्रोधौविवेकबलेनानिरुंधतोऽपिपुरुषस्यपुनःपापेप्रवृत्तिदर्शनादन्योऽपितयोर्मूलभूतःकश्चित्प्रवर्तकोभवेदितिसंभावनायांप्रश्नः ॥ ३६ ॥ अत्रोत्तरम् श्रीभगवानुवाच कामएषइति । यस्त्वयापृष्टोहेतुरेषकामएव ननुक्रोधोपिपूर्वंत्वयोक्तःइंद्रियस्येंद्रियस्येत्यत्र सत्यं नासौततःपृथक् किंतु क्रोधोऽ प्येषएवकामएवकेनचित्प्रतिहतःक्रोधात्मनापरिणमते अतःपूर्वंपृथक्त्वेनोक्तोऽपिक्रोधःकामजएवेत्यभिप्रायेणकामेनैकीकृत्योच्यते रजोगुणात्समुद्भवतीतितथा अनेनसत्त्ववृद्ध्यारजसिक्षयंनीतेसतिकामोऽपिक्षीयतइतिसूचितम् एनंकामंइहमोक्षमार्गेवैरिणंविद्धि अयंचवक्ष्यमाणक्रमेणहंतव्यएव यतोनासौदानेनसंधा

अर्जुनउवाच ॥ अथकेनप्रयुक्तोऽयंपापंचरतिपूरुषः ॥ अनिच्छन्नपिवार्ष्णेयबलादिवनियोजितः ॥ ३६ ॥ ॥ श्रीभगवानुवाच ॥
कामएषक्रोधएषरजोगुणसमुद्भवः ॥ महाशनोमहापाप्माविद्ध्येनमिहवैरिणम् ॥ ३७ ॥ धूमेनाव्रियतेवह्निर्यथाऽदर्शोमलेनच ॥
यथोल्बेनावृतोगर्भस्तथातेनेदमावृतम् ॥ ३८ ॥ आवृतंज्ञानमेतेनज्ञानिनोनित्यवैरिणा ॥ कामरूपेणकौंतेयदुष्पूरेणानलेनच ॥ ३९ ॥

तुंशक्यइत्याह महाशनःमहदशनंयस्य दुष्पूरइत्यर्थः नचसाम्नासंधातुंशक्यः यतोमहापाप्माअत्युग्रः ॥ ३७ ॥ कामस्यवैरित्वंदर्शयति धूमेनेति । यथाधूमेनसहजेनवह्निराव्रियतेआच्छाद्यते यथावाआदर्शोमलेनागंतुकेन यथाचउल्बेनगर्भवेष्टनचर्मणागर्भःसर्वतोनिरुद्ध्यावृतः तथाप्रकारत्रयेणापितेनकामे नावृतमिदम् ॥ ३८ ॥ इदंशब्दनिर्दिष्टंदर्शयन्वैरित्वंस्फुटयति आवृतमिति । इदंतुविवेकज्ञानमेतेनावृतमज्ञस्यखलुभोगसमयेकामःसुखहेतुरेव परिणामेतु

वैरितांप्रपद्यते ज्ञानिनः पुनः तत्कालमप्यनर्थानुसंधानाद्दुःखहेतुरेवेतिनित्यवैरिणेत्युक्तम् किंच विषयैः पूर्यमाणोऽपिदुष्पूरः अपूर्यमाणः शोकसंतापहेतुत्वादनल तुल्यः अनेनसर्वान्प्रतिनित्यवैरित्वमुक्तम् ॥ ३९ ॥ इदानींतस्याधिष्ठानंकथयनजयोपायमाह इंद्रियाणीतिद्वाभ्याम् । विषयदर्शनश्रवणादिभिः संकल्पेना ध्यवसायेनचकामस्याविर्भावादिंद्रियाणिचमनश्चबुद्धिश्चास्याधिष्ठानमुच्यते एतैरिंद्रियादिभिर्दर्शनादिव्यापारवद्भिराश्रयभूतैर्विवेकज्ञानमावृत्यदेहिनंविमोहयति ॥ ४० ॥ यस्मादेवं तस्मात्त्वमिति । आदौविमोहात्पूर्वमेवइंद्रियाणिमनोबुद्धिंचनियम्यपापरूपमेनंकामंहिस्फुटंप्रजहिघातय यद्वा प्रजहिपरित्यज ज्ञानंआतमविषयं

**इंद्रियाणिमनोबुद्धिरस्याधिष्ठानमुच्यते ॥ एतैर्विमोहयत्येषज्ञानमावृत्यदेहिनम् ॥ ४० ॥ तस्मात्त्वमिंद्रियाण्यादौनियम्यभरतर्षभ ॥ पाप्मानंप्रजहिह्येनंज्ञानविज्ञाननाशनम् ॥ ४१ ॥ इंद्रियाणिपराण्याहुरिंद्रियेभ्यःपरंमनः ॥ मनसस्तुपराबुद्धिर्योबुद्धेःपरतस्तुसः ॥ ४२ ॥**

विज्ञानंशास्त्रीयंतयोर्नाशकं यद्वा ज्ञानंशास्त्राचार्योपदेशजम् विज्ञानंनिदिध्यासनजं "तमेवधीरोविज्ञायप्रज्ञांकुर्वीत" इतिश्रुतेः ॥ ४१ ॥ अथात्रप्रसन्नतयाचि त्तप्रणिधानेनइंद्रियाणिनियंतुंशक्यंते तदात्मस्वरूपंदेहादिभ्योविविच्यदर्शयति इंद्रियाणीति । इंद्रियाणिदेहादिभ्योग्राह्येभ्यः पराणिश्रेष्ठान्याहुः सूक्ष्मत्वात्प्रकाशक त्वाच्च अतएवतद्व्यतिरिक्तत्वमप्यर्थादुक्तंभवति इंद्रियेभ्यश्चसंकल्पात्मकंमनः परम् तत्प्रवर्तकत्वात् मनसस्तुबुद्धिर्निश्चयात्मिकापरा निश्चयपूर्वकत्वात्संक ल्पस्य यस्तुबुद्धेः परः तत्साक्षित्वेनावस्थितः सर्वांतरः सआत्माविमोहयतिदेहिनमिति देहिशब्दोक्तआत्मासइतिपरामृश्यते ॥ ४२ ॥

उपसंहरति एवमिति । बुद्धेरेवविषयेंद्रियादिजन्याःकामादिविक्रियाः आत्मातुनिर्विकारस्तत्साक्षीत्येवंबुद्धेःपरमात्मानंबुद्धा आत्मनाएवंभूतनिश्चयात्मिकयाबुद्ध्या त्मानंमनःसंस्तभ्यनिश्चलंकृत्वाकामरूपंशत्रुंजहिमारयदुरासदंदुःखेनासादनीयं दुर्विज्ञेयगतिमित्यर्थः ॥४३॥ 'स्वधर्मेणयमाराध्यभक्त्यामुक्तिमितानराः तंकृष्णंपर मानंदंतोषयेत्सर्वकर्मभिः॥१॥'इतिसुबोधिन्यांटीकायांतृतीयोऽध्यायः ॥३॥ ॥ 'आविर्भावतिरोभावावाविष्कर्तुंस्वयंहरिः॥तत्त्वंपदविवेकार्थंकर्मयोगंप्रशंसति ॥१॥' एवंतावदध्यायद्वयेनकर्मयोगोपायोज्ञानयोगोपायश्चमोक्षसाधनत्वेनउक्तः तमेवब्रह्मार्पणादिगुणविधानेनत्वंपदार्थविवेकादिनाचप्रपंचयिष्यन्प्रथमंतावत्परंपराप्राप्तत्वे

एवंबुद्धेःपरंबुद्ध्वासंस्तभ्यात्मानमात्मना ॥ जहिशत्रुंमहाबाहोकामरूपंदुरासदम् ॥ ४३ ॥ इतिश्रीमद्भगव० कर्मयोगोनामतृतीयोऽध्यायः ॥ ३ ॥ ॥ श्रीभगवानुवाच ॥ ॥ इमंविवस्वतेयोगंप्रोक्तवानहमव्ययम् ॥ विवस्वान्मनवेप्राहमनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥ एवंपरंपराप्राप्तमिमंराजर्षयोविदुः ॥ सकालेनेहमहतायोगोनष्टःपरंतप ॥ २ ॥ सएवायंमयातेऽद्ययोगःप्रोक्तःपुरातनः ॥ भक्तोऽसिमेसखाचेतिरहस्यंह्येतदुत्तमम् ॥ ३ ॥

नस्तुवन् श्रीभगवानुवाच इममितित्रिभिः । अव्ययफलत्वादव्ययं इमंयोगं पुराहंविवस्वतेआदित्यायकथितवान् सचस्वपुत्रायमनवेश्राद्धदेवायप्राह सचमनुःस्वपु त्रायेक्ष्वाकवेऽब्रवीत् ॥१॥ एवमिति । राजानश्चतऋषयश्चान्येऽपिराजर्षयोनिमिप्रमुखाः स्वपुत्रादिभिरिक्ष्वाकुप्रमुखैःप्रोक्तमिमंयोगंविदुर्जानंतिस्म अद्यतनानामज्ञा नेकारणमाह हेपरंतप शत्रुतापन । सयोगःकालवशादिहलोकेनष्टःविच्छिन्नः ॥२॥ सएवायमिति । सएवायंयोगोऽद्यविच्छिन्नेसंप्रदायेसतिपुनश्चमयातेतुभ्यमुक्तः

यतस्त्वंममभक्तोऽसिसखाचेति अन्यस्मै मयानोच्यते हियस्मादिदमुत्तमंरहस्यम ॥ ३ ॥ भगवतोविवस्वंतंप्रतियोगोपदेशासंभवंपश्यन्नर्जुनउवाच अपरमिति। अपरमर्वाचीनं तवजन्म परंप्राक्कालीनंविवस्वतोजन्म तस्मात्त्वाधुनिकत्वाच्चिरंतनायविवस्वतेत्वमादौयोगंप्रोक्तवानित्येतत्कथमहंविजानीयांज्ञातुंशक्नुयाम ॥४॥ इतिपृष्टवंतमर्जुनंरूपांतरेणोपदिष्टवानित्यभिप्रायेणोत्तरं श्रीभगवानुवाच बहूनीति। ममबहूनिजन्मानितवचव्यतीतानितानिसर्वाण्यहंवेदजानाभि अलुप्तविद्याशक्तित्वात् त्वंतुनजानासि अविद्यावृतत्वात् ॥ ५ ॥ नन्वनादेस्तवकुतोजन्मअविनाशिनश्चकथंपुनर्जन्मयेनबहूनिमेव्यतीतानीत्युच्यते ईश्वरस्यतवपुण्य

अर्जुनउवाच ॥ ॥ अपरंभवतोजन्मपरंजन्मविवस्वतः ॥ कथमेतद्विजानीयांत्वमादौप्रोक्तवानिति ॥ ४ ॥ ॥ श्रीभगवानुवाच ॥ बहूनिमेव्यतीतानिजन्मानितवचार्जुन ॥ तान्यहंवेदसर्वाणिनत्वंवेत्थपरंतप ॥ ५ ॥ अजोऽपिसन्नव्ययात्माभूतानामीश्वरोऽपिसन् ॥ प्रकृतिंस्वामधिष्ठायसंभवाम्यात्ममायया ॥ ६ ॥ यदायदाहिधर्मस्यग्लानिर्भवतिभारत ॥ अभ्युत्थानमधर्मस्यतदात्मानंसृजाम्यहम् ॥ ७ ॥

पापविहीनस्यकथंजीववज्जन्मेत्यतआह अजोऽपीति। सत्यमेवंतथापिअजोऽपिसन्नहंतथाव्ययात्मापिअनश्वरस्वभावोऽपिसन्तथाईश्वरोऽतिकर्मपारतंत्र्यरहितोऽपिसन्स्वमाययासंभवामि सम्यगप्रच्युतज्ञानबलवीर्यादिशक्त्यैवभवामि ननु तथापिषोडशकलात्मकलिंगदेहशून्यस्यतवकुतोजन्मेत्यतउक्तं स्वांशुद्धसत्त्वात्मिकांप्रकृतिमधिष्ठायस्वीकृत्यविशुद्धोर्जितसत्त्वमूर्त्यास्वेच्छयाअवतरामीत्यर्थः ॥ ६ ॥ कदासंभवसीत्यपेक्षायामाह यदायदेति। धर्मस्यग्लानिर्हानिः अधर्मस्यअभ्युत्थानमाधिक्यम् ॥ ७ ॥

किमर्थमित्यपेक्षायामाह परित्राणायेति । साधूनांस्वधर्मवर्तिनांरक्षणाय दुष्टंकर्मकुर्वंतीतिदुष्कृतस्तेषांवधायच एवंधर्मस्यसंस्थापनार्थायसाधुरक्षणेनदुष्टवधेनचधर्मं स्थिरीकर्तुंयुगेयुगेतत्तदवसरेसंभवामीत्यर्थः नचैवंदुष्टनिग्रहंकुर्वतोऽपिनैर्घृण्यंशंकनीयं यथाचाहुः—'लालनेताडनेमातुर्नाकारुण्यंयथाऽर्भके ॥ तद्वदेवमहेशस्यनियं तुर्गुणदोषयोः'इति ॥ ८ ॥ एवंविधानामीश्वरजन्मकर्मणांज्ञानेफलमाह जन्मकर्मेति । मेजन्मस्वेच्छाकृतंकर्मचधर्मपालनरूपंदिव्यमलौकिकंतत्त्वतःपरानुग्रहार्थमेवे तियोवेत्तिसदेहाभिमानंत्यक्त्वापुनर्जन्मनैतिनप्राप्नोति किंतुमामेवप्राप्नोति ॥ ९ ॥ कथंजन्मकर्मज्ञानेनत्वत्प्राप्तिःस्यादित्यत्राह वीतरागेति । अहंशुद्धसत्त्वावतारै

परित्राणायसाधूनांविनाशायचदुष्कृताम् ॥ धर्मसंस्थापनार्थायसंभवामियुगेयुगे ॥ ८ ॥
जन्मकर्मचमेदिव्यमेवंयोवेत्तितत्त्वतः ॥ त्यक्त्वादेहंपुनर्जन्मनैतिमामेतिसोऽर्जुन ॥ ९ ॥
वीतरागभयक्रोधामन्मयामामुपाश्रिताः ॥ बहवोज्ञानतपसापूतामद्भावमागताः ॥ १० ॥

धर्मपरिपालनंकरोमीतिमदीयंपरमकारुणिकत्वंज्ञात्वा वीताविगतारागभयक्रोधायेभ्यस्ते विक्षेपाभावात् मन्मयामदेकचित्ताभूत्वामामेवोपाश्रिताःसंतोमत्प्रसादल भ्यंयदात्मज्ञानंचतपश्चतत्परिपाकहेतुःस्वधर्मःतयोर्द्वंद्वैकवद्भावः तेनज्ञानतपसापूताःशुद्धानिरस्ताज्ञानतत्कार्यमलाःसंतोमद्भावंमत्सायुज्यंप्राप्ताबहवः नत्वधुनै वप्रवृत्तोऽयंमद्भक्तिमार्गइत्यर्थः तदेवंतान्यहंवेदसर्वाणीत्यादिनाविद्याविद्योपाधिभ्यांतत्त्वंपदार्थावीश्वरजीवौप्रदर्श्येश्वरस्यचाविद्याभावेननित्यशुद्धत्वाज्जीवस्यचे श्वरप्रसादलब्धज्ञानेनाज्ञाननिवृत्तेःशुद्धस्यसतश्चिदंशेनतदैक्यमुक्तमितिद्रष्टव्यम् ॥ १० ॥

ननुतर्हिंकिंत्वय्यपिवैषम्यमस्ति यस्मादेवंत्वदेकशरणानामेवात्मभावंददासिनान्येषांसकामानामित्यतआह येयथेति । यथायेनप्रकारेणसकामतयानिष्कामतया
वायेमांभजंतितानहंतथैवतदपेक्षितफलदानेनभजामिअनुगृह्णामि नतुयेसकामामांविहायेंद्रादीनेवभजंतेतानहमुपेक्षइतिमंतव्यम् यतःसर्वशःसर्वप्रकारैःइंद्रा
दिसेवकाअपिममैववर्त्मभजनमार्गमनुवर्तंते इंद्रादिरूपेणापिममैवसेव्यत्वात् ॥ ११ ॥ तर्हिमोक्षार्थमेवकिमितिसर्वेत्वांनभजंतीत्यतआह कांक्षंतइति । कर्मणां
सिद्धिंफलंकांक्षंतः प्रायशःइह मनुष्यलोकेइंद्रादिदेवताएवयजंतेनतुसाक्षान्मामेव हियस्मात्कर्मजासिद्धिःकर्मजंफलंशीघ्रंभवतिनतुज्ञानफलंकैवल्यं दुष्प्राप्य
त्वाज्ज्ञानस्य ॥ १२ ॥ ननु केचित्सकामतयाप्रवर्तंते केचिन्निष्कामतयेतिकर्मवैचित्र्यं तत्कर्तॄणांचब्राह्मणादीनामुत्तममध्यमादिवैचित्र्यंकुर्वतस्तवकथंवैषम्यं

येयथामांप्रपद्यंतेतांस्तथैवभजाम्यहम् ॥ ममवर्त्मानुवर्तन्तेमनुष्याःपार्थसर्वशः ॥ ११ ॥
कांक्षन्तःकर्मणांसिद्धिंयजंतइहदेवताः ॥ क्षिप्रंहिमानुषेलोकेसिद्धिर्भवतिकर्मजा ॥ १२ ॥
चातुर्वर्ण्यंमयासृष्टंगुणकर्मविभागशः ॥ तस्यकर्तारमपिमांविद्ध्यकर्तारमव्ययम् ॥ १३ ॥

नास्तीत्याशंक्याह चातुर्वर्ण्यमिति । चत्वारोवर्णाएवचातुर्वर्ण्यम् स्वार्थेष्यञ्प्रत्ययः—अयमर्थः--सत्वप्रधानाब्राह्मणास्तेषांशमदमादीनिकर्माणि सत्वरजःप्रधानाः
क्षत्रियास्तेषांचशौर्ययुद्धादीनिकर्माणि रजस्तमःप्रधानावैश्यास्तेषांकृषिवाणिज्यादीनिकर्माणि तमःप्रधानाःशूद्रास्तेषांचत्रैवर्णिकशुश्रूषादिकर्माणीत्येवंगुणा
नांकर्मणांचविभागैश्चातुर्वर्ण्यंमयैवसृष्टमिति सत्यं तथाप्येवंतस्यकर्तारमपिफलतोऽकर्तारमेवमांविद्धि तत्रहेतुः अव्ययं आसक्तिराहित्येनश्रमरहितंनाश

दिरहितम् ॥ १३ ॥ तदेवदर्शयन्नाह नमामिति। कर्माणिविश्वसृष्ट्यादीन्यपिमांनलिंपंतिआसक्तंनकुर्वंति निरहंकारत्वात्आप्तकामत्वेनममकर्मफलेस्पृहाभा वाच्च मांनलिंपंतीतिकिंवक्तव्यं यतःकर्मफलेस्पृहाराहित्येनमांयोऽभिजानातिसोऽपिकर्मभिर्नबद्ध्यते ममनिर्लेपत्वेकारणंनिरहंकारत्वनिःस्पृहत्वादिकंजानतस्त स्याप्यहंकारादिशैथिल्यात् ॥ १४ ॥ येयथामांप्रपद्यंतइत्यादिचतुर्भिःश्लोकैःप्रासंगिकमीश्वरस्यवैषम्यंपरिहृत्यपूर्वोक्तमेवकर्मयोगंप्रपंचयितुमनुस्मारयति एवमिति। अहंकारादिराहित्येनकृतंकर्मबंधकंनभवतीत्येवंज्ञात्वापूर्वैर्जनकादिभिरपिमुमुक्षुभिःसत्वशुद्ध्यर्थंपूर्वतरंयुगांतरेष्वपिकृतम् तस्मात्त्वमपिप्रथमंकर्मैवकुरु ॥ १५ ॥ तच्चतत्त्वविद्भिःसहविचार्यकर्तव्यंनलोकपरंपरामात्रेणेत्याह किंकर्मेति। किंकर्मकीदृशंकर्मकरणं किमकर्मकीदृशंकर्माकरणमित्येतस्मिन्नर्थेविवेकिनोऽपिमोहिताः अ

**नमांकर्माणिलिंपंतिनमेकर्मफलेस्पृहा ॥ इतिमांयोऽभिजानातिकर्मभिर्नसबद्ध्यते ॥ १४ ॥ एवंज्ञात्वाकृतंकर्मपूर्वैरपिमुमुक्षुभिः ॥ कुरुकर्मैवतस्मात्त्वंपूर्वैःपूर्वतरंकृतम् ॥ १५ ॥ किंकर्मकिमकर्मेतिकवयोऽप्यत्रमोहिताः ॥ तत्तेकर्मप्रवक्ष्यामियज्ज्ञात्वामोक्ष्यसेऽशुभात् ॥ १६ ॥ कर्मणोह्यपिबोद्धव्यंबोद्धव्यंचविकर्मणः ॥ अकर्मणश्चबोद्धव्यंगहनाकर्मणोगतिः ॥ १७ ॥**

तोयज्ज्ञात्वानुष्ठायअशुभात्संसारान्मोक्ष्यसे मुक्तोभविष्यसि तत्कर्माकर्मचतुभ्यमहंप्रवक्ष्यामिशृणु ॥ १६ ॥ ननुलोकप्रसिद्धमेवकर्मदेहादिव्यापारात्मकं अकर्म चतदव्यापारात्मकं अतःकथमुच्यतेकवयोऽप्यत्रमोहंप्राप्ताइतितत्राह कर्मणइति। कर्मणोविहितव्यापारस्यापितत्त्वंबोद्धव्यमस्ति नतुलोकसिद्धमात्रमेव अकर्मणाऽ विहितव्यापारस्यापितत्त्वंबोद्धव्यमस्ति विकर्मणोऽपिनिषिद्धस्यापितत्त्वंबोद्धव्यमस्ति यतःकर्मणोगतिर्गहना कर्मणइत्युपलक्षणार्थम् कर्माकर्मविकर्मणांतत्त्वंबोद्ध व्यमस्ति यतः दुर्विज्ञेयमित्यर्थः ॥ १७ ॥

तदेवंकर्मादीनांदुर्विज्ञेयत्वंदर्शयन्नाह कर्मण्यकर्मेति । परमेश्वराराधनलक्षणेकर्मणिविषयेअकर्मकर्मेदंनभवतीतियःपश्येत्तस्यज्ञानहेतुत्वेनबंधकत्वाभावात् अकर्मणि चविहिताकरणेकर्मयःपश्येत्तस्य प्रत्यवायोत्पादकत्वेनबंधहेतुत्वात् मनुष्येषुकर्मकुर्वाणेषुसबुद्धिमान्व्यवसायात्मकबुद्धिमत्त्वाच्छ्रेष्ठःसंस्तौति सयुक्तःयोगीतेन कर्मणाज्ञानयोगावाप्तेः सएवकृत्स्नकर्मकर्ताच सर्वतःसंप्लुतोदकस्थानीयेतस्मिन्कर्मणिसर्वकर्मफलानामंतर्भूतत्वात् तदेवमारुरुक्षोःकर्मयोगाधिकारावस्थायांन कर्मणामनारंभादित्यादिनोक्तएवकर्मयोगःस्फुटिकृतः तत्प्रपंचरूपत्वाच्चास्यप्रकरणस्यनपौनरुक्त्यदोषः अनेनैवयोगारूढावस्थायांयस्त्वात्मरतिरेवस्यादित्यादि नायः कर्मानुपयोगउक्तस्तस्याप्यर्थात्प्रपंचःकृतोवेदितव्यः यदाआरुरुक्षोरपिकर्मबंधकंनभवति तदारूढस्यकुतोबंधकंस्यादित्यत्रापिश्लोकोयोज्यते यद्वा कर्मणिदे

कर्मण्यकर्मयःपश्येदकर्मणिचकर्मयः ॥ सबुद्धिमान्मनुष्येषुसयुक्तःकृत्स्नकर्मकृत् ॥ १८ ॥
यस्यसर्वेसमारंभाःकामसंकल्पवर्जिताः ॥ ज्ञानाग्निदग्धकर्माणंतमाहुःपंडितंबुधाः ॥ १९ ॥

हेन्द्रियादिव्यापारेवर्तमानेऽप्यात्मनोदेहादिव्यतिरेकानुभवेनाकर्मस्वाभाविकंनैष्कर्म्यमेवयःपश्येत् तथाकर्मणिचज्ञानरहितेदुःखबुद्ध्याकर्मणांत्यागेकर्मयःपश्येत् त स्यप्रतिबंधकत्वेनमिथ्याचारत्वात् तदुक्तं'कर्मेन्द्रियाणिसंयम्यय आस्तेमनसास्मरन्' इतियएवंभूतःसतुसर्वेषुमनुष्येषुबुद्धिमान्पंडितःतत्रहेतुः यतःकृत्स्नानिसर्वाणि यदृच्छयाप्राप्तान्याहारादीनिकर्माणिकुर्वन्नपिसयुक्तएवाकर्त्रात्मज्ञानेनसमाधिस्थएवेत्यर्थः अनेनैवज्ञानिनःस्वभावादापन्नंकलंजभक्षणादिकंनदोषाय अज्ञस्यतु रागतःकृतंदोषायेतिविकर्मणोऽपितत्त्वंनिरूपितंद्रष्टव्यम् ॥ १८ ॥ कर्मण्यकर्मयःपश्येदितिश्रुतयर्थार्थापत्तिभ्यांयदुक्तमर्थद्वयंतदेवस्पष्टयति यस्येत्यादिपंचभिः ।

सम्यगारभ्यंतइतिसमारंभाःकर्माणि काम्यतइतिकामःबलंतत्संकल्पेनवर्जितायस्यभवंतितंपंडितमाहुःतत्रहेतुःयतस्तैःसमारंभैःशुद्धचित्तेसतिजातेनज्ञानाग्निनाद
ग्धानिअकर्मतांनीतानिकर्माणियस्यतं आरूढावस्थायांतुकामःफलविषयस्तदर्थमिदंकर्मकर्तव्यमितिकर्मविषयःसंकल्पश्चताभ्यांवर्जितः शेषंस्पष्टम् ॥ १९ ॥
किंच त्यक्त्वेति । कर्मणितत्फलेचासक्तिंत्यक्त्वानित्येननिजानंदेनतृप्तःअतएवयोगक्षेमार्थमाश्रयणीयरहितः एवंभूतोयःस्वाभाविकेविहितेचकर्मणिअभितःप्रवृत्तोऽ
पिकिंचिदपिनैवकरोतितस्यकर्माकर्मतामापद्यतइत्यर्थः ॥ २० ॥ किंच निराशीरिति । निर्गताआशिषःकामनायस्मात् यतंनियतंचित्तंआत्माचशरीरंयस्य त्यक्ताः
सर्वेपरिग्रहायेनसः शारीरंशरीरमात्रनिर्वर्त्यंकर्तृत्वाभिनिवेशरहितंकर्मकुर्वन्नपिकिल्बिषंबंधनंनप्राप्नोति योगारूढपक्षेशरीरनिर्वाहमात्रोपयोगिस्वाभाविकंभिक्षाटना

**त्यक्त्वाकर्मफलासंगंनित्यतृप्तोनिराश्रयः ॥ कर्मण्यभिप्रवृत्तोऽपिनैवकिंचित्करोतिसः ॥ २० ॥ निराशीर्यतचित्तात्मात्यक्तसर्वपरिग्र
हः ॥ शारीरंकेवलंकर्मकुर्वन्नाप्नोतिकिल्बिषम् ॥ २१ ॥ यदृच्छालाभसंतुष्टोद्वंद्वातीतोविमत्सरः ॥ समःसिद्धावसिद्धौचकृत्वाऽपि
ननिबध्यते ॥ २२ ॥ गतसंगस्यमुक्तस्यज्ञानावस्थितचेतसः ॥ यज्ञायाचरतःकर्मसमग्रंप्रविलीयते ॥ २३ ॥**

दिकर्मकुर्वन्नपिकिल्बिषंविहिताकरणनिमित्तंदोषंनप्राप्नोतीति ॥ २१ ॥ किंच यदृच्छेति । अप्रार्थितोपस्थितोलाभोयदृच्छालाभः तेनसंतुष्टः द्वंद्वानिशीतोष्णादी
न्यतीतः अतिक्रांतः तत्सहनशीलइत्यर्थः विमत्सरोनिर्वैरःयदृच्छालाभस्यापिसिद्धावसिद्धौचसमःहर्षविषादरहितः यएवंभूतःसपूर्वोत्तरभूमिकयोर्यथाययथंवि
हितंस्वाभाविकंवाकर्मकृत्वाऽपिनबंधंप्राप्नोति ॥ २२ ॥ किंच गतसंगस्येति । गतसंगस्यनिष्कामस्यरागादिभिर्मुक्तस्य ज्ञानेवस्थितंचेतोयस्य यज्ञायपरमेश्वरार्थंक
र्माचरतःसतःसमग्रंसवासनंकर्मप्रविलीयते अकर्मभावमापद्यते आरूढयोगपक्षे यज्ञायेति यज्ञसंरक्षणार्थंलोकसंग्रहार्थमेवकर्मकुर्वतइत्यर्थः ॥ २३ ॥

तदेवंपरमेश्वराराधनलक्षणंकर्मज्ञानहेतुत्वेनबंधकत्वाभावादकर्मैव आरूढावस्थायांत्वकर्त्रात्मज्ञानेनबाधितत्त्वात्स्वाभाविकमपिकर्माकर्मैवेति कर्मण्यकर्मयःपश्ये
दित्यनेनोक्तःकर्मप्रविलयःप्रपंचितः इदानींकर्माणितदंगेषुचब्रह्मैवानुस्यूतंपश्यतःकर्मप्रविलयमाह ब्रह्मार्पणमिति । अर्प्यतेऽनेनेत्यर्पणंस्रुवादितदपिब्रह्मैव
अर्प्यमाणंहविरपिघृतादिकंब्रह्मैव ब्रह्मैवाग्निस्तस्मिन्ब्रह्मणाकर्त्राचहुतंब्रह्मैव होमः अग्निश्चकर्ताचक्रियाचब्रह्मैवेत्यर्थः एवंब्रह्मण्येवकर्मात्मकेसमाधिश्चित्तैका
ग्र्यंयस्यतेनब्रह्मैवगंतव्यंप्राप्यंनतुफलांतरमित्यर्थः ॥ २४ ॥ एतदेवयज्ञत्वेनसम्पादितंसर्वत्रब्रह्मदर्शनलक्षणंज्ञानं सर्वयज्ञोपायप्राप्यत्वात्सर्वयज्ञेभ्यःश्रेष्ठमि
त्येवंस्तोतुं अधिकारिभेदेनज्ञानोपायभूतान्बहून्यज्ञानाह दैवमित्यष्टभिः । देवाइंद्रवरुणादयइज्यंतेयस्मिन् एवकारेणेंद्रादिषुब्रह्मबुद्धिराहित्यंदर्शितं तंदैवं

**ब्रह्मार्पणंब्रह्महविर्ब्रह्माग्नौब्रह्मणाहुतम् ॥ ब्रह्मैवतेनगंतव्यंब्रह्मकर्मसमाधिना ॥ २४ ॥ दैवमेवापरेयज्ञंयोगिनःपर्युपासते ॥ ब्रह्माग्ना
वपरेयज्ञंयज्ञेनैवोपजुह्वति ॥ २५ ॥ श्रोत्रादीनींद्रियाण्यन्येसंयमाग्निषुजुह्वति ॥ शब्दादीन्विषयानन्यइंद्रियाग्निषुजुह्वति ॥ २६ ॥**

यज्ञं अपरेकर्मयोगिनःपर्युपासतेश्रद्धयाऽनुतिष्ठंति अपरेतुज्ञानयोगिनःब्रह्मरूपेऽग्नौयज्ञेनैवोपायभूतेनब्रह्मार्पणमित्युक्तप्रकारेणयज्ञमुपजुह्वति यज्ञादिसर्वकर्मा
णिप्रविलापयंतीत्यर्थः सोऽयंज्ञानयज्ञः ॥ २५ ॥ श्रोत्रादीनीति । अन्येनैष्ठिकब्रह्मचारिणस्तत्तदिंद्रियसंयमरूपेष्वग्निषुश्रोत्रादीनिजुह्वतिप्रविलापयंति
इंद्रियाणिनिरुध्यसंयमप्रधानास्तिष्ठंतीत्यर्थः इंद्रियाण्येवाग्नयस्तेषुशब्दादीनन्येगृहस्थाजुह्वतिविषयान् भोगसमयेप्यनासक्ताःसंतोग्नित्वेनभावितेष्विंद्रियेषुहवि
ष्ट्वेनभावितानशब्दादीन्प्रक्षिपंतीत्यर्थः ॥ २६ ॥

सर्वाणीति । अपरेध्याननिष्ठाः बुद्धींद्रियाणांश्रोत्रादीनाकर्माणिश्रवणदर्शनादीनि कर्मेन्द्रियाणांवाक्पाण्यादीनांकर्माणिवचनोपादानादीनिच प्राणानांदशानां कर्माणि प्राणस्यबहिर्गमनं अपानस्याधोनयनम व्यानस्यव्यानयनाकुंचनप्रसारणादि समानस्याशितपीतादीनांसम्यगुन्नयनम् उदानस्योर्ध्वनयनम् 'उद्गारेनागआख्यातःकूर्मउन्मीलनेस्मृतः । कृकरःक्षुतकृज्ज्ञेयोदेवदत्तोविजृंभणे ॥ नजहातिमृतंचापिसर्वव्यापी धनंजयः'इत्येवंरूपाणिजुह्वति क्कआत्मनिसंयमोध्यानैकाग्र्यंसएवंयोगःसएवाग्निस्तस्मिन ज्ञानेनध्येयविषयेणदीपितेप्रज्वलिते ध्येयंसम्यग्ज्ञात्वातास्मिन्मनःसंयम्यतानिसर्वाणिकर्माण्युपरमयतीत्यर्थः ॥ २७ ॥ किंच

सर्वाणींद्रियकर्माणिप्राणकर्माणिचापरे ॥ आत्मसंयमयोगाग्नौजुह्वतिज्ञानदीपिते ॥ २७ ॥ द्रव्ययज्ञास्तपोयज्ञायोगयज्ञास्तथापरे ॥
स्वाध्यायज्ञानयज्ञाश्चयतयःसंशितव्रताः ॥ २८ ॥ अपानेजुह्वतिप्राणंप्राणेऽपानंतथापरे ॥ प्राणापानगतीरुद्ध्वाप्राणायामपरायणाः
॥ २९ ॥ अपरेनियताहाराःप्राणान्प्राणेषुजुह्वति ॥ सर्वेऽप्येतेयज्ञविदोयज्ञक्षपितकल्मषाः ॥ ३० ॥

द्रव्येति । द्रव्यदानमेवयज्ञोयेषांतेद्रव्ययज्ञाः कृच्छ्रचांद्रायणादितपएवयज्ञोयेषांतेतपोयज्ञाः योगश्चित्तवृत्तिनिरोधलक्षणः समाधिः सएवयज्ञोयेषांतेयोगयज्ञाः स्वाध्यायेनवेदेनश्रवणमननादिनायत्तदर्थज्ञानंतदेवयज्ञोयेषांते अथवावेदपाठयज्ञास्तदर्थज्ञानयज्ञाश्चेतिद्विविधायतयःप्रयत्नशीलाः सम्यक्शितंनिशितंतीक्ष्णीकृतंव्रतंयेषांते ॥ २८ ॥ किंच अपानइति । अपानेअधोवृत्तौप्राणमूर्ध्ववृत्तिंपूरकेणजुह्वति पूरककालेप्राणमपानेनैकीकुर्वंति तथाकुंभकेनप्राणापानयोरूर्ध्वाधोगतीरुध्द्वारेचककालेअपानंप्राणेजुह्वति एवंपूरककुंभकरैचकैःप्राणायामपरायणाअपरेइत्यर्थः ॥ २९ ॥ किंच अपरइति । अपरेत्वाहारसंकोचमभ्यस्यंतः स्वयमेवजी

र्यमाणेष्विंद्रियेषुतत्तदिंद्रियवृत्तिलयंहोमंभावयंतीत्यर्थः यद्वा 'अपानेजुह्वतिप्राणंप्राणेऽपानंतथापरे'इत्यनेनपूरकरेचकयोरावर्त्यमानयोर्हंसःसोहमित्यनुलोमतःप्रति लोमतश्चाभिव्यज्यमानेनाजपामंत्रेणतत्त्वंपदार्थैक्यंव्यतिहारेणभावयंतीत्यर्थः तदुक्तंयोगशास्त्रे –'सकारेणबहिर्यातिहकारेणविशेत्पुनः । प्राणस्तत्रसएवाहंहंसइत्य त्यनुचिंतयेत्'इति प्राणापानगतीरुद्ध्वेत्यनेनतुश्लोकेनप्राणायामयज्ञाःअपरैःकथ्यंतेतत्रायमर्थः–'द्वौभागौपूरयेदन्नैस्तोयेनैकंप्रपूरयेत्।मारुतस्यप्रचारार्थंचतुर्थमवशे षयेत्'इत्येवमादिवचनोक्तोनियतआहारोयेषांते कुंभकेनप्राणापानगतीरुध्द्वाप्राणायामपरायणाःसंतःप्राणानिंद्रियाणिप्राणेषुजुह्वति कुंभकेहिसर्वेप्राणाएकीभवंतीति तत्रैवलीयमानेष्विंद्रियेषुहोमंभावयंतीत्यर्थः तदुक्तंयोगशास्त्रे–'यथायथासदाभ्यासान्मनसःस्थिरताभवेत् वायुवाक्कायदृष्टीनांस्थिरताचतथातथा'इति तदेवमुक्तान

यज्ञशिष्टामृतभुजोयांतिब्रह्मसनातनम् ॥ नायंलोकोऽस्त्ययज्ञस्यकुतोऽन्यःकुरुसत्तम ॥ ३१ ॥

एवंबहुविधायज्ञाविततान्ब्रह्मणोमुखे ॥ कर्मजान्विद्धितान्सर्वानेवंज्ञात्वाविमोक्ष्यसे ॥ ३२ ॥

द्वादशानांयज्ञविदांफलमाह सर्वइति । यज्ञान्विदंतिलभंतइतियज्ञविदः यज्ञज्ञाइतिवा यज्ञैःक्षपितंनाशितंकल्मषंयैस्ते ॥ ३० ॥ यज्ञशिष्टेतियज्ञान्कृत्वाऽवशि ष्टेकालेऽनिषिद्धमन्नममृतरूपंभुंजतइतितथातेसनातनंनित्यंब्रह्मज्ञानद्वारेणप्राप्नुवंति तदकरणेदोषमाह नायंलोकइति । अयमल्पसुखोऽपिमनुष्यलोकः अयज्ञ स्ययज्ञानुष्ठानशून्यस्यनास्तिकुतोऽन्यःपरलोकः अतोयज्ञाःसर्वथाकर्तव्याइत्यर्थः ॥ ३१ ॥ ज्ञानयज्ञंस्तोतुंउक्तान्यज्ञानुपसंहरति एवमिति । ब्रह्मणोवेदस्यमुखे वितताः वेदेन साक्षाद्विहिताइत्यर्थः तथापितान्सर्वान्वाङ्मनःकायकर्मजनितानात्मस्वरूपसंस्पर्शरहितान्विद्धि जानीहि आत्मनःकर्मागोचरत्वादेवंज्ञात्वाज्ञान निष्ठःसन्संसाराद्विमुक्तोभविष्यसि ॥ ३२ ॥

कर्मयज्ञाज्ज्ञानयज्ञस्तुश्रेष्ठइत्याह श्रेयानिति । द्रव्यमयादनात्मव्यापारजन्याद्दैवादियज्ञाज्ज्ञानयज्ञःश्रेयान्श्रेष्ठः यद्यपिज्ञानयज्ञस्यापिमनोव्यापाराधीनत्वमस्त्ये
तथाप्यात्मरूपस्यज्ञानस्यमनःपरिणामेऽभिव्यक्तिमात्रं नतुतज्जन्यत्वमितिद्रव्यमयाद्विशेषः श्रेष्ठत्वेहेतुः सर्वंकर्माखिलंफलसहितंज्ञानेपरिसमाप्यते अंतर्भवती
त्यर्थः "सर्वंतदभिसमेतियत्किंचित्प्रजाःसाधुकुर्वंति"इतिश्रुतेः ॥३३॥ एवंभूतात्मज्ञानेसाधनमाह तद्विद्धीति । तज्ज्ञानंविद्धिप्राप्नुहि ज्ञानिनांप्रणिपातेनदंडवन्न
मस्कारेण ततःपरिप्रश्नेनकुतोऽयंममसंसारःकथंवानिवर्ततइतिप्रश्नेन सेवयाशुश्रूषयाचज्ञानिनःशास्त्रज्ञास्तत्त्वदर्शिनःअपरोक्षानुभवसंपन्नाश्चतेतुभ्यंज्ञानमुपदेशेन

श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञःपरंतप ॥ सर्वंकर्माखिलंपार्थज्ञानेपरिसमाप्यते ॥ ३३ ॥ तद्विद्धिप्रणिपातेनपरिप्रश्नेनसेवया ॥ उप
देक्ष्यंतितेज्ञानंज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥ यज्ज्ञात्वानपुनर्मोहमेवंयास्यसिपांडव ॥ येनभूतान्यशेषेणद्रक्ष्यस्यात्मन्यथोमयि ॥ ३५ ॥
अपिचेदसिपापेभ्यःसर्वेभ्यःपापकृत्तमः ॥ सर्वंज्ञानप्लवेनैववृजिनंसंतरिष्यसि ॥ ३६ ॥ यथैधांसिसमिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ॥
ज्ञानाग्निःसर्वकर्माणिभस्मसात्कुरुतेतथा ॥ ३७ ॥

संपादयिष्यंति ॥ ३४ ॥ ज्ञानफलमाह यज्ज्ञात्वेतिसार्धैस्त्रिभिः । यज्ज्ञानंज्ञात्वाप्राप्यपुनर्बंधुवधादिनिमित्तंमोहंनप्राप्स्यसि तत्रहेतुः येनज्ञानेनभूतानिपितृपुत्रा
दीनिस्वाविद्याराचितानिस्वात्मन्येवाभेदेनद्रक्ष्यसि अथोअनंतरमात्मानंमयिपरमात्मन्येवाभेदेनद्रक्ष्यसीत्यर्थः ॥ ३५ ॥ किंच अपिचेदिति । सर्वेभ्यःपापकारिभ्यो
यद्यपिअतिशयेनपापकारीत्वमसि तथापिसर्वंपापसमुद्रंज्ञानपोतेनैवसम्यगनायासेनतरिष्यसि ॥ ३६ ॥ समुद्रवत्स्थितस्यैवपापस्यातिलंघनमात्रंनतुपापस्यनाश

इतिभ्रांतिदृष्टांतेनवारयन्नाह यथेति । एधांसिकाष्ठानिप्रदीप्तोऽग्निर्यथाभस्मीभावंनयतितथाआत्मज्ञानरूपोग्निःप्रारब्धकर्मव्यतिरिक्तानिसर्वाणिकर्माणिभस्मीकरो
तीत्यर्थः ॥ ३७ ॥ तत्रहेतुमाह नहीति । पवित्रंशुद्धिकरंइहतपोयोगादिषुमध्येज्ञानतुल्यंनास्त्येव तर्हिसर्वेऽप्यात्मज्ञानमेवकिंनाभ्यस्यंतीत्यतआह तत्स्वयमितिसा
र्धेन । तदात्मविषयंज्ञानंकालेनमहताकर्मयोगेनसंसिद्धोयोग्यतांप्राप्तःसन्स्वयमेवानायासेनलभते नतुकर्मयोगंविनेत्यर्थः ॥ ३८ ॥ किंच श्रद्धावानिति । श्रद्धावा
नगुरूपदिष्टेऽर्थेआस्तिक्यबुद्धिमान् तत्परस्तदेकनिष्ठः संयतेंद्रियश्चतज्ज्ञानंलभतेनान्यः अतः श्रद्धादिसंपत्त्याज्ञानलाभात्प्राक्कर्मयोगएवशुद्ध्यर्थमनुष्ठेयः
ज्ञानलाभानंतरंतुनतस्यकिंचित्कृत्यमस्तीत्याह ज्ञानंलब्ध्वात्वचिरेणपरांशांतिंमोक्षंप्राप्नोति ॥ ३९ ॥ ज्ञानाधिकारिणमुक्त्वातद्विपरीतमनधिकारिणमाह अज्ञश्चेति ।

नहिज्ञानेनसदृशंपवित्रमिहविद्यते ॥ तत्स्वयंयोगसंसिद्धःकालेनात्मनिविंदति ॥ ३८ ॥ श्रद्धावाँल्लभतेज्ञानंतत्परःसंयतेंद्रियः ॥
ज्ञानंलब्ध्वापरांशांतिमचिरेणाधिगच्छति ॥ ३९ ॥ अज्ञश्चाश्रद्दधानश्चसंशयात्माविनश्यति ॥ नायंलोकोऽस्तिनपरोनसुखंसंशया
त्मनः ॥ ४० ॥ योगसंन्यस्तकर्माणंज्ञानसंछिन्नसंशयम् ॥ आत्मवंतंनकर्माणिनिबध्नंतिधनंजय ॥ ४१ ॥

अज्ञोगुरूपदिष्टार्थानभिज्ञःकथंचिज्ज्ञानेजातेऽप्यश्रद्दधानश्चजातायामपिश्रद्धायांममेदंसिद्ध्येद्वानवेतिसंशयाक्रांतचित्तश्चनश्यति स्वार्थाद्भ्रश्यति एतेषुत्रिष्वपिसं
शयात्मासर्वथानश्यतियतस्तस्यायंलोकोनास्तिधनार्जनविवाहाद्यसिद्धेः, नचपरलोकः धर्मस्यानिष्पत्तेः, नचसुखं संशयेनैवभोगस्याप्यसंभवात् ॥ ४० ॥
अध्यायद्वयोक्तांपूर्वापरभूमिकाभेदेनकर्मज्ञानमयींद्विविधांब्रह्मनिष्ठामुपसंहरति योगेतिद्वाभ्यां । योगेनपरमेश्वराराधनरूपेणतस्मिन्संन्यस्तानिसमर्पितानिकर्मा
णियेनतंपुरुषंकर्माणिस्वफलैर्निबध्नंति अतश्चज्ञानेनाकर्त्रात्मबोधेनसंछिन्नःसंशयोदेहाद्यभिमानलक्षणोयस्यतंचात्मवंतमप्रमादिनंकर्माणिलोकसंग्रहार्थानिस्वाभा

विकानिवाननिबध्नंति ॥ ४१ ॥ तस्मादिति । यस्मादेवंतस्मादात्मानोऽज्ञानेनसंभूतंहृदिस्थितमेनंसंशयंशोकादिनिमित्तंदेहात्मविवेकज्ञानखड्गेनच्छित्त्वापरमा त्मज्ञानापायभूतंकर्मयोगमातिष्ठाश्रय तत्रचप्रथमंप्रस्तुतायुद्धायोत्तिष्ठ । हेभारत ! क्षत्रियत्वेनयुद्धस्यस्वधर्मत्वंदर्शितम् ॥ ४२ ॥ 'पुमवस्थादिभेदेनकर्मज्ञान मयीद्विधा । निष्ठोक्तायेनतंवंदेशौरिंसंशयसंछिदम् ॥ १ ॥' इतिसुबोधिन्यांटीकायांचतुर्थोऽध्यायः ॥ ४ ॥ ॥ 'निवार्यसंशयंजिष्णोःकर्मसंन्यासयोगयोः । जितें द्रियस्यचयतेःपंचमेमुक्तिमब्रवीत् ॥ १ ॥'अज्ञानसंभूतंसंशयंज्ञानासिनाछित्त्वाकर्मयोगमातिष्ठेत्युक्तंतत्रपूर्वापरविरोधंमन्वानोऽर्जुनउवाच संन्यासमिति । यस्त्वा त्मरतिरेवस्यादित्यादिनासर्वंकर्माखिलंपार्थेत्यादिनाचज्ञानिनःकर्मसंन्यासंकथयसि ज्ञानासिनासंशयंछित्त्वायोगमातिष्ठेतिपुनर्योगंचकथयसि नचकर्मसंन्यासः

तस्मादज्ञानसंभूतंहृत्स्थंज्ञानासिनात्मनः ॥ छित्त्वैनंसंशयंयोगमातिष्ठोत्तिष्ठभारत ॥ ४२ ॥ इतिश्रीमद्भग०ज्ञानयोगोनामचतु र्थोऽध्यायः ॥ ४ ॥ अर्जुनउवाच ॥ संन्यासंकर्मणांकृष्णपुनर्योगंचशंससि ॥ यच्छ्रेयएतयोरेकंतन्मेब्रूहिसुनिश्चितम् ॥ १ ॥ श्रीभगवानुवाच ॥ संन्यासःकर्मयोगश्चनिःश्रेयसकरावुभौ ॥ तयोस्तुकर्मसंन्यासात्कर्मयोगोविशिष्यते ॥ २ ॥

कर्मयोगश्चैकस्यैकदैवसंभवतः विरुद्धस्वरूपत्वात् तस्मादेतयोर्मध्येएकस्मिन्ननुष्ठातव्येसातिममयच्छ्रेयःश्रेष्ठंसुनिश्चितंतदेकंब्रूहि ॥ १ ॥ अत्रोत्तरं श्रीभग वानुवाच संन्यासइति । अयंभावः—नहिवेदान्तवेद्यात्मतत्त्वविदंप्रतिकर्मयोगमहंब्रवीमि यतःपूर्वोक्तेनसंन्यासेनविरोधःस्यात् अपितुदेहात्माभिमानिनंत्वांबंधु वधादिनिमित्तशोकमोहादिकृतमेनंसंशयंदेहात्मविवेकज्ञानासिनाछित्त्वापरमात्मज्ञानोपायभूतंकर्मयोगमातिष्ठेतिब्रवीमिकर्मयोगेनशुद्धचित्तस्यचात्मतत्त्वज्ञानेजा तेसतितत्परिपाकार्थंज्ञाननिष्ठांगत्वेनसंन्यासःपूर्वमुक्तः एवंसत्यंगप्रधानयोर्विकल्पायोगात्संन्यासः कर्मयोगश्चेत्येतावुभावपिभूमिकाभेदेनसमुच्चितावेवनिःश्रेयसं

साधयतः तथाऽपितुतयोर्मध्येकर्मसंन्यासात्सकाशात्कर्मयोगोविशिष्टोभवति ॥ २ ॥ कुतइत्यपेक्षायांसंन्यासित्वेनकर्मयोगंस्तुवन्तस्यश्रेष्ठत्वंदर्शयति ज्ञेयइति । रागद्वेषादिराहित्येनपरमेश्वरार्थंकर्माणियोनुतिष्ठतिसनित्यंकर्मानुष्ठानकालेऽपिसंन्यासीत्येवज्ञेयः तत्रहेतुः—निर्द्वंद्वोरागद्वेषादिशून्योहिशुद्धचित्तोज्ञानद्वारासुखम नायासेनसंसारात्प्रमुच्यते ॥ ३ ॥ यस्मादेवमंगप्रधानत्वेनोभयोरवस्थाभेदेनक्रमसमुच्चयः अतोविकल्पमंगीकृत्योभयोःकःश्रेष्ठइतिप्रश्नोऽज्ञानिनामेवोचितोनावि वेकिनामित्याह सांख्ययोगाविति । सांख्यशब्देनज्ञाननिष्ठावाचिनातदंगंसंन्यासंलक्षयति संन्यासकर्मयोगावेकफलौसंतौपृथक्स्वतंत्रावितिबालाःअज्ञाएवप्रवदंति

ज्ञेयःसनित्यसंन्यासीयोनद्वेष्टिनकांक्षति ॥ निर्द्वंद्वोहिमहाबाहोसुखंबंधात्प्रमुच्यते ॥ ३ ॥ सांख्ययोगौपृथग्बालाःप्रवदंतिनपंडि ताः ॥ एकमप्यास्थितःसम्यगुभयोर्विंदतेफलम् ॥ ४ ॥ यत्सांख्यैःप्राप्यतेस्थानंतद्योगैरपिगम्यते ॥ एकंसांख्यंचयोगंचयःपश्यति सपश्यति ॥ ५ ॥ संन्यासस्तुमहाबाहोदुःखमाप्तुमयोगतः ॥ योगयुक्तोमुनिर्ब्रह्मनचिरेणाधिगच्छति ॥ ६ ॥

नतुपंडिताः तत्रहेतुः—अनयोरेकमपिसम्यगास्थितआश्रितः सन्नुभयोरपिफलंप्राप्नोति तथाहि कर्मयोगंसम्यगनुतिष्ठन्शुद्धचित्तःसन्ज्ञानद्वारायदुभयोःफलंकैव ल्यंविंदति संन्यासंसम्यगास्थितोपिपूर्वमनुष्ठितस्यकर्मयोगस्यापिपरंपरयाज्ञानद्वारायदुभयोःफलंकैवल्यंतद्विंदतीतिनपृथक्फलत्वमनयोरित्यर्थः ॥ ४ ॥ एतदेव स्फुटयति यत्सांख्यैरिति । सांख्यैर्ज्ञाननिष्ठैःसंन्यासिभिर्यत्स्थानंमोक्षाख्यंप्रकर्षेणसाक्षादवाप्यते योगैरित्यत्रअर्शादित्वान्मत्वर्थीयोऽच्प्रत्ययोद्रष्टव्यः तेनकर्मयो गिभिरपितदेवज्ञानद्वारेणगम्यते अवाप्यतइत्यर्थः अतःसांख्यंचयोगंचैकफलत्वेनैकंयःपश्यतिसएवसम्यक्पश्यति ॥ ५ ॥ यदिकर्मयोगिनोऽप्यंततःसंन्यासेनै

वज्ञाननिष्ठातर्हिआदितएवसंन्यासःकर्तुंयुक्तइतिमन्वानंप्रत्याह संन्यासइति । अयोगतःकर्मयोगंविनासंन्यासःप्राप्तुंदुःखंदुःखहेतुःअशक्यइत्यर्थः चित्तशुद्ध्य
भावेनज्ञाननिष्ठायाअसंभवात् योगयुक्तस्तुशुद्धचित्ततयामुनिःसंन्यासीभूत्वाऽचिरेणैवब्रह्माधिगच्छतिअपरोक्षंजानाति अतश्चित्तशुद्धेःप्राक्कर्मयोगएवसंन्यासा
द्विशिष्यतेइतिपूर्वोक्तंसिद्धं तदुक्तंवार्तिककृद्भिः--‘प्रमादिनोबहिश्चित्ताःपिशुनाःकलहोत्सुकाः । संन्यासिनोऽपिदृश्यंतेदैवसंदूषिताशया’ इति ॥ ६ ॥ कर्म
योगादिक्रमेणब्रह्माधिगमेसत्यपितदुपरितनेन कर्मणा बंधःस्यादेवेत्याशंक्याह योगयुक्तइति । योगेनयुक्तोऽतोविशुद्धआत्माचित्तंयस्यातएवविजितआत्माश

योगयुक्तोविशुद्धात्माविजितात्माजितेंद्रियः ॥ सर्वभूतात्मभूतात्माकुर्वन्नपिनलिप्यते ॥ ७ ॥ नैवकिंचित्करोमीतियुक्तो
मन्येततत्त्ववित् ॥ पश्यञ्छृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥ ८ ॥ प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ॥
इंद्रियाणींद्रियार्थेषुवर्ततइतिधारयन् ॥ ९ ॥

रीरंयेन अतएवविजितानींद्रियाणियेन ततश्चसर्वेषांभूतानामात्मभूतआत्मायस्यसः लोकसंग्रहार्थंस्वाभाविकंवाकर्मकुर्वन्नपिलिप्यते तैर्नबद्ध्यते ॥ ७ ॥ कर्म
कुर्वन्नपिनलिप्यतइत्येतद्विरुद्धमित्याशंक्यकर्तृत्वाभिमानाभावान्नविरुद्धमित्याह नैवेतिद्वाभ्यां । कर्मयोगेनयुक्तःक्रमेणतत्त्वविद्भूत्वादर्शनश्रवणादीनि कुर्वन्नपि
इंद्रियाणींद्रियार्थेषुवर्ततइतिधारयन्बुद्ध्यानिश्चित्यकिंचिदप्यहंनकरोमीतिमन्येतमन्यते तत्रदर्शनश्रवणस्पर्शनाघ्राणाशनानिचक्षुरादिज्ञानेंद्रियव्यापाराः गतिः
पादयोः स्वापोबुद्धेः श्वासःप्राणस्य प्रलपनंवागिंद्रियस्य विसर्गःपायूपस्थयोर्ग्रहणं हस्तयोःउन्मेषणनिमेषणेकूर्माख्यप्राणस्येतिविवेकः एतानिकर्माणिकुर्वन्नपि
अनभिमानात्ब्रह्मविन्नलिप्यते तथाचपारमर्षंसूत्रं--“तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यपदेशात्” इति ॥ ८ ॥ ९ ॥

तर्हियस्यकरोमीत्यभिमानोऽस्तितस्यकर्मलेपोदुर्वारोऽविशुद्धचित्तत्वात् संन्यासोऽपिनास्तीतिमहत्संकटमापन्नमित्याशंक्याह ब्रह्मणीति । ब्रह्मण्याधायपरमेश्वरे समर्प्यतत्फलेचसंगंत्यक्त्वायःकर्माणिकरोति असौपापेनबंधहेतुतयापापिष्ठेनपुण्यपापात्मकेनकर्मणानलिप्यते यथापद्मपत्रमंभसिस्थितमप्यंभसानलिप्यतेतद्वत् ॥ १० ॥ बंधकत्वाभावमुक्त्वामोक्षहेतुत्वंसदाचारेणदर्शयाति कायेनेति । कायेनस्नानादि मनसाध्यानादि बुद्ध्यातत्त्वनिश्चयादि केवलैःकर्माभिनिवेश रहितैरिंद्रियैश्चश्रवणकीर्तनादिलक्षणंकर्मफलसंगंत्यक्त्वाचित्तशुद्ध्येकर्मयोगिनःकर्मकुर्वंति ॥ ११ ॥ ननुतेनैवकर्मणाकश्चिन्मुच्यतेकश्चिद्बद्ध्यतइतिव्यवस्था कथमतआह युक्तइति युक्तःपरमेश्वरैकनिष्ठःसन्कर्मणांफलंत्यक्त्वाकर्माणिकुर्वन्नात्यंतिकींशांतिंमोक्षंप्राप्नोति अयुक्तस्तुबहिर्मुखःकामकारेणकामतःप्रवृत्त्या

**ब्रह्मण्याधायकर्माणिसंगंत्यक्त्वाकरोतियः ॥ लिप्यतेनसपापेनपद्मपत्रमिवांभसा ॥ १० ॥ कायेनमनसाबुद्ध्याकेवलैरिंद्रियैरपि ॥ योगिनःकर्मकुर्वंतिसंगंत्यक्त्वात्मशुद्धये ॥ ११ ॥ युक्तःकर्मफलंत्यक्त्वाशांतिमाप्नोतिनैष्ठिकीम् ॥ अयुक्तःकामकारेणफलेसक्तोनिबद्ध्यते ॥ १२ ॥ सर्वकर्माणिमनसासंन्यस्यास्तेसुखंवशी ॥ नवद्वारेपुरेदेहीनैवकुर्वन्नकारयन् ॥ १३ ॥**

फलेआसक्तोनितरांबंधंप्राप्नोति ॥ १२ ॥ एवंतावच्चित्तशुद्धिशून्यस्यसंन्यासात्कर्मयोगोविशिष्यतइत्येतत्प्रपंचितम्इदानींशुद्धचित्तस्यसंन्यासःश्रेष्ठइत्याहसर्व कर्माणीति । वशीयतचित्तः सर्वाणिकर्माणिविक्षेपकाणिमनसाविवेकयुक्तेनसंन्यस्यसुखंयथाभवत्येवंज्ञाननिष्ठःसन्नास्ते क्वास्तइत्यतआह नवद्वारे नेत्रेनासिकेकर्णौमुखंचेतिसप्तशिरोगतानि अधोगतेद्वेपायूपस्थरूपे इत्येवंनवद्वाराणियस्मिंस्तस्मिन्पुरे पुरवदहंभावशून्येदेहे देहीअवतिष्ठते अहंकाराभावादेवस्वयंतेनदेहेननैवकुर्वन्ममकाराभावाच्चनकारयन्नित्यविशुद्धचित्ताद्वयावृत्तिरुक्ता अविशुद्धचित्तोहिसंन्यस्यपुनःकरोतिकारयतिच नत्वयंतथा अतःसुखमास्तइत्यर्थः ॥ १३ ॥

ननु " एषएवसाधुकर्मकारयतितंयमेभ्योलोकेभ्यउन्निनीषते । एषएवासाधुकर्मकारयतितंयमेभ्योलोकेभ्योऽधोनिनीषत' इत्यादिश्रुतेः परमेश्वरेणैवशुभाशुभफलेषु कर्मसुकर्तृत्वेनप्रयुज्यमानोऽस्वतंत्रः पुरुषः कथंतानिकर्माणित्यजेत्ईश्वरेणैवज्ञानमार्गेप्रयुज्यमानः शुभान्यशुभानिचत्यक्ष्यतीतिचेत् एवंसतिवैषम्यनैर्घृण्याभ्यांप्रयोजककर्तृत्वादीश्वरस्यापिपुण्यपापसंबंधःस्यादित्याशंक्याह नकर्तृत्वमितिद्वाभ्यां । प्रभुःईश्वरः जीवलोकस्यकर्तृत्वादिकंनसृजतिकिंतु जीवस्यैवस्वभावोऽविद्यैवकर्तृत्वादिरूपेणप्रवर्तते अनाद्यविद्याकामवशात्प्रवृत्तिस्वभावंजीवलोकमीश्वरःकर्मसुनियुंक्ते नतुस्वयमेवकर्तृत्वादिकमुत्पादयतीत्यर्थः ॥१४॥ यस्मादेवंतस्मात् नादत्त इति । प्रयोजकोऽपिसन्प्रभुःकस्यचित्पापंसुकृतंचनैवादत्ते नभजते तत्रहेतुः–विभुःपरिपूर्णः आप्तकामइत्यर्थःयदिहिस्वार्थकामनयाकारयेत्तर्हितथास्यात् नत्वेतद

नकर्तृत्वंनकर्माणिलोकस्यसृजतिप्रभुः ॥ नकर्मफलसंयोगंस्वभावस्तुप्रवर्तते ॥ १४ ॥ नादत्तेकस्यचित्पापंनचैवसुकृतंविभुः ॥ अज्ञानेनावृतंज्ञानंतेनमुह्यंतिजंतवः ॥ १५ ॥ ज्ञानेनतुतदज्ञानंयेषांनाशितमात्मनः ॥ तेषामादित्यवज्ज्ञानंप्रकाशयतितत्परम् ॥ १६ ॥

स्ति आप्तकामस्यैवाचिंत्यनिजमाययातत्तत्पूर्वकर्मानुसारेणप्रवर्तकत्वात् ननुभक्ताननुगृह्णतोऽभक्तान्निगृह्णतश्चवैषम्योपलंभात्कथमाप्तकामत्वमित्यतआह अज्ञानेनेति । निग्रहोऽपिदंडरूपोऽनुग्रहएवेत्येवमज्ञानेनसर्वत्रसमःपरमेश्वरइत्येवंभूतंज्ञानमावृतम् तेनहेतुनाजंतवोजीवामुह्यंति भगवतिवैषम्यंमन्यंतइत्यर्थः ॥ १५ ॥ ज्ञानिनस्तुनमुह्यंतीत्याह ज्ञानेनेति । आत्मनोभगवतोज्ञानेनयेषांतद्वैषम्योपलंभकज्ञानंनाशितंतज्ज्ञानंतेषामज्ञानंनाशयित्वातत्परंपरिपूर्णमीश्वरस्वरूपं प्रकाशयति यथाआदित्यस्तमोनिरस्यसमस्तंवस्तुजातंप्रकाशयतितद्वत् ॥ १६ ॥

एवंभूतेश्वरोपासनाफलमाह तद्बुद्धयइति । तस्मिन्नेवबुद्धिर्निश्चयात्मिकायेषाम तस्मिन्नेवात्मामनोयेषाम तस्मिन्नेवनिष्ठातात्पर्यंतेषाम् तदेवपरमयनमाश्रयोयेषाम् ततश्चतत्प्रसादलब्धेनात्मज्ञानेननिर्धूतंनिरस्तंकल्मषंयेषांते अपुनरावृत्तिमुक्तियांति ॥ १७ ॥ कीदृशास्तेज्ञानिनोयेऽपुनरावृत्तिंगच्छंतीत्यपेक्षायामाह विद्याविनयसंपन्नइति। विषमेष्वपिसमंब्रह्मैवद्रष्टुंशीलंयेषांते पंडिताज्ञानिनइत्यर्थः तत्रविद्याविनयाभ्यांयुक्तेब्राह्मणेच शुनोयःपचतितस्मिन्श्वपाकेचेतिकर्मणावैषम्यंगविहस्तिनिशुनिचेतिजातितोवैषम्यंदर्शितम् ॥ १८ ॥ ननु विषमेषुसमदर्शनंनिषद्धंकुर्वंतोपिकथंतेपंडिताः यथाहगौतमः 'समासमाभ्यांविषमसमपूज्यते' इतिअस्यार्थः—

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ॥ गच्छंत्यपुनरावृत्तिंज्ञाननिर्धूतकल्मषाः ॥ १७ ॥ विद्याविनयसंपन्नेब्राह्मणेगविहस्तिनि ॥ शुनिचैवश्वपाकेचपंडिताःसमदर्शिनः ॥ १८ ॥ इहैवतैर्जितःसर्गोयेषांसाम्येस्थितंमनः ॥ निर्दोषंहिसमंब्रह्मतस्माद्ब्रह्मणितेस्थिताः ॥ १९ ॥ नप्रहृष्येत्प्रियंप्राप्यनोद्विजेत्प्राप्यचाप्रियम् ॥ स्थिरबुद्धिरसंमूढोब्रह्मविद्ब्रह्मणिस्थितः ॥ २० ॥

समायपूजायाविषमेप्रकारेकृतेसाति विषमायचसमेप्रकारेकृतेसाति सपूजकइहलोकात्परलोकाच्चहीयतइतितत्राह इहैवेति । इहैवजीवद्भिरेवतैः मृज्यतइतिसर्गः संसारोजितःनिरस्तः कैः येषांमनःसाम्येसमत्वेस्थितम् तत्रहेतुः—हियस्मात्ब्रह्मसमंनिर्दोषंचतस्मात्तेसमदर्शिनोब्रह्मण्येवस्थिताः ब्रह्मभावंप्राप्ताइत्यर्थः गौतमोक्तस्तुदोषोब्रह्मभावप्राप्तेःपूर्वमेव पूज्यतइतिपूजकावस्थाश्रवणात् ॥ १९ ॥ ब्रह्मप्राप्तस्यलक्षणमाह नेति । योब्रह्मविद्भूत्वाब्रह्मण्येवस्थितःसप्रियंपाप्यनप्रहृष्येत् नप्रहृष्टोहर्षवान्स्यात् अप्रियंचप्राप्यनोद्विजेत् नविषीदतीत्यर्थः यतःस्थिरबुद्धिःस्थिरानिश्चलाबुद्धिर्यस्य तत्कुतः यतोऽसंमूढःनिवृत्तमोहः ॥ २० ॥

मोहनिवृत्त्याबुद्धिस्थैर्यहेतुमाह बाह्यस्पर्शेष्विति । इंद्रियैःस्पृश्यंतइतिस्पर्शाविषयाःबाह्येंद्रियविषयेषुअसक्तात्माअनासक्तचित्तः आत्मन्यंतःकरणेयदुपशमात्मकं सात्विकं सुखंतद्विंदतिलभते सचोपशमात्मकंसुखंलब्ध्वा ब्रह्मणियोगेनसमाधिनायुक्तस्तदैक्यंप्राप्तआत्मायस्यसःअक्षय्यंसुखमश्नुतेप्राप्नोति ॥ २१ ॥ ननु प्रिय विषयंभोगानामपिनिवृत्तेःकथंमोक्षःपुरुषार्थःस्यात्तत्राह येहीति । संस्पृश्यंतइतिसंस्पर्शाविषयाःतेभ्योजातायेभोगाः सुखानितेहिवर्तमानकालेऽपिस्पर्धासूयादिव्याप्त त्वाद्दुःखस्यैवयोनयःकारणभूताः तथा आदिमंतोंऽतवंतश्च अतोविवेकीतेषुनरमते ॥ २२ ॥ तस्मान्मोक्षएवपरःपुरुषार्थस्तस्यचकामक्रोधवेगोऽतिप्रतिपक्षोऽ तस्तत्सहनसमर्थएवमोक्षभागित्याह शक्नोतीति। कामात्क्रोधाच्चोद्भवतियोवेगोमनोनेत्रादिक्षोभलक्षणः तमिहैवतदुद्भवसमयएवयोनरःसोढुंप्रतिरोद्धुंशक्नोति तद

बाह्यस्पर्शेष्वसक्तात्माविंदत्यात्मनियत्सुखं ॥ सब्रह्मयोगयुक्तात्मासुखमक्षय्यमश्नुते ॥ २१ ॥ येहिसंस्पर्शजाभोगादुःखयोनयएवते ॥
आद्यन्तवन्तःकौन्तेयनतेषुरमतेबुधः ॥ २२ ॥ शक्नोतीहैवयःसोढुंप्राक्शरीरविमोक्षणात् ॥ कामक्रोधोद्भवंवेगंसयुक्तःससुखीनरः
॥ २३ ॥ योंऽतःसुखोंतरारामस्तथांऽतर्ज्योतिरेवयः ॥ सयोगीब्रह्मनिर्वाणंब्रह्मभूतोऽधिगच्छति ॥ २४ ॥

पिनक्षणमात्रम् किंतुशरीरविमोक्षणात्प्राक् यावद्देहपातमित्यर्थः यएवंभूतःसएवमुक्तःसमाहितःसुखीचभवति नान्यः यद्वा मरणादूर्ध्वंविलपंतीभिर्युवतीभिरा लिंग्यमानोऽपिपुत्रादिभिर्दह्यमानोऽपियथाप्राणशून्यःकामक्रोधवेगंसहते तथामरणात्प्रागपिजीवन्नेवयःसहेतसएवयुक्तःसुखीचेत्यर्थःतदुक्तंवासिष्ठेन-प्राणेगतेयथा देहःसुखंदुःखंनविंदति तथाचेत्प्राणयुक्तोऽपिसकैवल्याश्रयोभवेदिति ॥ २३ ॥ नकेवलंकामक्रोधवेगसंहरणमात्रेणमोक्षंप्राप्नोति अपितु योंऽतरिति । अंतःआ त्मन्येवसुखंयस्यनविषयेषु अंतरेवारामः क्रीडायस्यनबहिः अंतरेवज्योतिर्दृष्टिर्यस्यनगीतनृत्यादिषु सएवब्रह्मणिभूतःस्थितःसन्ब्रह्मणिनिर्वाणंलयमधिगच्छति

प्राप्नोति ॥ २४ ॥ किंच लभंतइति । ऋषयःसम्यग्दर्शिनःक्षीणंकल्मषंयेषा छिन्नंद्वैधंसंशयोयेषां यतःसंयतआत्माचित्तंयेषां सर्वेषांभूतानांहितेरताःकृपालवस्ते ब्रह्मनिर्वाणंमोक्षंलभंते ॥ २५ ॥ किंच कामक्रोधवियुक्तानामिति । कामक्रोधाभ्यांवियुक्तानां यतीनांसंन्यासिनां संयतचित्तानांज्ञातात्मतत्त्वानां अभितउभ भयतःमृतानांजीवतांच नदेहांतरएवतेषांब्रह्मणिलयः अपितुजीवतामपिवर्ततइत्यर्थः ॥ २६ ॥ सयोगीब्रह्मनिर्वाणमित्यादिषुयोगीमोक्षमाप्नोतीत्युक्तंतमेवयोगंसं क्षेपेणदर्शयन्नाह स्पर्शानितिद्वाभ्यां । बाह्याएवस्पर्शारूपरसादयोविषयाश्चिंतिताःसंतोंऽतःप्रविशंति तांस्ताच्चिंतात्यागेनबहिरेवकृत्वाचक्षुश्चभ्रुवोरंतरेभ्रूमध्यएवकृ

लभंतेब्रह्मनिर्वाणमृषयःक्षीणकल्मषाः ॥ छिन्नद्वैधायतात्मानःसर्वभूतहितेरताः ॥ २५ ॥ कामक्रोधवियुक्तानांयतीनांयतचेतसाम् ॥
अभितोब्रह्मनिर्वाणंवर्ततेविदितात्मनाम् ॥ २६ ॥ स्पर्शान्कृत्वाबहिर्बाह्यांश्चक्षुश्चैवांतरेभ्रुवोः ॥ प्राणापानौसमौकृत्वानासाभ्यंतरचा
रिणौ ॥ २७ ॥ यतेंद्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ॥ विगतेच्छाभयक्रोधोयःसदामुक्तएवसः ॥ २८ ॥

त्वाऽत्यंतंनेत्रयोर्निमीलनेनिद्रयामनोलीयते उन्मीलनेनचबाहिःप्रसरति तदुभयदोषपरिहारार्थमर्धनिमीलनेनभ्रूमध्येदृष्टिंनिधायेत्यर्थः उच्छ्वासनिश्वासरूपेणना सिकयोरभ्यंतरेचचरंतौप्राणापानावूर्ध्वाधोगतिनिरोधेनसमौकृत्वा कुंभयित्वेत्यर्थः यद्वा प्राणोयथाबहिर्ननिर्याति यथाचापानोंऽतर्नप्रविशति किंतु नासामध्यएव द्वावपियथाचरतः तथामंदाभ्यामुच्छ्वासनिःश्वासाभ्यांसमौकृत्वेति ॥ २७ ॥ यतइति । अनेनोपायेनयताःसंयताइंद्रियमनोबुद्धयोयस्य मोक्षएवपरमयनंप्राप्यंयस्य अतएवविगताइच्छाभयक्रोधायस्य यएवंभूतोमुनिःससदाजीवन्नपिमुक्तएवेत्यर्थः ॥ २८ ॥

नन्वेवमिंद्रियादिसंयममात्रेणकथंमुक्तिःस्यान्नतावन्मात्रेण किंतुज्ञानद्वारेणेत्याह भोक्तारमिति । यज्ञानांतपसांचमद्भक्तैःसमर्पितानांयदृच्छयाभोक्तारंपालकमितिवा सर्वेषांलोकानांमहांतमीश्वरंसर्वेषांभूतानांसुहृदंनिरपेक्षोपकारिणमंतर्यामिणंमांज्ञात्वामत्प्रसादेनशांतिंमोक्षंऋच्छतिप्राप्नोति ॥ २९ ॥ 'विकल्पशंकापोहेनयेनैवंसांख्य योगयोः॥समुच्चयःक्रमेणोक्तःसर्वज्ञंनौमितंहरिम् ॥१॥ ॥' इतिसुबोधिन्यांटीकायांपंचमोऽध्यायः ॥५॥ ॥ 'चित्तेशुद्धेऽपिनध्यानंविनासंन्यासमात्रतः ॥ मुक्तिःस्या दितिषष्ठेऽस्मिन्ध्यानयोगोवितन्यते ॥१॥' पूर्वाध्यायांतेसंक्षेपेणोक्तंयोगंप्रपंचयितुंषष्ठाध्यायारंभः तत्रतावत्सर्वकर्माणिमनसेत्यारभ्यसंन्यासपूर्विकायाज्ञाननिष्ठायास्ता त्पर्येणाभिधानात्दुःखरूपत्वाच्चकर्मणःसहसासंन्यासातिप्रसंगंप्राप्तंवारयितुंसंन्यासादपिश्रेष्ठत्वेनकर्मयोगंस्तौति श्रीभगवानुवाच अनाश्रितइतिद्वाभ्यां । कर्मफलम

भोक्तारंयज्ञतपसांसर्वलोकमहेश्वरम् ॥ सुहृदंसर्वभूतानांज्ञात्वामांशांतिमृच्छति ॥ २९ ॥ इतिश्रीमद्भगवद्गीतायांकर्मसंन्यासयोगो नामपंचमोऽध्यायः ॥ ५ ॥ ॥श्रीभगवानुवाच ॥ ॥ अनाश्रितःकर्मफलंकार्यंकर्मकरोतियः ॥ ससंन्यासीचयोगीचन निरग्निर्नचाक्रियः ॥ १ ॥ यंसंन्यासमितिप्राहुर्योगंतंविद्धिपांडव ॥ नह्यसंन्यस्तसंकल्पोयोगीभवतिकश्चन ॥ २ ॥

नाश्रितोऽनपेक्षमाणःअवश्यंकर्तव्यतयाविहितंकर्मयःकरोतिसएवसंन्यासीयोगीच नतुनिरग्निःअग्निसाध्येष्टाख्यकर्मत्यागी नचाक्रियोऽनग्निसाध्यपूर्ताख्यकर्मत्या गीच ॥ १ ॥कुतइत्यपेक्षायांकर्मयोगस्यैवसंन्यासत्वंसंपादयन्नाह यमिति । यंसंन्यासमितिप्राहुः प्रकर्षेणश्रेष्ठत्वेनाहुः "संन्यासएवात्यरेचयत्"इत्यादिश्रुतेःकेवला त्फलसंन्यसनाद्धेतोःयोगमेवतंजानीहि कुतइत्यपेक्षायामितिशब्दोक्तोहेतुर्योगेऽप्यस्तीत्याह नहीति । नसंन्यस्तःफलसंकल्पोयेनसः कर्मनिष्ठोज्ञाननिष्ठोवाकश्चि दपिनहियोगीभवति अतःफलसंकल्पत्यागसाम्यात्संन्यासात्संन्यासीच फलसंकल्पत्यागादेवचित्तविक्षेपाभावात्योगीचभवत्येवसइत्यर्थः ॥ २ ॥

तर्हियावज्जीवंकर्मयोगएवप्राप्तइत्याशंक्यतस्यावधिमाह आरुरुक्षोरिति। ज्ञानयोगमारोढुंप्राप्तुमिच्छोःपुंसस्तदारोहेकारणंकर्मोच्यते चित्तशुद्धिकरत्वात् ज्ञानयोग मारूढस्यतुतस्यैवज्ञाननिष्ठस्यशमःसमाधिश्चित्तविक्षेपकर्मोपरमोज्ञानपरिपाकेकारणमुच्यते ॥ ३ ॥ कीदृशोऽसौयोगारूढःयस्यशमःकारणमुच्यतइत्यत्राह यदा हीति। इंद्रियार्थेषुइंद्रियभोग्येषुशब्दादिषुतत्साधनेषुचकर्मसुयदानानुषज्जतेआसक्तिंनकरोति तत्रहेतुः—आसक्तिमूलभूतान्सर्वान्भोगविषयान्कर्मविषयांश्चसंक ल्पान्संन्यसितुंत्यक्तुंशीलंयस्यसःतदायोगारूढउच्यते ॥ ४ ॥ अतोविषयासक्तित्यागेमोक्षंतदासक्तौचबंधंपर्यालोच्यरागादिस्वभावंत्यजेदित्याह उद्धरेदिति। आ

आरुरुक्षोर्मुनेर्योगंकर्मकारणमुच्यते ॥ योगारूढस्यतस्यैवशमःकारणमुच्यते ॥ ३ ॥ यदाहिनेंद्रियार्थेषुनकर्मस्वनुषज्जते ॥ सर्वसं कल्पसंन्यासीयोगारूढस्तदोच्यते ॥ ४ ॥ उद्धरेदात्मनात्मानंनात्मानमवसादयेत् ॥ आत्मैवह्यात्मनोबंधुरात्मैवरिपुरात्मनः ॥ ५ ॥ बंधुरात्माऽऽत्मनस्तस्ययेनात्मैवात्मनाजितः ॥ अनात्मनस्तुशत्रुत्वेवर्तेतात्मैवशत्रुवत् ॥ ६ ॥ जितात्मनःप्रशांतस्यपरमात्मासमाहि तः ॥ शीतोष्णसुखदुःखेषुतथामानापमानयोः ॥ ७ ॥

त्मनाविवेकयुक्तेनात्मानंसंसारादुद्धरेत् नत्ववसादयेत्अधोननयेत् हियस्मात् आत्मैवमनःसंगादुपरतआत्मनःस्वस्यबंधुरुपकारकः रिपुरपकारकश्च ॥ ५ ॥ कथं भूतस्यात्मैवबंधुःकथंभूतस्यचात्मैवरिपुरित्यपेक्षायामाह बंधुरिति। येनात्मनैवआत्माकार्यकारणसंघातरूपोजितोवशीकृतः तस्यतथाभूतस्यात्मनः आत्मैवबंधुः अ नात्मनोऽजितात्मनस्तुआत्मैवात्मनःशत्रुत्वशत्रुवदपकारकारित्वेवर्तेत ॥ ६ ॥ जितात्मनःस्वस्मिन्बंधुत्वंस्फुटयति जितात्मनइति। जितःआत्मायेनतस्यप्रशांत स्यरागादिरहितस्यैवपरंकेवलमात्माशीतोष्णादिषुसत्स्वपिसमाहितः स्वात्मनिष्ठोभवति नान्यस्य यद्वातस्यहृदिपरमात्मासमाहितः स्थितोभवति ॥ ७ ॥

योगारूढस्यलक्षणंश्रैष्ठ्यंचोक्तमुपपाद्योपसंहरति ज्ञानविज्ञानतृप्तात्मेति । ज्ञानमौपदेशिकंविज्ञानमपरोक्षानुभवस्ताभ्यांतृप्तोनिराकांक्षआत्माचित्तंयस्य अतःकूटस्थो निर्विकारः अतएवविजितानिइंद्रियाणियेन अतएवसमानिलोष्टादीनियस्य मृत्खंडपाषाणसुवर्णेषुहेयोपादेयबुद्धिशून्यः सयुक्तोयोगारूढइत्युच्यते ॥ ८ ॥ सुहृन्मित्रादिषुसमबुद्धियुक्तस्ततोऽपिश्रेष्ठइत्याह सुहृदिति। सुहृत्स्वभावेनैवहिताशंसी मित्रंस्नेहवशेनोपकारकः अरिर्घातुकः उदासीनोविवदमानयोरुभयोरप्युपेक्षकः मध्यस्थोविवदमानयोरुभयोरपिहिताशंसी द्वेष्यःद्वेषविषयःबंधुःसंबंधी साधवः सदाचाराः पापादुराचाराः एतेषुसमारागद्वेषादिशून्याबुद्धिर्यस्यसतुविशि

ज्ञानविज्ञानतृप्तात्माकूटस्थोविजितेंद्रियः ॥ युक्तइत्युच्यतेयोगीसमलोष्टाश्मकांचनः ॥ ८ ॥ सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबंधुषु ॥ साधुष्वपिचपापेषुसमबुद्धिर्विशिष्यते ॥ ९ ॥ योगीयुंजीतसततमात्मानंरहसिस्थितः ॥ एकाकीयतचित्तात्मानिराशीरपरिग्रहः ॥ १० ॥ शुचौदेशेप्रतिष्ठाप्यस्थिरमासनमात्मनः ॥ नात्युच्छ्रितंनातिनीचंचैलाजिनकुशोत्तरम् ॥ ११ ॥

ष्टः ॥ ९ ॥ एवंयोगारूढस्यलक्षणमुक्त्वेदानींतस्यसांगंयोगंविधत्ते योगीत्यादिनासयोगीपरमोमतइत्यंतेनग्रंथेन योगीति । योगीयोगारूढः आत्मानंमनः युंजीत समाहितंकुर्यात् सततंनिरंतरंरहसिएकांतेस्थितःसन्नेकाकीसंगशून्यः यतंसंयतंचित्तंआत्मादेहश्चयस्यनिराशीः निराकांक्षःनिराहारोवा अपरिग्रहःपरिग्रहशून्यश्च ॥ १० ॥ आसननियमंदर्शयन्नाह शुचाविति द्वाभ्याम् । शुद्धेस्थानेआत्मनःस्वस्यासनंस्थापयित्वा कीदृशम् स्थिरमचलम् नातिचोन्नतंनचातिनीचंच चैलंवस्त्रमजिनंव्याघ्रादिचर्मचैलाजिनेकुशेभ्यउत्तरेयास्मिन् कुशानामुपरिचर्मतदुपरिवस्त्रमास्तीर्येत्यर्थः ॥ ११ ॥

तत्रेति । तत्रतस्मिन्नासनेउपविश्यएकाग्रंविक्षेपरहितंमनःकृत्वा योगंयुंज्यात् अभ्यसेत यताःसंयताःचित्तस्येंद्रियाणांचक्रियायस्यात्मनोमनसोविशुद्धयेउपशां
तये ॥ १२ ॥ चित्तैकाग्र्योपयोगिनींदेहादिधारणांदर्शयन्नाह सममितिद्वाभ्यां । कायइतिदेहमध्यभागोविवक्षितः कायश्चशिरश्चग्रीवाचकायाशिरोग्रीवंमूला
धारादारभ्यमूर्द्धाग्रपर्यंतंसमंअवक्रंनिश्चलंधारयन्स्थिरः दृढप्रयत्नोभूत्वेत्यर्थः स्वकीयंनासिकाग्रंसंप्रेक्ष्यच अर्धनिमीलितनेत्रइत्यर्थः इतस्ततोदिशश्चानवलोकय
न्नासीतेत्युत्तरेणान्वयः ॥ १३ ॥ प्रशांतेति । प्रशांतआत्माचित्तंयस्य विगताभीर्भयंयस्य ब्रह्मचारिव्रतेब्रह्मचर्येस्थितःसन्मनः संयम्यप्रत्याहृत्यमय्येवचित्तंयस्य

तत्रैकाग्रंमनःकृत्वायतचित्तेंद्रियक्रियः ॥ उपविश्यासनेयुंज्याद्योगमात्मविशुद्धये ॥ १२ ॥ समंकायशिरोग्रीवंधारयन्नचलंस्थिरः ॥
संप्रेक्ष्यनासिकाग्रंस्वंदिशश्चानवलोकयन् ॥ १३ ॥ प्रशांतात्माविगतभीर्ब्रह्मचारिव्रतेस्थितः ॥ मनःसंयम्यमच्चित्तोयुक्तआसीतमत्परः
॥ १४ ॥ युंजन्नेवंसदात्मानंयोगीनियतमानसः ॥ शांतिंनिर्वाणपरमांमत्संस्थामधिगच्छति ॥ १५ ॥ नात्यश्नतस्तुयोगोऽस्तिनचैकां
तमनश्नतः ॥ नचातिस्वप्नशीलस्यजाग्रतोनैवचार्जुन ॥ १६ ॥

अहमेवपरःपुरुषार्थोयस्यसमत्परः एवंयुक्तोभूत्वाआसीततिष्ठेत् ॥ १४ ॥ योगाभ्यासफलमाह युंजन्नेवमिति । एवमुक्तप्रकोरणसदाआत्मानंमनोयुंजन्समाहितं
कुर्वन्नियतंनिरुद्धंमानसंचित्तंयस्यसः शांतिंसंसारोपरतिंप्राप्नोति कथंभूताम् निर्वाणंपरमंप्राप्यंयस्यांतांमत्संस्थांमद्रूपेणावस्थितिम् ॥ १५ ॥ योगाभ्यासनिष्ठ-
स्याहारादिनियममाह नेतिद्वाभ्याम । अत्यंतमधिकंभुंजानस्य एकांतमत्यंतमभुंजानस्यापियोगःसमाधिर्नभवति तथाऽतिनिद्राशीलस्यातिजाग्रतश्चयोगोनै
वास्ति ॥ १६ ॥

तर्हिकथंभूतस्ययोगोभवतीत्यतआह युक्तेति । युक्तोनियतआहारोविहारश्चगतिर्यस्य कर्मसुकार्येषुयुक्तानियतैवचेष्टायस्य युक्तौनियतौस्वप्नावबोधौनिद्राजागरौयस्य
तस्यदुःखनिवर्तकोयोगोभवतिसिद्ध्यति ॥ १७ ॥ कदानिष्पन्नयोगःपुरुषोभवतीत्यपेक्षायामाह यदेति । विनियतंविशेषेणनिरुद्धंसच्चित्तमात्मन्येवयदानिश्चलंतिष्ठ
ति किंचसर्वकामेभ्यःऐहिकामुष्मिकभोगेभ्यःविगततृष्णोभवतितदाप्राप्तयोगइत्युच्यते ॥ १८ ॥ आत्मैकाकारतयाऽवस्थितस्यचित्तस्योपमानमाह यथेति । वातशू
न्येदेशेस्थितोदीपोयथानेंगतेनाविचलति साउपमादृष्टांतः कस्यआत्मविषयंयोगंयुंजतोऽभ्यसतोयोगिनोयतं नियतंचित्तंयस्यनिष्कंपतयाप्रकाशकतयाचाचंचलंताच्चि-

युक्ताहारविहारस्ययुक्तचेष्टस्यकर्मसु ॥ युक्तस्वप्नावबोधस्ययोगोभवतिदुःखहा ॥ १७ ॥ यदाविनियतंचित्तमात्मन्येवावतिष्ठते ॥
निःस्पृहःसर्वकामेभ्योयुक्तइत्युच्यतेतदा ॥ १८ ॥ यथादीपोनिवातस्थोनेंगतेसोपमास्मृता ॥ योगिनोयतचित्तस्ययुंजतोयोगमा
त्मनः ॥ १९ ॥ यत्रोपरमतेचित्तंनिरुद्धंयोगसेवया ॥ यत्रचैवात्मनाऽऽत्मानंपश्यन्नात्मनितुष्यति ॥ २० ॥

त्तंतद्वत्तिष्ठतीत्यर्थः ॥ १९ ॥ यंसंन्यासमिति । प्राहुर्योगंतंविद्धिपांडवेत्यादौकर्मैवयोगशब्देनोक्तंनात्यश्नतस्तुयोगोस्तीत्यादौतुसमाधिर्योगशब्देनोक्तः तत्र
मुख्योयोगः कइत्यपेक्षायांसमाधिमेवस्वरूपतःफलतश्चलक्षयन्सएवमुख्योयोगइत्याह यत्रेति सार्धैस्त्रिभिः । यत्रयस्मिन्नवस्थाविशेषेयोगाभ्यासेननिरुद्धंचित्तंउपर
तंभवतीतियोगस्यस्वरूपलक्षणमुक्तंतथाचपातंजलंसूत्रं "योगश्चित्तवृत्तिनिरोध"इति इष्टप्राप्तिलक्षणेनफलेनतमेवलक्षयति यत्रचयस्मिन्नवस्थाविशेषेआत्मनाशुद्धे
नमनसाऽऽत्मानमेवपश्यतिनतुदेहादिपश्यंश्चात्मन्येवतुष्यति नतुविषयेषु यत्रेत्यादीनांयच्छब्दानांतंयोगसंज्ञितंविद्यादितिचतुर्थेनान्वयः ॥ २० ॥

आत्मन्येवतोषेहेतुमाह सुखमिति । यत्रयस्मिन्नवस्थाविशेषेयत्तत्किमपिनिरतिशयमात्यंतिकंनित्यंसुखंवेत्ति ननुतदाविषयेंद्रियसंबंधाभावात्कुतःसुखंस्यात्तत्राह अतींद्रियंविषयेंद्रियसंबंधातीतम् केवलंबुद्ध्यैवात्माकारतयाग्राह्यम् अतएवचयत्रस्थितःसन्तत्त्वतःआत्मस्वरूपान्नैवचलति ॥ २१ ॥ अचलत्वमेवोपपादयति यमिति। यमात्मसुखरूपलाभंलब्ध्वाततोऽधिकमपरंलाभंनमन्यतेनचिंतयति तस्यैवनिरतिशयसुखत्वात्यस्मिंश्चस्थितोमहतापिशीतोष्णादिदुःखेननविचाल्यतेना भिभूयते एतेनाष्टनिवृत्तिफलेनापियोगलक्षणमुक्तंद्रष्टव्यम ॥ २२ ॥ यएवंभूतोऽवस्थाविशेषस्तमाह तमित्यर्धेन । दुःखशब्देनदुःखमिश्रितत्वाद्वैषयिकंसुखमपि

सुखमात्यंतिकंयत्तद्बुद्धिग्राह्यमतींद्रियम् ॥ वेत्तियत्रनचैवायंस्थितश्चलतितत्त्वतः ॥ २१ ॥ यंलब्धाचापरंलाभंमन्यतेनाधिकंत
तः ॥ यस्मिंस्थितोनदुःखेनगुरुणाऽपिविचाल्यते ॥ २२ ॥ तंविद्याद्दुःखसंयोगवियोगंयोगसंज्ञितम् ॥ सनिश्चयेनयोक्तव्योयोगोनि
र्विण्णचेतसा ॥ २३ ॥ संकल्पप्रभवान्कामांस्त्यक्त्वासर्वानशेषतः ॥ मनसैवेंद्रियग्रामंविनियम्यसमंततः ॥ २४ ॥

गृह्यते दुःखस्यसंयोगेनस्पर्शमात्रेणापिवियोगोयस्मिन्तमवस्थाविशेषं योगसंज्ञितंयोगशब्दवाच्यंजानीयात् परमात्मनाक्षेत्रज्ञस्ययोजनंयोगः यद्वा दुःखसंयोगे नवियोगएवशूरेकातरशब्दवद्विरुद्धलक्षणयोगउच्यते कर्मणितुयोगशब्दस्तदुपायत्वादौपचारिकएवेतिभावः यस्मादेवंमहाफलोयोगस्तस्मात्सएवयत्नतोऽभ्यसनीय इत्याह सइतिसार्धेन । सयोगोनिश्चयेनशास्त्राचार्योपदेशजनितेनयोक्तव्योऽभ्यसनीयः यद्यपिशीघ्रंनसिद्ध्यतितथापिअनिर्विण्णेननिर्वेदरहितेनचेतसायोक्तव्यः दुः खबुद्ध्याप्रयत्नशैथिल्यंनिर्वेदः ॥ २३ ॥ किंच संकल्पेति । संकल्पात्प्रभवोयेषांतान्योगप्रतिकूलान्सर्वान्कामानशेषतः सन्नासनांस्त्यक्त्वा मनसैवविषयदोषदर्शि

नासर्वतःप्रसरंतंइंद्रियसमूहंविशेषेणनियम्ययोगोयोक्तव्यइतिपूर्वेणान्वयः ॥ २४ ॥ यदितुप्राक्तनकर्मसंस्कारेणमनोविचलेत्तर्हिधारणयास्थिरीकुर्यादित्याह शनैरिति । धृतिर्धारणातयागृहीतयावशीकृतयाबुद्ध्यात्मसंस्थामात्मन्येवसम्यक्स्थितंनिश्चलंमनःकृत्वोपरमेत तच्चशनैःशनैरभ्यासक्रमेण नतुसहसाउपरमस्वरूपमाह न किंचिदपिचिंतयेत् निश्चलेमनसिस्वयमेवप्रकाशमानपरमानंदस्वरूपोभूत्वाऽऽत्मध्यानादपिनानिवर्तेतेत्यर्थः ॥ २५ ॥ एवमपिरजोगुणवशाद्यदिमनःप्रचलेत्तर्हि पुनःप्रत्याहारेणवशीकुर्यादित्याह यतइति । स्वभावतश्चंचलंधार्यमाणमप्यस्थिरंमनोयंयंविषयंप्रतिनिर्गच्छतिततस्ततःप्रत्याहृत्यात्मन्येवास्थिरंकुर्यात् ॥ २६ ॥

शनैःशनैरुपरमेद्बुद्ध्याधृतिगृहीतया ॥ आत्मसंस्थंमनःकृत्वानकिंचिदपिचिंतयेत् ॥२५॥ यतोयतोनिश्चरतिमनश्चंचलमस्थिरम्॥
ततस्ततोनियम्यैतदात्मन्येववशंनयेत् ॥ २६ ॥ प्रशांतमनसंह्येनंयोगिनंसुखमुत्तमम् ॥ उपैतिशांतरजसंब्रह्मभूतमकल्मषम्॥२७॥
युंजन्नेवंसदात्मानंयोगीविगतकल्मषः ॥ सुखेनब्रह्मसंस्पर्शमत्यंतंसुखमश्नुते ॥ २८ ॥ सर्वभूतस्थमात्मानंसर्वभूतानिचात्मनि ॥
ईक्षतेयोगयुक्तात्मासर्वत्रसमदर्शनः ॥ २९ ॥

एवंप्रत्याहारादिभिःपुनःपुनर्मनोवशीकुर्वतंरजोगुणक्षयेसतियोगसुखंप्राप्नोतीत्याह प्रशांतमनसमिति । एवमुक्तेनप्रकारेणशांतंरजोयस्यतम् अतएवप्रशांतंमनो यस्यतंएनंनिष्कल्मषंब्रह्मत्वप्राप्तंयोगिनंउत्तमंसुखंसमाधिसुखंस्वयमेवोपैति प्राप्नोति ॥ २७ ॥ ततश्चकृतार्थोभवतीत्याह युंजन्निति । एवमनेनप्रकारेणसर्वदात्मानंमनोयुंजन्वशीकुर्वन्विशेषेणसर्वात्मनागतंकल्मषंयस्य सयोगीसुखेनानायासेन ब्रह्मणःसंस्पर्शोऽविद्यानिवर्तकःसाक्षात्कारस्तदेवात्यंतंसर्वोत्तमंसुखमश्नुते जीवन्मुक्तोभवतीत्यर्थः॥ २८ ॥ ब्रह्मसाक्षात्कारमेवदर्शयति सर्वभूतस्थमिति । योगेनाभ्यस्यमानेनयुक्तात्मासमाहितचित्तः सर्वत्रसमंब्रह्मैवपश्यतीतिसमदर्शनः

स्वमात्मानमविद्याकृतदेहादिपरिच्छेदशून्यंसर्वभूतेषुब्रह्मादिस्थावरांतेष्ववस्थितंपश्यति तानिचआत्मन्यभेदेनपश्यति ॥ २९ ॥ एवंभूतात्मज्ञानस्यसर्वभूतात्मतयामदुपासनंमुख्यंकारणमित्याह यइति। मांपरमेश्वरंसर्वत्रभूतमात्रेयःपश्यति सर्वंचप्राणिमात्रं मयियःपश्यति तस्याहं न प्रणश्यामि अदृश्योनभवामि सचममादृश्योनभवति प्रत्यक्षोभूत्वाकृपादृष्ट्यातंविलोक्यानुगृह्णामीत्यर्थः ॥ ३० ॥ नचैवंभूतोविधिकिंकरःस्यादित्याह सर्वभूतस्थितमिति। सर्वेषुभूतेषुस्थितंमामभेदमास्थितआश्रितोयोभजतिसयोगीज्ञानीसन्सर्वथाकर्मत्यागेनापिवर्तमानोमय्येववर्ततेमुच्यते नतुभ्रश्यतीत्यर्थः ॥ ३१ ॥ एवंचमांभजतांयोगिनांमध्येसर्वभूता

योमांपश्यतिसर्वत्रसर्वंचमयिपश्यति ॥ तस्याहंनप्रणश्यामिसचमेनप्रणश्यति ॥ ३० ॥ सर्वभूतस्थितंयोमां
भजत्येकत्वमास्थितः ॥ सर्वथावर्तमानोऽपिसयोगीमयिवर्तते ॥ ३१ ॥ आत्मौपम्येनसर्वत्रसमंपश्यतियो
ऽर्जुन ॥ सुखंवायदिवादुःखंसयोगीपरमोमतः ॥ ३२ ॥ अर्जुनउवाच ॥ ॥ योऽयंयोगस्त्वयाप्रोक्तःसाम्येन
मधुसूदन ॥ एतस्याहंनपश्यामिचंचलत्वात्स्थितिंस्थिराम् ॥ ३३ ॥

नुकंपीश्रेष्ठइत्याह आत्मौपम्येनेति। आत्मौपम्येनस्वसादृश्येनयथाममसुखंप्रियंदुःखंचाप्रियंतथान्येषामपीतिसर्वत्रसमंपश्यन्सुखमेवसर्वेषांयोवांछति नतुकस्यापिदुःखम् सयोगीश्रेष्ठोममाभिमतइत्यर्थः ॥ ३२ ॥ उक्तलक्षणस्ययोगस्यासंभवंमन्वानोऽर्जुनउवाच योऽयमिति। साम्येनमनसोलयविक्षेपशून्यतयाकेवलात्माकारावस्थानेनयोयंयोगस्त्वयाप्रोक्तएतस्ययोगस्यस्थिरांदीर्घकालंस्थितिंनपश्यामि मनसश्चंचलत्वात् ॥ ३३ ॥

एतत्स्फुटयाति चंचलमिति । चंचलंस्वभावेनैवचपलं किंच प्रमाथिप्रमथनशीलंदेहेंद्रियक्षोभकमित्यर्थः किंच बलवद्विचारेणापिजेतुमशक्यम् किंच दृढंवि
षयवासनानुबद्धतयादुर्भेद्यम् अतोयथाऽऽकाशेदोधूयमानस्यवायोःकुंभादिषुनिरोधनमशक्यम् तथातस्यमनसोऽपिनिग्रहंनिरोधंसुदुष्करंसर्वथा कर्तुमशक्यंमन्ये
॥३४॥ तदुक्तंचंचलत्वादिकमंगीकृत्यैवमनोनिग्रहोपायंश्रीभगवानुवाच असंशयमिति । चंचलत्वादिनामनोनिरोद्धुमशक्यमितियद्वदसि एतान्निःसंशयमेव तथा
पितुविषयाचिंतनपूर्वकमभ्यासेनपरमात्माकारप्रत्ययावृत्त्याविषयवैतृष्ण्येनचगृह्यतेनिगृह्यते अभ्यासेनलयप्रतिबंधाद्वैराग्येणचविक्षेपप्रतिबंधादुपरतवृत्तिकंसत्परमा

चंचलंहिमनःकृष्णप्रमाथिबलवद्दृढम् ॥ तस्याहंनिग्रहंमन्येवायोरिवसुदुष्करम् ॥ ३४ ॥ श्रीभगवानुवाच ॥ ॥
असंशयंमहाबाहोमनोदुर्निग्रहंचलम् ॥ अभ्यासेनतुकौंतेयवैराग्येणचगृह्यते ॥ ३५ ॥ असंयतात्म
नायोगोदुष्प्रापइतिमेमतिः ॥ वश्यात्मनातुयततताशक्योऽवाप्तुमुपायतः ॥ ३६ ॥ ॥ अर्जुनउवाच ॥ ॥
अयतिःश्रद्धयोपेतोयोगाच्चलितमानसः ॥ अप्राप्ययोगसंसिद्धिंकांगतिंकृष्णगच्छति ॥ ३७ ॥

त्माकारेणपरिणतंतिष्ठतीत्यर्थः तदुक्तंयोगशास्त्रे–'मनसोवृत्तिशून्यस्यब्रह्माकारतयास्थितिः ॥ यासंप्रज्ञातनामासौसमाधिरभिधीयत'इति॥३५॥ एतावांस्त्विहनिश्च
यइत्याह असंयतात्मनेति। असंयतात्माउक्तप्रकारेणाभ्यासवैराग्याभ्यामसंयतआत्माचित्तंयस्य तेनपुरुषेणायंयोगोदुष्प्रापःप्राप्तुमशक्यः अभ्यासवैराग्याभ्यांवश्यो
वशवर्तीआत्माचित्तंयस्यतेनपुरुषेणपुनश्चानेनैवोप ायेनप्रयत्नंकुर्वतायोगःप्राप्तुंशक्यः ॥ ३६ ॥ अभ्यासवैराग्याभावेनकथंचिदप्राप्तसम्यग्ज्ञानःकिंफलमाप्नोती
त्यर्जुनउवाच अयतिरितिप्रथमंश्रद्धोपेतएवयोगेप्रवृत्तः नतुमिथ्याचारतया ततःपरंतुअयतिः नसम्यग्यतते शिथिलाभ्यासइत्यर्थः तथायोगाच्चलितंमानसंविष-

यप्रवणंचित्तंयस्य मंदवैराग्यइत्यर्थः एवमभ्यासवैराग्यशैथिल्याद्योगस्यसंसिद्धिंफलंज्ञानमप्राप्यकांगतिंप्राप्नोति ॥ ३७ ॥ प्रश्नाभिप्रायंविवृणोतिकच्चिदिति। कर्म णामीश्वरार्पितत्वादननुष्ठानाच्चनतावत्कर्मफलंस्वर्गादिकंप्राप्नोति योगानिष्पत्तेश्चनमोक्षंप्राप्नोति एवमुभयस्माद्भ्रष्टःअप्रतिष्ठोनिराश्रयःअतएवब्रह्मणःप्राप्त्युपायेप थिमार्गेविमूढःसन्कच्चित्किंननश्यति किंवानश्यतीत्यर्थः नाशेदृष्टांतः—यथाछिन्नमभ्रंपूर्वस्मादभ्राद्विश्लिष्टंअभ्रांतरंचाप्राप्तंसन्मध्यएवविलीयतेतद्वादित्यर्थः ॥३८॥ त्वयैवसर्वज्ञेनायंममसंदेहोनिरसनीयः त्वत्तोऽन्यस्त्वेतत्संदेहनिवर्तकोनास्तीत्याह एतन्मइति। एतत्एनं छेत्तानिवर्तकः स्पष्टमन्यत् ॥ ३९ ॥ अत्रोत्तरंश्रीभ

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिवनश्यति ॥ अप्रतिष्ठोमहाबाहोविमूढोब्रह्मणःपथि ॥ ३८ ॥ एतन्मेसंशयंकृष्णछेत्तुमर्हस्यशे षतः ॥ त्वदन्यःसंशयस्यास्यछेत्तानह्युपपद्यते ॥ ३९ ॥ ॥ श्रीभगवानुवाच ॥ ॥ पार्थनैवेहनामुत्रविनाशस्तस्यविद्यते ॥ नहिकल्याणकृत्कश्चिद्दुर्गतिंतातगच्छति ॥ ४० ॥ प्राप्यपुण्यकृतांल्लोकानुषित्वाशाश्वतीःसमाः ॥ शुचीनांश्रीमतांगेहेयोग भ्रष्टोऽभिजायते ॥ ४१ ॥**

गवानुवाच पार्थेतिसार्धैश्चतुर्भिः। इहलोकेनाशउभयभ्रंशात्पातित्यम् अमुत्रपरलोकेनाशोनरकप्राप्तिः तदुभयंतस्यनास्त्येव यतःकल्याणकृच्छुभकारीकश्चिदपिदु र्गतिंनगच्छति अयंचशुभकारीश्रद्धयायोगेप्रवृत्तत्वात् तातेतिलोकरीत्योपलालयन्संबोधयतिं ॥ ४० ॥ तर्हिकिमसौप्राप्नोतीत्यपेक्षायामाह प्राप्येति। पुण्यकारिणा मश्वमेधादियाजिनांलोकान्प्राप्य तत्रशाश्वतीःसमाः बहून्संवत्सरानुषित्वावाससुखमनुभूयशुचीनांसदाचाराणांश्रीमतांधनिनांगेहेसयोगभ्रष्टोजन्मप्राप्नोति ॥४१॥

अल्पकालाभ्यस्तयोगभ्रंशेगतिरियमुक्ता चिराभ्यस्तयोगभ्रंशेतुपक्षांतरमाह अथेति । योगनिष्ठानांधीमतांज्ञानिनामेवकुलेजायते नतुपूर्वोक्तानामनारूढयोगानांकुलेजायते एतज्जन्मस्तौति ईदृशंयज्जन्मएतद्धिलोकेदुर्लभतरम् मोक्षहेतुत्वात् ॥ ४२ ॥ ततःकिमतआह तत्रेतिसार्द्धेन । तत्रद्विःप्रकारेऽपिजन्मनि पूर्वदेहेभवंपौर्वदेहिकंतमेवब्रह्मविषययाबुद्ध्यासंयोगंलभते ततश्चभूयोऽधिकंसंसिद्धौमोक्षेप्रयत्नंकरोति ॥ ४३ ॥ तत्रहेतुः पूर्वेति । तेनैवपूर्वदेहकृताभ्यासेनावशोऽपिकुतश्चिदंतरायादनिच्छन्नपिसंह्रियते विषयेभ्यःपरावर्त्यब्रह्मनिष्ठःक्रियते तदेवंपूर्वाभ्यासवशेनप्रयत्नंकुर्वन्शनैर्मुच्यतइतीममर्थंकैमुत्यन्यायेनस्फुटयाति

अथवायोगिनामेवकुलेभवतिधीमताम् ॥ एतद्धिदुर्लभतरंलोकेजन्मयदीदृशम् ॥ ४२ ॥ तत्रतंबुद्धिसंयोगंलभतेपौर्वदेहिकम् ॥ यततेचततोभूयःसंसिद्धौकुरुनंदन ॥ ४३ ॥ पूर्वाभ्यासेनतेनैवह्रियतेह्यवशोऽपिसः ॥ जिज्ञासुरपियोगस्यशब्दब्रह्मातिवर्तते ॥ ४४ ॥ प्रयत्नाद्यतमानस्तुयोगीसंशुद्धकिल्बिषः ॥ अनेकजन्मसंसिद्धस्ततोयातिपरांगतिम् ॥ ४५ ॥

जिज्ञासुरितिसार्धेन । योगस्यस्वरूपंजिज्ञासुरेवकेवलंनतुप्राप्तयोगः एवंभूतोयोगेप्रविष्टमात्रोऽपिपापवशाद्योगभ्रष्टोऽपिशब्दब्रह्म वेदमतिवर्तते वेदोक्तकर्मफलान्यतिक्रामति तेभ्योऽधिकंफलंप्राप्यमुच्यतइत्यर्थः ॥ ४४ ॥ यदैवंमंदप्रयत्नोऽपियोगीपरांगतिंयाति तदायस्तुयोगीप्रयत्नादुत्तरोत्तरमधिकंयोगेयतमानोयत्नंकुर्वन् योगेनैवसंशुद्धकिल्बिषोविधूतपापः सोऽनेकेषुजन्मसूपचितेनयोगेनसंसिद्धः सम्यग्ज्ञानीभूत्वा ततःश्रेष्ठांगतिंयातीतिकिंवक्तव्यमित्यर्थः ॥ ४५ ॥

यस्मादेवंतस्मात् तपस्विभ्यइति । कृच्छ्रचांद्रायणादितपोनिष्ठेभ्योऽपि ज्ञानिभ्यःशास्त्रज्ञानवद्भ्योऽपि कर्मिभ्यःइष्टापूर्तादिकर्मकारिभ्योऽपि योगीश्रेष्ठोऽभिमतः तस्मात्त्वंयोगीभव ॥ ४६ ॥ योगीनामपियमनियमादिपराणांमध्येमद्भक्तःश्रेष्ठइत्याह योगिनामिति । मद्गतेनमय्यासक्तेनांतरात्मनामनसायोमांपरमेश्वरंवासुदेवंश्रद्धायुक्तःसन्भजते सयोगयुक्तेषुश्रेष्ठोममसंमतः अतोमद्भक्तोभवेतिभावः ॥४७॥ 'आत्मयोगमवोचद्योभक्तियोगशिरोमणिम् ॥ तंवंदेपरमानंदंमाधवंभक्तशेवधिम् ॥१॥' इतिसुबो० टीका० षष्ठोऽध्यायः ॥६॥ 'विज्ञेयमात्मतस्तत्त्वंसयोगंसमुदाहृतम ॥ भजनीयमथेदानीमैश्वरंरूपमीर्यते ॥१॥' पूर्वाध्यायांतेमद्गतेनांतरा

तपस्विभ्योऽधिकोयोगीज्ञानिभ्योऽपिमतोऽधिकः ॥ कर्मिभ्यश्चाधिकोयोगीतस्माद्योगीभवार्जुन ॥ ४६ ॥ योगिनामपिसर्वेषांमद्गतेनांतरात्मना ॥ श्रद्धावान्भजतेयोमांसमेयुक्ततमोमतः ॥ ४७ ॥ इतिश्रीमद्भगवद्गीता०अभ्यासयोगोनामषष्ठोऽध्यायः ॥ ६ ॥ ॥ श्रीभगवानुवाच ॥ मय्यासक्तमनाःपार्थयोगंयुंजन्मदाश्रयः ॥ असंशयंसमग्रंमांयथाज्ञास्यसितच्छृणु ॥ १ ॥ ज्ञानंतेऽहंसविज्ञानमिदंवक्ष्याम्यशेषतः ॥ यज्ज्ञात्वानेहभूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥

त्मनायोमांभजतिसमेयुक्ततमोमतइत्युक्तं तत्रकीदृशस्त्वम् यस्यभक्तिःकर्तव्येत्यपेक्षायांस्वस्वरूपंनिरूपयिष्यन्श्रीभगवानुवाच मय्यासक्तमनाइति । मयिपरमेश्वरेआसक्तमभिनिविष्टंमनोयस्यसः मदाश्रयःअहमेवाश्रयोयस्यानन्यशरणःसन्योगंयुंजन्नभ्यसन्असंशयंयथाभवत्येवंमांसमग्रंविभूतिबलैश्वर्यादिसहितंयथाज्ञास्यसितदिदंमयावक्ष्यमाणंशृणु ॥ १ ॥ वक्ष्यमाणंस्तौति ज्ञानमिति । ज्ञानंशास्त्रीयंविज्ञानमनुभवस्तत्सहितम् इदंमद्विषयम् अशेषतःसाकल्येनवक्ष्यामि यज्ज्ञात्वा

इहश्रेयोमार्गेवर्तमानस्यपुनरन्यज्ज्ञातव्यमवशिष्टंनभवति तेनैवकृतार्थोभवतीत्यर्थः ॥ २ ॥ मद्भक्तिविनातुमज्ज्ञानंदुर्लभमित्याह मनुष्याणामिति । असंख्याता नांजीवानांमध्येमनुष्यव्यतिरिक्तानांश्रेयसिप्रवृत्तिरेवनास्ति मनुष्याणांतुसहस्रेषुमध्येकश्चिदेवप्रकृष्टपुण्यवशात्सिद्धयेआत्मज्ञानायप्रयतते प्रयत्नंकुर्वतामपिसहस्रे षुकश्चिदेवप्रकृष्टपुण्यवशादात्मानंवेत्ति तादृशानांचात्मज्ञानसिद्धानांसहस्रेषुकश्चिदेवमांपरमात्मानंमत्प्रसादेनतत्त्वतोवेत्ति तदेवमतिदुर्लभमपिमज्ज्ञानंतुभ्यमहं वक्ष्यामीत्यर्थः ॥ ३ ॥ एवंश्रोतारमभिमुखीकृत्येदानींप्रकृतिद्वारासृष्ट्यादिकर्तृत्वेनेश्वरतत्त्वंप्रतिज्ञातंनिरूपयिष्यन्परापरभेदेनप्रकृतिद्वयमाह भूमिरितिद्वाभ्यां । भूम्यादिशब्दैःपंचगंधादितन्मात्राण्युच्यंते मनःशब्देनतत्कारणभूतोऽहंकारःबुद्धिशब्देनतत्कारणभूतंमहत्तत्त्वं अहंकारशब्देनतत्कारणमविद्येत्येवमष्टधाभिन्नायद्वा

मनुष्याणांसहस्रेषुकश्चिद्यततिसिद्धये ॥ यततामपिसिद्धानांकश्चिन्मांवेत्तितत्त्वतः ॥ ३ ॥ भूमिरापोऽनलोवायुःखंमनोबु द्धिरेवच ॥ अहंकारइतीयंमेभिन्नाप्रकृतिरष्टधा ॥ ४ ॥ अपरेयमितस्त्वन्यांप्रकृतिंविद्धिमेपराम् ॥ जीवभूतांमहाबाहोययेदं धार्यतेजगत ॥ ५ ॥

भूम्यादिशब्दैः पंचमहाभूतानिसूक्ष्मैःसहैकीकृत्यगृह्यंते अहंकारशब्देनैवाहंकारस्तेनैवतत्कार्याणींद्रियाण्यपिगृह्यंते बुद्धिरितिमहत्तत्त्वं मनःशब्देनमनसैवोन्नेय मव्यक्तरूपंप्रधानमित्यनेनप्रकारेणमेप्रकृतिर्मायाख्याशक्तिरष्टधाभिन्नाविभागंप्राप्ता चतुर्विंशतिभेदभिन्नाप्यष्टस्वेवांतर्भावविवक्षयाष्टधाभिन्नेत्युक्तम तथाचवक्ष्यमाण क्षेत्राध्यायेइमामेवप्रकृतिंचतुर्विंशतितत्त्वात्मनाप्रपंचयिष्यति—'महाभूतान्यहंकारोबुद्धिरव्यक्तमेवच ॥ इंद्रियाणिदशैकंचपंचचेंद्रियगोचरा'इति ॥४॥ अपराभिमांप्र कृतिमुपसंहरन्परांप्रकृतिमाह अपरेति। अष्टधोक्तायाप्रकृतिःइयमपरानिकृष्टा जडत्वात्परार्थत्वाच्च इतःसकाशात्परांप्रकृष्टांअन्यांजीवभूतांजविस्वरूपांमेप्रकृतिंविद्धि

जानीहि परत्वेहेतुः—ययाचेतनयाक्षेत्रज्ञरूपयास्वकर्मद्वारेणेदंजगद्धार्यते ॥ ५ ॥ अनयोःप्रकृतित्वंदर्शयन्स्वस्यतद्वारासृष्ट्यादिकारणत्वमाह एतादिति । एतेक्षेत्रक्षे त्रज्ञरूपेप्रकृतीयोनीकारणभूतेयेषांतान्येतद्योनीनिस्थावरजंगमात्मकानिसर्वाणिभूतानीत्युपधारयबुद्ध्यस्व तत्रजडाप्रकृतिर्देहरूपेणपरिणमते चेतनातुमदंशभूता भोक्तृत्वेनदेहेषुप्रविश्यस्वकर्मणातानिधारयति तेचमदीयेप्रकृतीमत्तःसंभूते अतोऽहमेवकृत्स्नस्यसप्रकृतिकस्यजगतःप्रभवः प्रकर्षेणभवत्यस्मादितिप्रभवः परका रणमहमित्यर्थः तथाप्रलीयतेऽनेनेतिप्रलयःसंहर्ताप्यहमेवेतिभावः ॥ ६ ॥ यस्मादेवंतस्मान्मत्तइति । मत्तःसकाशात्परतरंश्रेष्ठं जगतःसृष्टिसंहारयोःस्वतंत्रंकारणं किंचिदपिनास्ति स्थितिहेतुरप्यहमेवेत्याह मयीति । मयिसर्वमिदंजगत्प्रोतंग्रथितमाश्रितमित्यर्थः दृष्टांतःस्पष्टः ॥ ७ ॥ जगतःस्थितिहेतुत्वंप्रपंचयति रसोऽह

एतद्योनीनिभूतानिसर्वाणीत्युपधारय ॥ अहंकृत्स्नस्यजगतःप्रभवःप्रलयस्तथा ॥ ६ ॥ मत्तःपरतरंनान्यत्किंचिदस्तिधनंजय ॥
मयिसर्वमिदंप्रोतंसूत्रेमणिगणाइव ॥ ७ ॥ रसोऽहमप्सुकौंतेयप्रभाऽस्मिशशिसूर्ययोः ॥ प्रणवःसर्ववेदेषुशब्दःखेपौरुषंनृषु ॥ ८ ॥
पुण्योगंधःपृथिव्यांचतेजश्चास्मिविभावसौ ॥ जीवनंसर्वभूतेषुतपश्चास्मितपस्विषु ॥ ९ ॥

मितिपंचभिः । अप्सुरसोऽहंरसतन्मात्ररूपयाविभूत्यातदाश्रयत्वेनाप्सुस्थितोऽहमित्यर्थः तथाशशिसूर्ययोःप्रभास्मिचंद्रेऽर्केचप्रकाशरूपयाविभूत्यातदाश्रयत्वेनस्थि तोऽहमित्यर्थः एवमुत्तरत्रापिद्रष्टव्यम् सर्वेषुवेदेषुवैखरीरूपेषुतन्मूलभूतःप्रणवओंकारोऽस्मि खेआकाशेशब्दतन्मात्ररूपोऽस्मि नृषुपुरुषेषुपौरुषमुद्यमोऽस्मि उद्य मोहिपुरुषास्तिष्ठंति ॥ ८ ॥ किंच पुण्यइति । पुण्योऽविकृतोगंधःगंधतन्मात्रंपृथिव्याआश्रयभूतमहमित्यर्थः यद्वा विभूतिरूपेणाश्रयत्वस्याविवक्षितत्वात्सुरभि गंधस्यैवोत्कृष्टतयाविभूतित्वात्पुण्योगंधइत्युक्तम् तथाविभावसावग्नौयत्तेजःसहजादीप्तिस्तदहम् सर्वभूतेषुजीवनंप्राणधारणमायुरहमित्यर्थः तपस्विषुवानप्रस्था

दिषुद्वंद्वसहनरूपंतपोऽस्मि ॥ ९॥ किंच बीजमिति । सर्वेषांचराचराणांभूतानाबीजंसजातीयकार्योत्पादनसामर्थ्यंसनातनंनित्यमुत्तरोत्तरसर्वकार्येष्वनुस्यूतंतदेव बीजंमद्विभूतिंविद्धि नतुप्रतिव्यक्तिविनश्यत् तथाबुद्धिमतांबुद्धिःप्रज्ञाहमस्मि तेजास्विनातेजः प्रागल्भ्यमहम् ॥ १० ॥ किंच बलमिति। कामोऽप्राप्तेवस्तुन्यभिलाषोराजसः रागः पुनरभिलषितेऽर्थेप्राप्तेऽपिपुनरधिकेऽर्थेचित्तरंजनात्मकस्तृष्णापरपर्यायस्तामसस्ताभ्यांविवर्जितंबलवतांबलमस्मि सात्विकंस्वधर्मानुष्ठानसामर्थ्यमहमित्यर्थः स्वधर्मेणाविरुद्धःस्वदारेषुपुत्रोत्पत्तिमात्रोपयोगीकामोऽहम ॥ ११ ॥ किंच येचेति येचान्येऽपिसात्विकाभावाःशमदमादयः राजसाश्चद्वेषदर्पादयः

बीजंममांसर्वभूतानांविद्धिपार्थसनातनम् ॥ बुद्धिर्बुद्धिमतामस्मितेजस्तेजस्विनामहम् ॥ १० ॥ बलंबलवतामस्मिकामरागविवर्जितम् ॥ धर्माविरुद्धोभूतेषुकामोऽस्मिभरतर्षभ ॥ ११ ॥ येचैवसात्विकाभावाराजसास्तामसाश्चये ॥ मत्तएवेतितान्विद्धिनत्वहंतेषुतेमयि ॥ १२ ॥ त्रिभिर्गुणमयैर्भावैरेभिःसर्वमिदंजगत् ॥ मोहितंनाभिजानातिमामेभ्यःपरमव्ययम् ॥ १३ ॥

तामसाश्चशोकमोहादयः प्राणिनांस्वकर्मवशाज्जायंते तान्सर्वान्मत्तएवजातानितिविद्धि मदीयप्रकृतिगुणत्रयकार्यत्वात् एवमपितेष्वहंनवर्ते जीववत्तदधीनोऽहंनभवामीत्यर्थः तेतुमदधीनाःसंतोमयिवर्ततइत्यर्थः ॥१२॥ एवंभूतंत्वांपरमेश्वरमयंजनःकिमितिनजानातीत्यतआहत्रिभिरिति । त्रिभिस्त्रिविधैरेभिःपूर्वोक्तैः गुणमयैः कामलोभादिभिर्गुणविकारैः भावैःस्वभावैर्मोहितमिदंजगत् अतोमांनाभिजानाति कथंभूतं एभ्योभावेभ्यःपरंएभिरसंस्पृष्टम् एतेषांनियंतारम् अतएवाव्ययम् निर्विकारमित्यर्थः ॥ १३ ॥

केतर्हित्वांजानंतीत्यतआह दैवीहीति। दैवीअलौकिकी अत्यद्भुतेत्यर्थः गुणमयीसत्वादिगुणविकारात्मिका ममपरमेश्वरस्यशक्तिर्मायादुरत्ययादुस्तराहिप्रसिद्धमे तत् तथापियेमामेवेत्येवकारेणाव्यभिचारिण्याभक्त्याप्रपद्यंतेभजंति तेमायामेतांदुस्तरामपितरंति ततोमांजानंतीतिभावः ॥ १४ ॥ किमितितर्हिसर्वेत्वामेवनभ जंतितत्राह नमामिति। नरेषुयेऽधमास्तेमांनप्रपद्यंतेनभजंति अधमत्वेहेतुः—मूढाःविवेकशून्याः तत्कुतः दुष्कृतिनःपापशीलाः अतोमाययापहृतंनिरस्तंशास्त्राचार्यो पदेशाभ्यांजातमपिज्ञानंयेषांतेतथा अतएव दंभोदर्पोऽभिमानश्चक्रोधःपारुष्यमेवचेत्यादिनावक्ष्यमाणमासुरंभावंस्वभावंप्राप्ताःसंतोनमांभजंति ॥ १५ ॥ सुकृति नस्तुमांभजंतितेचसुकृततारतम्येनचतुर्विधाइत्याह चतुर्विधाइति। पूर्वजन्मसुयेकृतपुण्याजनास्तेमांभजंतितेतुचतुर्विधाः आर्तोरोगाद्यभिभूतः सयदिपूर्वकृतपुण्य

दैवीह्येषागुणमयीममभायादुरत्यया ॥ मामेवयेप्रपद्यंतेमायामेतांतरंतिते ॥ १४ ॥ नमांदुष्कृतिनोमूढाःप्रपद्यंतेनराधमाः ॥ मायया ऽपहृतज्ञानाआसुरंभावमाश्रिताः ॥ १५ ॥ चतुर्विधाभजंतेमांजनाःसुकृतिनोऽर्जुन ॥ आर्तोजिज्ञासुरर्थार्थीज्ञानीचभरतर्षभ ॥ १६ ॥ तेषांज्ञानीनित्ययुक्तएकभक्तिर्विशिष्यते ॥ प्रियोहिज्ञानिनोऽत्यर्थमहंसचममप्रियः ॥ १७ ॥

स्तर्हिमांभजति अन्यथाक्षुद्रदेवताभजनेनसंसरति एवमुत्तरत्रापिद्रष्टव्यम् जिज्ञासुरात्मज्ञानेच्छुः अर्थार्थीअत्रवापरत्रवाभोगसाधनभूतार्थलिप्सुः ज्ञानीचआत्म वित् ॥ १६ ॥ एतेषांमध्येज्ञानीश्रेष्ठइत्याह तेषामिति। तेषांमध्येज्ञानीविशिष्टः तत्रहेतवः—नित्ययुक्तःसदामन्निष्ठएकस्मिन्मय्येवभक्तिर्यस्यसः ज्ञानिनोदेहाद्य भिमानाभावेनचित्तविक्षेपाभावान्नित्ययुक्तत्वमेकांतभक्तित्वंचसंभवतिनान्यस्य अतएवहितस्याहमत्यंतंप्रियः सचमम तस्मादेतैर्नित्ययुक्तत्वादिभिश्चतुर्भिर्हेतुभिः सउत्तमइत्यर्थः ॥ १७ ॥

तर्हिकिमितरेत्रयस्त्वद्भक्ताः संसरंतिनहिनहीत्याह उदाराइति । सर्वेऽप्येतेउदाराःमहांतः मोक्षभाजएवेत्यर्थः ज्ञानीपुनरात्मैवेतिमेमतंनिश्चयः हियस्मात्सज्ञानी युक्तात्मामदेकाचित्तःसन् नविद्यतेउत्तमायस्यास्तामनुत्तमांसर्वोत्तमांगतिम् मामेवास्थितःआश्रितवान् मद्यतिरिक्तमन्यत्फलंनमन्यतइत्यर्थः ॥ १८ ॥ एवंभूतो मद्भक्तोऽतिदुर्लभइत्याह बहूनामिति । बहूनांजन्मनांकिंचित्किंचित्पुण्योपचयेनांतेचरमेजन्मनिज्ञानवान्सन्सर्वमिदंचराचरंवासुदेवएवेतिसर्वात्मदृष्ट्यामांप्रपद्यते भजति अतःसमहात्माऽपरिच्छिन्नदृष्टिःसुदुर्लभः ॥ १९ ॥ तदेवंकामिनोऽपिसंतःकामप्राप्तयेपरमेश्वरंमामेवभजंति तेकामान्प्राप्यशनैर्मुच्यंतइत्युक्तम् येत्वत्यंतं

**उदाराःसर्वएवैतेज्ञानीत्वात्मैवमेमतम् ॥ आस्थितःसहियुक्तात्मामामेवानुत्तमांगतिम् ॥ १८ ॥ बहूनांजन्मनामन्तेज्ञानवान्मांप्रपद्यते ॥ वासुदेवःसर्वमितिसमहात्मासुदुर्लभः ॥ १९ ॥ कामैस्तैस्तैर्हृतज्ञानाःप्रपद्यंतेऽन्यदेवताः ॥ तंतंनियममास्थायप्रकृत्यानियताःस्वया ॥ २० ॥ योयोयांयांतनुंभक्तःश्रद्धयार्चितुमिच्छति ॥ तस्यतस्याचलांश्रद्धांतामेवविदधाम्यहम् ॥ २१ ॥**

राजसास्तामसाश्चकामाभिभूताःक्षुद्रदेवताःसेवंते तेसंसरंतीत्याह कामैरितिचतुर्भिः । येतुतैस्तैःपुत्रकीर्तिशत्रुजयादिविषयैःकामैरपहृतविवेकाःसंतः अन्याःक्षुद्राः भूतप्रेतयक्षादिदेवताभजंति किंकृत्वा तत्तद्देवताराधनेयोयोनियमउपवासादिलक्षणस्तंतंनियमंस्वीकृत्य तत्रापिस्वकीययाप्रकृत्यापूर्वाभ्यासवासनया नियताःसंतोदेवताविशेषंभजंति ॥ २० ॥ योयोयामिति । तेषांमध्येयोयोभक्तः यांयांतनुंदेवतारूपांमदीयामेवमूर्तिंश्रद्धयाऽर्चितुमिच्छातिप्रवर्तते तस्यतस्यभक्तस्यतत्तन्मूर्तिविषयांतामेवश्रद्धामचलांदृढांअहमंतर्यामीविदधामिकरोमि ॥ २१ ॥

ततश्च सतयेति । सभक्तस्तयादृढयाश्रद्धयातस्यास्तनोराराधनमीहतेकरोति ततश्चयेसंकल्पिताःकामास्तान्कामान्ततोदेवताविशेषाल्लभन्ते किंतु मयैवतत्तद्देवतांत
र्यामिणाविहितान्निर्मितान् हिस्फुटमेवतत्तद्देवतानामपिमदधीनत्वान्ममसूर्तित्वाच्चेत्यर्थः ॥ २२ ॥ तदेवं यद्यपिसर्वाअपिदेवताममैवमूर्तयः अतस्तदाराधनमपि
वस्तुतोमदाराधनमेव तत्तत्फलदातापिचाहमेव तथापिसाक्षान्मद्भक्तानांचतेषांफलवैषम्यंभवतीत्याह अंतवत्त्विति । अल्पमेधसांपरिच्छिन्नदृष्टीनांमयादत्तमपितत्फ
लमन्तवत्विनाशिभवति तदेवाह देवान्यजंतीतिदेवयजः तेदेवानंतवतोयांति मद्भक्तास्तुमांअनाद्यंतंपरमानंदंप्राप्नुवंति ॥ २३ ॥ ननुचसमानेप्रयासेमहतिच
फलविशेषेसतिसर्वेऽपिकिमितिदेवतांतरंहित्वात्वामेवनभजंतितत्राह अव्यक्तमिति । अव्यक्तंप्रपंचातीतंमांव्यक्तिंमनुष्यमत्स्यकूर्मादिभावंप्राप्तमल्पबुद्धयोमन्यंते

सतयाश्रद्धयायुक्तस्तस्याराधनमीहते ॥ लभतेचततःकामान्मयैवविहितान्हितान् ॥ २२ ॥ अंतवत्तुफलंतेषांतद्भवत्यल्पमेधसाम् ॥
देवान्देवयजोयांतिमद्भक्तायांतिमामपि ॥ २३ ॥ अव्यक्तंव्यक्तिमापन्नंमन्यंतेमामबुद्धयः ॥ परंभावमजानंतोममाव्ययमनुत्तमम्
॥ २४ ॥ नाहंप्रकाशःसर्वस्ययोगमायासमावृतः ॥ मूढोऽयंनाभिजानातिलोकोमामजमव्ययम् ॥ २५ ॥

तत्रहेतुः ममपरंभावंस्वरूपमजानंतः कथंभूतम् अव्ययंनित्यं नविद्यतेउत्तमोयस्मात्तंभावं अतोजगद्रक्षार्थंलीलयाविष्कृतनानाविशुद्धोर्जितसत्वमूर्तिंमांपरमेश्वरं
स्वकर्मनिर्मितभौतिकदेहंदेवतांतरसमंपश्यंतोमंदमतयोमांनातीवाद्रियंते प्रत्युतक्षिप्रफलंदेवतांतरमेवभजंति तेचोक्तप्रकारेणअंतवत्फलंप्राप्नुवंतीत्यर्थः ॥ २४ ॥
तेषांस्वाज्ञानेहेतुमाह नाहमिति । सर्वस्यलोकस्यनाहंप्रकाशः प्रकटोनभवामि किंतुमद्भक्तानामेव यतोयोगमाययासमावृतः योगोयुक्तिः मदीयःकोप्यचिंत्यप्रज्ञा
विलासःसएवमाया अघटमानघटनाचातुर्यंअनयासंछन्नः अतएवमत्स्वरूपज्ञानेमूढःसन्नयंलोकः अजमव्ययंचमांनजानाति ॥ २५ ॥

सर्वोत्तमंमत्स्वरूपंअजानंइत्युक्तम् तदेवस्वस्यसर्वोत्तमत्वमनावृतज्ञानशक्तित्वेनदर्शयन्नन्येषामज्ञानमेवाह वेदेति । समतीतानिविनष्टानिवर्तमानानिभावीनिचत्रिकालवर्तीनिभूतानिस्थावरजंगमानिसर्वाण्यहंवेदजानामि मायाश्रयत्वान्मम तस्याःस्वाश्रयव्यामोहकत्वाभावात्इतिप्रसिद्धम् मांतुनकोपिवेत्ति मन्मायामोहितत्वात् प्रसिद्धंहिलोकेमायायाःस्वाश्रयाधीनत्वमन्यमोहकत्वंच ॥ २६ ॥ तदेवंमायाविषयत्वेनजीवानांपरमेश्वराज्ञानमुक्तम् तस्यैवाज्ञानस्यदृढत्वेकारणमाह इच्छाद्वेषसमुत्थेनेति। सृज्यतइतिसर्गः सर्गेस्थूलदेहोत्पत्तौसत्यां तदनुकूलेइच्छा तत्प्रातिकूलेचद्वेषः ताभ्यांसमुत्थःसमुद्भूतोयःशीतोष्णसुखदुःखादिद्वंद्वनिमित्तो

वेदाहंसमतीतानिवर्तमानानिचार्जुन ॥ भविष्याणिचभूतानिमांतुवेदनकश्चन ॥ २६ ॥ इच्छाद्वेषसमुत्थेनद्वंद्वमोहेनभारत ॥ सर्वभूतानिसंमोहंसर्गेयांतिपरंतप ॥ २७ ॥ येषांत्वंतगतंपापंजनानांपुण्यकर्मणाम् ॥ तेद्वंद्वमोहनिर्मुक्ताभजंतेमांदृढव्रताः ॥ २८ ॥ जरामरणमोक्षायमामाश्रित्ययतंतिये ॥ तेब्रह्मतद्विदुःकृत्स्नमध्यात्मंकर्मचाखिलम् ॥ २९ ॥

मोहोविवेकभ्रंशःतेनसर्वभूतानिसंमोहंचअहमेवसुखीदुःखीचेतिगाढतरमभिनिवेशंप्राप्नुवंतिअतस्तानिमज्ज्ञानाभावान्नमांजानंतीतिभावः ॥ २७ ॥ कुतस्तर्हिकेचनत्वांभजंतोदृश्यंतेतत्राह येषामिति । येषांतुपुण्याचरणशीलानांसर्वप्रतिबंधकंपापंअंतगतंनष्टम् तेद्वंद्वनिमित्तेनमोहेननिर्मुक्ताः दृढव्रताएकांतिनःसंतोमांभजंते ॥ २८ ॥ एवंचमांभजंतस्तेसर्वंविज्ञेयंविज्ञायकृतार्थाभवंतीत्याह जरामरणेति । जरामरणयोर्निरासार्थंमामाश्रित्ययेप्रयतंतेतेतत्परंब्रह्मविदुःकृत्स्नमध्यात्मंचविदुःयेनतत्प्राप्तव्यंतंदेहादिव्यतिरिक्तंशुद्धमात्मानंचजानंतीत्यर्थः तत्साधनभूतमखिलंसरहस्यंकर्मचजानंति ॥ २९ ॥

नचैवंभूतानांयोगभ्रंशशंकापीत्याह साधिभूताधिदैवमिति । अधिभूतादिशब्दानामर्थभगवानेवानंतराध्यायेव्याख्यास्यति अधिभूतेनाधिदैवेनचसहाधियज्ञनचे सहितंयेमांभजंति तेयुक्तचेतसःमय्यासक्तमनसःप्रयाणकालेऽपिमरणसमयेपिमांविदुर्जानंति नतुतदापिव्याकुलीभूयमांविस्मरंति अतोमद्भक्तानांनयोगभ्रंशशं केत्यर्थः ॥३०॥ 'कृष्णभक्तैरयत्नेनब्रह्मज्ञानमवाप्यते॥इतिविज्ञानयोगाख्येसप्तमेसंप्रकाशितम्॥१॥'इतिसुबो०टी०सप्तमः ॥७॥ ॥'ब्रह्मकर्माधिभूतादिविदुःकृष्णै कचेतसः॥इत्युक्तंब्रह्मकर्मादिस्पष्टमष्टमउच्यते॥१॥' पूर्वाध्यायांतेभगवतोपक्षिप्तानांब्रह्माध्यात्मादिसप्तानांपदार्थानांतत्त्वंजिज्ञासुरर्जुनउवाच किंतद्ब्रह्मेतिद्वाभ्याम्

साधिभूताधिदैवंमांसाधियज्ञंचयेविदुः ॥ प्रयाणकालेऽपिचमांतेविदुर्युक्तचेतसः ॥ ३० ॥ इतिश्रीमद्भगवद्गीतायांज्ञानविज्ञानयोगोना मसप्तमोऽध्यायः ॥ ७ ॥ अर्जुनउवाच ॥ ॥ किंतद्ब्रह्मकिमध्यात्मंकिंकर्मपुरुषोत्तम ॥ अधिभूतंचकिंप्रोक्तमधिदैवंकिमुच्यते ॥ १ ॥ अधियज्ञःकथंकोऽत्रदेहेऽस्मिन्मधुसूदन ॥ प्रयाणकालेचकथंज्ञेयोऽसिनियतात्मभिः ॥ २ ॥ श्रीभगवानुवाच ॥ अक्षरंब्रह्मप रमंस्वभावोऽध्यात्ममुच्यते ॥ भूतभावोद्भवकरोविसर्गःकर्मसंज्ञितः ॥ ३ ॥

स्पष्टोर्थः ॥ १ ॥ किंच अधियज्ञइति । अत्रदेहेयोयज्ञोवर्ततेतस्मिन्कोऽधियज्ञः अधिष्ठाताप्रयोजकः फलदाताचकइत्यर्थः स्वरूपंपृष्ट्वाअधिष्ठानप्रकारंपृच्छति कथंकेनप्रकारेणासावस्मिन्देहेस्थितोयज्ञमधितिष्ठतीत्यर्थः यज्ञग्रहणंसर्वकर्मणामुपलक्षणार्थम् अंतकालेचनियतचित्तैःपुरुषैःकथंकेनोपायेनज्ञेयोऽसि ॥ २ ॥ प्रश्न क्रमेणोत्तरंश्रीभगवानुवाच अक्षरमितित्रिभिः । नक्षरतिनचलतीत्यक्षरम् ननुजीवोऽप्यक्षरस्तत्राह परमंयदक्षरंजगतांमूलकारणंतद्ब्रह्म "एतद्वैतदक्षरंगार्गिब्राह्मणा अभिवदंति"इतिश्रुतेः स्वस्यैवब्रह्मणएवांशतोजीवरूपेणभवनंस्वभावः सएवात्मानंदेहमधिकृत्यभोक्तृत्वेनवर्तमानोऽध्यात्मशब्देनोच्यतइत्यर्थः भूतानांजरायुजा

दीनांभावउत्पत्तिः उद्भवश्चउत्कृष्टत्वेनभवनमुद्भवः 'आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजा' इत्युक्तक्रमेणवृद्धिःतौभूतभावोद्भवौकरोतियः विसर्गःदेवतोद्देशेनद्र व्यत्यागरूपोयज्ञः सर्वकर्मणामुपलक्षणमेतत् सकर्मशब्दवाच्यः ॥ ३ ॥ किंच अधिभूतमिति । क्षरोविनश्वरोभावोदेहादिपदार्थोभूतंप्राणिमात्रमधिकृत्यभवती त्यधिभूतमुच्यते पुरुषोवैराजःसूर्यमंडलमध्यवर्तीस्वांशभूतसर्वदेवतानामधिपतिरधिदैवतमुच्यते अधिदैवतमधिष्ठात्रीदेवता "सवैशरीरीप्रथमःसवैपुरुषउच्यते॥आ दिकर्तासभूतानांब्रह्माग्रेसमवर्तत"इतिश्रुतेः अत्रास्मिन्देहेंऽतर्यामित्वेनस्थितोऽहमेवाधियज्ञोयज्ञाधिष्ठात्रीदेवता यज्ञादिकर्मप्रवर्तकस्तत्फलदाताचकथमित्यस्योत्तर मनेनैवोक्तंद्रष्टव्यम् अंतर्यामिणोऽसंगत्वादिभिर्गुणैर्जीववैलक्षण्येनदेहांतर्वर्तित्वस्यप्रसिद्धत्वात् तथाचश्रुतिः—"द्वासुपर्णासयुजासखायासमानंवृक्षंपरिषस्वजाते । त

अधिभूतंक्षरोभावःपुरुषश्चाधिदैवतम् ॥ अधियज्ञोऽहमेवात्रदेहेदेहभृतांवर ॥ ४ ॥ अंतकालेचमामेवस्मरन्मुक्त्वाकलेवरम् ॥ यःप्र यातिसमद्भावंयातिनास्त्यत्रसंशयः ॥ ५ ॥ यंयंवाऽपिस्मरन्भावंत्यजत्यंतेकलेवरम् ॥ तंतमेवैतिकौंतेयसदातद्भावभावितः ॥ ६ ॥

योरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीति"इति देहभृतांमध्येश्रेष्ठइतिसंबोधयन्त्वमप्येवंभूतमंतर्यामिणंपराधीनस्वप्रवृत्तिनिवृत्त्यन्वयव्यतिरेकाभ्यांबोद्धुम र्हसीतिसूचयति ॥ ४ ॥ प्रयाणकालेचकथंज्ञेयोऽसीत्यनेनपृष्टमंतकालज्ञानोपायंतत्फलंचदर्शयति अंतकालइति । मामेवोक्तलक्षणमंतर्यामिरूपंपरमेश्वरंस्मरन्देहं त्यक्त्वायःप्रकर्षेणार्चिरादिमार्गेणयाति समद्भावंमद्रूपतांयाति अत्रचसंशयोनास्ति स्मरणंज्ञानोपायोमद्भावापत्तिश्चफलमित्यर्थः ॥ ५ ॥ नकेवलंमांस्मरन्म द्भावंप्राप्नोतीतिनियमःकिंतर्हि यंयमिति । यंयंभावंदेवतांतरंवाऽन्यमपिवाअंतकालेस्मरन्देहंत्यजति तंतमेवस्मर्यमाणंभावंप्राप्नोति अंतकालेभावविशेषस्मरणेहे तुः सदेति । सर्वदातस्यभावोभावनानुचिंतनंतेनभावितोवासिताचित्तः ॥ ६ ॥

तस्मादिति । यस्मात्पूर्ववासनैवांतकालेस्मृतिहेतुः नहितदाविवशस्यस्मरणोद्यमःसंभवति तस्मात्सर्वदामामनुस्मरानुचिंतय संततस्मरणंचचित्तशुद्धिंविनानभवति अतोयुद्ध्यचयुद्ध्यस्व चित्तशुद्ध्यर्थंयुद्धादिकंस्वधर्मंचानुतिष्ठेत्यर्थः एवंमय्यर्पितंमनःसंकल्पात्मकंबुद्धिश्चव्यवसायात्मिकायेनत्वया सत्वंमामेवप्राप्स्यसि असंशयःसंशयोऽत्रनास्ति ॥७॥ संततस्मरणस्यचाभ्यासोंऽतरंगसाधनमितिदर्शयन्नाह अभ्यासेति । अभ्यासःसजातीयप्रत्ययप्रवाहः सएवयोगउपायस्तेनयुक्तेनैकाग्रेण अतएवनान्यंविषयंगंतुंशीलंयस्यतेनचेतसादिव्यंद्योतनात्मकंपरमंपुरुषंपरमेश्वरमनुचिंतयन्हेपार्थतमेवयातीति ॥ ८ ॥ पुनरप्यनुचिंतनायपुरुषंविशिनष्टि कविमि

तस्मात्सर्वेषुकालेषुमामनुस्मरयुद्ध्यच ॥ मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥ अभ्यासयोगयुक्तेनचेतसानान्यगा
मिना ॥ परमंपुरुषंदिव्यंयातिपार्थानुचींतयन् ॥ ८ ॥ कविंपुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः सर्वस्यधातारम
चिंत्यरूपमादित्यवर्णंतमसःपरस्तात् ॥ ९ ॥ प्रयाणकालेमनसाचलेनभक्त्यायुक्तोयोगबलेनचैव ॥ भ्रुवोर्मध्येप्राणमावेश्य
सम्यक्सतंपरंपुरुषमुपैतिदिव्यम् ॥ १० ॥

तिद्वाभ्याम् । कविंसर्वज्ञम् सर्वविद्यानिर्मातारं पुराणमनादिसिद्धम् अनुशासितारंनियंतारम् अणोःसूक्ष्मादप्यणीयांसमतिसूक्ष्मम् आकाशकालदिग्भ्योऽप्यतिसूक्ष्मतरम् सर्वस्यधातारंपोषकम् अपरिमितमहिमत्वादचिंत्यरूपम् मलीमसयोर्मनोबुद्ध्योरगोचरं आदित्यवत्स्वपरप्रकाशात्मकोवर्णःस्वरूपंयस्यतमतमसःप्रकृतेः परस्ताद्वर्तमानम् “वेदाहमेतंपुरुषंमहांतमादित्यवर्णंतमसःपरस्तात्”इतिश्रुतेः ॥९॥ सप्रपंचप्रकृतिंभित्त्वायस्तिष्ठति एवंभूतंपुरुषमंतकालेभक्तियुक्तोनिश्चलेनविक्षेपरहितेनमनसायोऽनुस्मरेत् मनोनैश्चल्येहेतुः—योगबलेनसम्यक्सुषुम्नामार्गेणभ्रुवोर्मध्येप्राणमावेश्येति सतंपरंपुरुषंपरात्मस्वरूपं दिव्यंद्योतनात्मकंप्राप्नोति॥१०॥

कवलादेभ्यासयोगादपिप्रणवाधारमभ्यासमंतरंगंविधित्सुःप्रतिजानीते यदक्षरमिति । यदक्षरंवेदांतज्ञावदंति "एतस्यवाक्षरस्यप्रशासनेगार्गिसूयाचंद्रमसौ विधृतौतिष्ठत"इतिश्रुतेः वीतोरागोयेभ्यस्तेवीतरागायतयःप्रयत्नवंतोयद्विशंति यच्चज्ञातुमिच्छंतोगुरुकुलेब्रह्मचर्यंचरंति तत्तेतुभ्यं पदंपद्यतेगम्यतेइतिपदंप्राप्यंसंग्रहेणसंक्षेपेणप्रवक्ष्ये तत्प्राप्त्युपायंकथयिष्यामीत्यर्थः ॥ ११ ॥ प्रतिज्ञातमुपायंसांगमाह सर्वेतिद्वाभ्याम् । सर्वाणींद्रियद्वाराणिसंयम्यप्रत्याहृत्यचक्षुरादिभिर्बाह्यविषयग्रहणमकुर्वन्नित्यर्थः मनश्चहृदिनिरुद्ध्यबाह्यविषयस्मरणमकुर्वन्नित्यर्थः मूर्ध्निभ्रुवोर्मध्येप्राणमाधाययोगस्यधारणांस्थैर्यमास्थितआश्रितवान्सन् ॥ १२ ॥

यदक्षरंवेदविदोवदंतिविशंतियद्यतयोवीतरागाः ॥ यदिच्छंतोब्रह्मचर्यंचरंतितत्तेपदंसंग्रहेणप्रवक्ष्ये ॥ ११ ॥
सर्वद्वाराणिसंयम्यमनोहृदिनिरुद्ध्यच ॥ मूर्ध्न्याधायात्मनःप्राणमास्थितोयोगधारणाम् ॥ १२ ॥ ओमित्येकाक्षरंब्रह्मव्याहरन्मामनुस्मरन् ॥ यःप्रयातित्यजन्देहंसयातिपरमांगतिम् ॥ १३ ॥ अनन्यचेताःसततंयोमांस्मरतिनित्यशः ॥ तस्याहंसुलभःपार्थनित्ययुक्तस्ययोगिनः ॥ १४ ॥

ओमिति । ओमित्येकंयदक्षरंतदेव ब्रह्मवाचकत्वाद्वाप्रतिमादिवद्ब्रह्मप्रतीकत्वाद्वाब्रह्मतद्व्याहरन्नुच्चारयन् तद्वाच्यंचमामनुस्मरन्नेवदेहंत्यजन्यःप्रकर्षेणयाति अर्चिरादिमार्गेण सपरमांश्रेष्ठांमद्गतिंयातिप्राप्नोति ॥ १३ ॥ एवंचांतकालेधारणयामत्प्राप्तिर्नित्याभ्यासवशातएवभवति नान्यस्येतिपूर्वोक्तमेवानुस्मारयाति अनन्येति । नास्त्यन्यस्मिंश्चेतोयस्यतथाभूतःसन् योमांसततंनिरंतरंनित्यशः प्रतिदिनंस्मरति तस्यनित्ययुक्तस्यसमाहितस्याहंसुखेनलभ्योऽस्मि नान्यस्य ॥ १४ ॥

यद्यप्येवंत्वंसुलभोऽसितत:किमतआह मामिति । उक्तलक्षणामहात्मानो मद्भक्तामांप्राप्यपुनर्दुःखाश्रयमनित्यंचजन्मनप्राप्नुवंति यतस्तेपरमांसम्यक्सिद्धिंमोक्षमेव प्राप्ताः पुनर्जन्मदुःखानांचालयंस्थानंतेमामुपेत्यनप्राप्नुवंतीतिवा ॥ १५ ॥ एतदेवसर्वेष्वपिलोकेषुपुनरावृत्तिंदर्शयान्निर्धारयति आब्रह्मेति । ब्रह्मणोभुवनंवास स्थानंब्रह्मलोकस्तमभिव्याप्य सर्वेलोकाः पुनरावर्तनशीलाः ब्रह्मलोकस्यापिविनाशित्वात्तत्प्राप्तानामनुत्पन्नज्ञानानामवश्यंभाविपुनर्जन्म यएवंक्रममुक्तिफलाभि रुपासनाभिर्ब्रह्मलोकंप्राप्तास्तेषामेवतत्रोत्पन्नज्ञानानांब्रह्मणासहमोक्षोनान्येषाम् तथाच 'ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे॥परस्यांतेकृतात्मानःप्रविशंतिपरंपदम्' पर स्यांतेब्रह्मणःपरमायुषोंऽते कृतात्मानोब्रह्मभावापादितमनोवृत्तयः कर्मद्वारेणयेषांब्रह्मलोकप्राप्तिस्तेषांनमोक्षइतिपरिनिष्ठितिः मामुपेत्यवर्तमानानांतु पुनर्जन्मना

मामुपेत्यपुनर्जन्मदुःखालयमशाश्वतम् ॥ नाप्नुवंतिमहात्मानःसंसिद्धिंपरमांगताः॥ १५ ॥
आब्रह्मभुवनाल्लोकाःपुनरावर्तिनोऽर्जुन ॥ मामुपेत्यतुकौन्तेयपुनर्जन्मनविद्यते ॥ १६ ॥
सहस्रयुगपर्यंतमहर्यद्ब्रह्मणोविदुः ॥ रात्रिंयुगसहस्रांतांतेऽहोरात्रविदोजनाः ॥ १७ ॥

स्त्येवेत्यर्थः ॥ १६ ॥ ननुच तपस्विनोदानशीलावीतरागास्तितिक्षवः त्रिलोक्याउपरिस्थानंलभंतेशोकवर्जितमित्यादिपुराणवाक्यैस्त्रिलोक्याःसकाशान्महर्लोका दीनामुत्कृष्टत्वंगम्यते विनाशित्वेचसर्वेषामवैशिष्ट्येकथमसौविशेषःस्यादित्याशंक्य बहुकल्पकालावस्थायित्वनिमित्तोऽसौविशेषइत्याशयेनस्वमानेनशतवर्षायु षोब्रह्मणोऽहन्यहनित्रिलोक्याउत्पत्तिर्निशिनिशिचलयोभवतीतिदर्शयिष्यन्ब्रह्मणोऽहोरात्रयोःप्रमाणमाह सहस्रेति । सहस्रंयुगानिपर्यंतोऽवसानंयस्यतद्ब्रह्मणोय दहस्तद्येविदुः युगसहस्रंअंतोयस्यास्तांरात्रिंच योगबलेनयेविदुस्तएवसर्वज्ञजनाअहोरात्रविदः येषांतुकेवलंचंद्रार्कगत्यैवज्ञानंतेतथाअहोरात्रविदोनभवंति अल्प

दर्शितत्वात् युगशब्देनात्रचतुर्युगमभिप्रेतम् ‘चतुर्युगसहस्रंतुब्रह्मणोदिनमुच्यत ’इतिविष्णुपुराणोक्तेः ब्रह्मणइतिचमहर्लोकादिवासिनामप्युपलक्षणार्थम् तत्रायंकाल गणनाप्रकारः—मनुष्याणांयद्वर्षंतद्देवानामहोरात्रं तादृशैःअहोरात्रैः पक्षमासादिकल्पनयाद्वादशभिर्वर्षसहस्रैश्चतुर्युगंभवति चतुर्युगसहस्रंचब्रह्मणोदिनम् तावत्परि माणैवरात्रिः तादृशैश्चाहोरात्रैःपक्षमासादिक्रमेणवर्षशतंब्रह्मणःपरमायुरिति ॥ १७ ॥ ततःकिमतआह अव्यक्तादिति । कार्यस्याव्यक्तंरूपंकारणात्मकंतस्मादव्यक्ता त्कारणरूपात् व्यज्यंतेअभिव्यज्यंतइतिव्यक्तयश्चराचराणिभूतानिप्रादुर्भवंति कदा अहरागमेब्रह्मणोदिनस्योपक्रमे तथारात्रेरागमेब्रह्मशयने तस्मिन्नेवाव्यक्तसंज्ञके

**अव्यक्ताद्व्यक्तयःसर्वाःप्रभवंत्यहरागमे ॥ रात्र्यागमेप्रलीयंतेतत्रैवाव्यक्तसंज्ञके ॥ १८ ॥ भूतग्रामःसएवायंभूत्वाभूत्वा प्रलीयते ॥ रात्र्यागमेऽवशःपार्थप्रभवत्यहरागमे ॥ १९ ॥ परस्तमात्तुभावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ॥ यःससर्वेषु भूतेषुनश्यत्सुनविनश्यति ॥ २० ॥**

कारणरूपेप्रलयंयांति यद्वा तेऽहोरात्रविदइत्येतन्नविधीयते किंतु तेप्रसिद्धाअहोरात्रविदोजनायद्ब्रह्मणोऽहर्विदुस्तस्याह्नआगमेअव्यक्ताद्व्यक्तयःप्रभवंति यांचरात्रिंवि दुस्तस्यारात्रेरागमेप्रलीयंतेइतिद्वयोरन्वयः ॥ १८ ॥ तत्रचकृतनाशाकृताभ्यागमशंकांवारयन्वैराग्यार्थंसृष्टिप्रलयप्रवाहस्याविच्छेदंदर्शयति भूतेति । भूतानां चराचरप्राणिनांग्रामःसमूहोयःप्रागासीत्सएवायमहरागमेभूत्वारात्रेरागमेप्रलीयते प्रलीयपुनरप्यहरागमेऽवशः कर्मादिपरतंत्रःप्रभवति नान्यइत्यर्थः ॥ १९ ॥ लोकानामनित्यत्वंप्रपंच्यपरमेश्वरस्वरूपस्यानित्यत्वंप्रपंचयति परइतिद्वाभ्याम् । तस्माच्चराचरकारणभूतादव्यक्तात्परः तस्यापिकारणभूतोयोऽन्यस्तद्विलक्षणोऽ

व्यक्तः चक्षुराद्यगोचरोभावः सनातनःअनादिः सतुसर्वेषुकार्यकारणलक्षणेषुभूतेषुनश्यत्स्वपि नविनश्यति॥ २०॥अविनाशेप्रमाणंदर्शयन्नाह अव्यक्तइति । योभा
वः अव्यक्तोऽतींद्रियोऽक्षरःप्रवेशनाशशून्यइति तथाऽक्षरात्संभवतीहविश्वमित्यादिश्रुतिष्वक्षरइत्युक्तः तंपरमांगतिंगम्यंपुरुषार्थमाहुः " पुरुषान्नपरंकिंचित्साकाष्ठा
सापरागतिः"इत्यादिश्रुतयः परमगतित्वमेवाह यंप्राप्यपुनर्ननिवर्ततइति । तच्चममैवधामस्वरूपं ममैवेत्युपचारेषष्ठी राहोःशिरइतिवत् अतोऽहमेवपरमागतिरित्य
र्थः॥ २१॥ तत्प्राप्तौचभक्तिरंतरंगोपायइत्युक्तमेवाह पुरुषइति । सचाहंपरःपुरुषःअन्यया नविद्यतेअनन्यःशरणत्वेनयस्यास्तया एकांतभक्त्यैवलभ्योनान्यथा परत्व
मेवाह । यस्यकारणभूतस्यांतर्मध्येभूतानि स्थितानियेनचकारणभूतेनसर्वमिदंजगत्ततंव्याप्तम् ॥ २२ ॥ तदेवंपरमेश्वरोपासकाःतत्पदंप्राप्यननिवर्तंते अन्येत्वावर्तं

**अव्यक्तोऽक्षरइत्युक्तस्तमाहुःपरमांगतिम् ॥ यंप्राप्यननिवर्तंतेतद्धामपरमंमम ॥ २१ ॥ पुरुषःसपरःपार्थभक्त्यालभ्यस्त्वनन्यया ॥ य**
**स्यांतस्थानिभूतानियेनसर्वमिदंततम् ॥ २२ ॥ यत्रकालेत्वनावृत्तिमावृत्तिंचैवयोगिनः ॥ प्रयातायांतितंकालंवक्ष्यामिभरतर्षभ ॥ २३ ॥**

तइत्युक्तम् तत्रकेनमार्गेणगतानावर्तंतेकेनवागताश्चावर्तंतइत्यपेक्षायामाह यत्रेति । यत्रयस्मिन्कालेप्रयातायोगिनोऽनावृत्तिंयांतियस्मिंश्चकालेप्रयाताआवृत्तिंयांति
तंकालंवक्ष्यामीत्यन्वयः अत्रचरश्म्यनुसारी अतश्चायनेऽपिदक्षिणइतिसूचितन्यायेनोत्तरायणादिकालविशेषस्मरणस्याविवक्षितत्वात् कालशब्देनकालाभिमानि
नीभिरातिवाहिकीभिर्देवताभिःप्राप्योमार्गउपलक्ष्यते अतोऽयमर्थः—यस्मिन्कालाभिमानिदेवतोपलक्षितेमार्गेप्रयातायोगिनउपासकाःकर्मिणश्चयथाक्रममनावृत्तिमा
वृत्तिंचयांतितंकालाभिमानिदेवतोपलक्षितं मार्गंकथयिष्यामीति अग्निर्ज्योतिषोः कालाभिमानीत्वाभावेऽपिभूयसामहरादिशब्दोक्तानांकालाभिमानित्वात्तत्साहच

र्यादाम्रवनमित्यादिवत्कालशब्देनोपलक्षणमविरुद्धम् ॥२३॥ तत्रानावृत्तिमार्गमाह अग्निरिति। अग्निज्योतिःशब्दाभ्यां "तेऽर्चिषमभिसंभवंति" इतिश्रुत्युक्तार्चिर भिमानिनीदेवतोपलक्ष्यते अहरितिदिवसाभिमानिनी शुक्लइतिशुक्लपक्षाभिमानिनीउत्तरायणरूपाःषण्मासाइत्युत्तरायणाभिमानिनी एतच्चान्यासामपिश्रुत्युक्तानां संवत्सरदेवलोकादिदेवतानामुपलक्षणार्थं एवंभूतोयोमार्गःतत्रप्रयातागताःभगवदुपासकाजनाःब्रह्मप्राप्नुवंति यतस्तेब्रह्मविदः तथाचश्रुतिः—"तेऽर्चिषमभिसंभ वंति अर्चिषोऽहरहआपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्यएतिमासेभ्योदेवलोकमिति नहिसद्योमुक्तिभाजांसम्यग्दर्शननिष्ठानांगतिर्वाक्वचिदस्ति नतस्यप्राणाउत्क्रामंति" इतिश्रुतेः ॥ २४ ॥ आवृत्तिमार्गमाह धूमइति धूमाभिमानिनीदेवता रात्र्यादिशब्दैश्चपूर्ववदेवरात्रिकृष्णपक्षदक्षिणायनरूपषण्मासाभिमा

अग्निर्ज्योतिरहःशुक्लःषण्मासाउत्तरायणम् ॥ तत्रप्रयातागच्छंतिब्रह्मब्रह्मविदोजनाः ॥ २४ ॥
धूमोरात्रिस्तथाकृष्णाःषण्मासादक्षिणायनम् ॥ तत्रचांद्रमसंज्योतिर्योगीप्राप्यनिवर्तते ॥ २५ ॥

निन्यस्तिस्रोदेवताउपलक्ष्यंते एताभिर्देवताभिरुपलक्षितोयोमार्गस्तत्रप्रयातःकर्मयोगीचांद्रमसंज्योतिरतदुपलक्षितंस्वर्गलोकंप्राप्यतत्रेष्टापूर्तकर्मफलंभुक्त्वापुनराव र्तते अत्रापिश्रुतिः—"तेधूममभिसंभवंतिधूमाद्रात्रिरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणादित्यएतिमासेभ्यःपितृलोकंपितृलोकाच्चंद्रंतेचंद्रंप्राप्यान्नं भवंति" इत्यादिः तदेवंनिवृत्तिकर्मसहितोपासनयाक्रममुक्तिःकाम्यकर्मभिश्चस्वर्गभोगानंतरमावृत्तिः निषिद्धकर्मभिस्तुनरकभोगानंतरमावृत्तिः क्षुद्रकर्मणांजंतूनां त्वत्रैवपुनःपुनर्जन्मेतिद्रष्टव्यम् ॥ २५ ॥

उक्तौमार्गावुपसंहरति शुक्लेति । शुक्लाऽर्चिरादिगतिःप्रकाशमयत्वात्, कृष्णाधूमादिगतिस्तमोमयत्वात् एतेगतीमार्गौज्ञानकर्माधिकारिणोजगतःशाश्वतेअनादी संमते संसारस्यानादित्वात्, तयोरेकयाशुक्लयानिवृत्तिंमोक्षंयाति अन्ययाकृष्णयातुपुनरावर्तते ॥ २६ ॥ मार्गज्ञानफलंदर्शयन्भक्तियोगमुपसंहरति नैतइति । एतेसृतीमार्गौहेपार्थमोक्षसंसारप्रापकौजानन्कश्चिदपियोगीनमुह्यति सुखबुद्ध्यास्वर्गादिफलंनकामयते किंतुपरमेश्वरनिष्ठएवभवतीत्यर्थः स्पष्टमन्यत् ॥ २७ ॥ अध्यायार्थमष्टप्रश्नार्थनिर्णयंसफलमुपसंहरति वेदेष्विति । वेदेष्वध्ययनादिभिः यज्ञेष्वनुष्ठानादिभिः तपःसुकायशोषणादिभिः दानेषुसत्पात्रार्पणादिभिः यत्पुण्य

शुक्लकृष्णेगतीह्येतेजगतःशाश्वतेमते ॥ एकयायात्यनावृत्तिमन्ययावर्ततेपुनः ॥ २६ ॥ नैतेसृतीपार्थजानन्योगीमुह्यति कश्चन ॥ तस्मात्सर्वेषुकालेषुयोगयुक्तोभवार्जुन ॥ २७ ॥ वेदेषुयज्ञेषुतपःसुचैवदानेषुयत्पुण्यफलंप्रदिष्टम् ॥ अत्येतितत्सर्व मिदंविदित्वायोगीपरंस्थानमुपैतिचाद्यम् ॥ २८ ॥ ॥ इतिश्रीमद्भ०महापुरुषयोगोनामाष्टमोऽध्यायः ॥ ८ ॥ ॥
श्रीभगवानुवाच ॥ ॥ इदंतुतेगुह्यतमंप्रवक्ष्याम्यनसूयवे ॥ ज्ञानंविज्ञानसहितंयज्ज्ञात्वामोक्ष्यसेऽशुभात् ॥ १ ॥

फलमुपादिष्टंशास्त्रेषुतत्सर्वमत्येति ततोऽपिश्रेष्ठंयोगैश्वर्यंप्राप्नोति किंकृत्वा इदमष्टप्रश्नार्थनिर्णयेनोक्तंतत्त्वंविदित्वाततश्चयोगीज्ञानीभूत्वापरमुत्कृष्टमाद्यंजगन्मूलभूत स्थानंविष्णोःपरमंपदंप्राप्नोति ॥ २८ ॥ 'अष्टमेऽष्टविशिष्टेष्टसंपृष्टार्थाष्टनिर्णयैः ॥ अक्लिष्टमष्टधाप्राप्तिःस्पष्टिताष्टमवर्त्मना ॥ १ ॥' इतिसुबोधिन्यांटीकायामष्टमो ऽध्यायः ॥ ८ ॥ ॥ 'परेशःप्राप्यतेशुद्धभक्त्येतिस्थितमष्टमे ॥ नवमेतुतदैश्वर्यमत्याश्चर्यंप्रपंच्यते ॥ १ ॥ ' एवंतावत्सप्तमाष्टमयोःस्वीयंपारमेश्वरंतत्त्वंभक्त्यैव

सुलभंनान्यथेत्युक्त्वेदानीमचिंत्यंस्वकीयमैश्वर्यं भक्तेश्वासाधारणप्रभावंप्रपंचयिष्यन् श्रीभगवानुवाच इदंत्विति । विशेषेणज्ञायतेऽनेनेतिविज्ञानंउपासनंतत्साहितं ज्ञानमीश्वरविषयमिदं अनसूयवेपुनःपुनःस्वमाहात्म्यमेवोपदिशतीत्येवंपरमकारुणिकेमयिदोषदृष्टिरहितायतेतुभ्यंवक्ष्यामि तुशब्दोवैशिष्ट्ये तदेवाह गुह्यतममि त्यादिना । गुह्यधर्मज्ञानंततोदेहादिव्यतिरिक्तात्मज्ञानंगुह्यतरं ततोऽपिपरमात्मज्ञानंअतिरहस्यत्वाद्गुह्यतमम् यज्ज्ञात्वाशुभात्संसारान्मोक्ष्यसेसद्यएवमुक्तोभवि ष्यसि ॥१॥ किंच राजविद्येति । इदंज्ञानंराजविद्याविद्यानांराजेतिराजविद्याचगुह्यानांराजेतिराजगुह्यं विद्यासुगोप्येषुचरहस्यंअतिश्रेष्ठमित्यर्थः राजदंतादित्वा दुपसर्जनस्यपरत्वं राज्ञांविद्याराज्ञांगुह्यमितिवा उत्तमंपवित्रंअत्यंतपावनमिदं ज्ञानिनांप्रत्यक्षावगमंचप्रत्यक्षःस्पष्टोऽवगमोऽवबोधोयस्यतत्प्रत्यक्षावगमं दृष्टफल

राजविद्याराजगुह्यंपवित्रमिदमुत्तमम् ॥ प्रत्यक्षावगमंधर्म्यंसुसुखंकर्तुमव्ययम् ॥ २ ॥ अश्रद्दधानाःपुरुषाधर्मस्यास्यपरंतप ॥ अप्रा प्यमांनिवर्तंतेमृत्युसंसारवर्त्मनि ॥ ३ ॥ मयाततमिदंसर्वंजगदव्यक्तमूर्तिना ॥ मत्स्थानिसर्वभूतानिनचाहंतेष्ववस्थितः ॥ ४ ॥

मित्यर्थः धर्म्यंचधर्मादनपेतं सर्वधर्मफलत्वात् कर्तुंसुसुखंच सुखेनकर्तुंशक्यमित्यर्थः अव्ययं अक्षयफलत्वात् ॥ २ ॥ नन्वेवमस्यातिसुकरत्वेकेनामसंसारिणः स्युस्तत्राह अश्रद्दधानाइति। अस्यभक्तिलक्षणज्ञानसहितस्यधर्मस्येति कर्मणिषष्ठ्यौ इमंधर्ममश्रद्दधानाआस्तिक्येनास्वीकुर्वंतः उपायांतरेणमत्प्राप्तयेकृतप्रयत्नाअ पिमामप्राप्यमृत्युयुक्तेसंसारवर्त्मनिनिवर्तंते मृत्युव्याप्तेसंसारमार्गेपरिभ्रमंतीत्यर्थः ॥ ३ ॥ तदेवंवक्तव्यतयाप्रस्तुतस्यज्ञानस्यस्तुत्याश्रोतारमभिमुखीकृत्यतदेवज्ञा नंकथयति मयेतिद्वाभ्याम् । अव्यक्ताअतींद्रियामूर्तिःस्वरूपंयस्यतादृशेनमयाकारणभूतेनसर्वमिदंजगत्ततंव्याप्तम् "तत्सृष्ट्वातदेवानुप्राविशत्" इतिश्रुतेः अतएव

कारणभूतेमयितिष्ठंतीतिमत्स्थानिसर्वाणिचराचराणिभूतानि एवमपिघठादिषुस्वकार्येषुमृत्तिकेवतेषुभूतेषुनाहमवस्थितआकाशवदसंगत्वात् ॥ ४ ॥ किंच
नचेति। नचमयिस्थितानिभूतानिअसंगत्वादेवमम ननुतर्हिव्यापकत्वामाश्रयत्वंचपूर्वोक्तंविरुद्धमित्याशंक्याह पश्येति। मेऐश्वरमसाधारणंयोगंयुक्तिअघटितघटना
चातुर्यंपश्यमदीययोगमायावैभवस्यावितर्क्यत्वान्नविरुद्धंकिंचिदित्यर्थः अन्यदप्याश्चर्यंपश्येत्याह भूतेति। भूतानिबिभर्तिधारयतीतिभूतभृत् भूतानिभावयातिपालय
तीतिभूतभावनः एवंभूतोऽपिममात्मापरंस्वरूपंभूतस्थोनभवति अयंभावः–यथाजीवोदेहंबिभ्रत्पालयंश्चाहंकारेणतत्संश्लिष्टस्तिष्ठाति एवमहंभूतानिधारयन्पाल
यन्नपिनतेषुतिष्ठामि निरहंकारत्वादिति ॥ ५ ॥ असंश्लिष्टयोरप्याधाराधेयभावंदृष्टांतेनाह यथेति । अवकाशंविनाऽवस्थानानुपपत्तेर्नित्यमाकाशस्थितोवायुः

**नचमत्स्थानिभूतानिपश्यमेयोगमैश्वरम् ॥ भूतभृन्नचभूतस्थोममात्माभूतभावनः ॥ ५ ॥ यथाकाशस्थितोनित्यंवायुःसर्वत्रगोमहा
न् ॥ तथासर्वाणिभूतानिमत्स्थानीत्युपधारय ॥ ६ ॥ सर्वभूतानिकौंतेयप्रकृतिंयांतिमामिकाम् ॥ कल्पक्षयेपुनस्तानिकल्पादौवि
सृजाम्यहम् ॥ ७ ॥ प्रकृतिंस्वामवष्टभ्यविसृजामिपुनःपुनः ॥ भूतग्राममिमंकृत्स्नमवशंप्रकृतेर्वशात् ॥ ८ ॥**

सर्वत्रगोऽपिमहानपिनाकाशेनसंश्लिष्यते निरवयवत्वेनसंश्लेषायोगात् तथासर्वाणिभूतानिमयिस्थितानीतिजानीहि ॥ ६ ॥ तदेवमसंगस्ययोगमाययास्थितिहे
तुत्वमुक्तम् तयैवसृष्टिप्रलयहेतुत्वंचाह सर्वेति । कल्पक्षयेप्रलयकालेसर्वाणिभूतानिमदीयांप्रकृतिंयांतित्रिगुणात्मिकायांमायांलीयंते पुनःकल्पादौसृष्टिकालेता
निविसृजामिविशेषेणसृजामि ॥७॥ नन्वसंगोनिर्विकारश्चत्वंकथंसृजसीत्यपेक्षायामाह प्रकृतिमितिद्वाभ्याम् । स्वांस्वाधीनांप्रकृतिमवष्टभ्याधिष्ठायप्रलयेलीनंसंतंच
तुर्विधमिमंसर्वंभूतग्रामंकर्मादिपरवशंपुनःपुनर्विविधंसृजामि विशेषेणसृजामीतिवा कथं प्रकृतेर्वशात् प्राचीनकर्मनिमित्ततत्स्वभावबलात् ॥ ८ ॥

ननु एवंनानाविधानिकर्माणिकुर्वतस्तवजीववद्वंधःकथंनस्यादित्याशंक्याह नचेति । तानिसृष्ट्यादीनिकर्माणिमांननिबध्नंति कर्मासक्तिर्हिबंधहेतुः साचाप्तकाम त्वान्ममनास्ति अतउदासीनवद्वर्तमानस्यमेबंधनंनापादयंति उदासीनत्वेकर्तृत्वानुपपत्तेरुदासीनवत्स्थितमित्युक्तम् ॥ ९ ॥ तदेवोपपादयति मयेति । मयाऽध्य क्षेणाधिष्ठात्रानिमित्तभूतेनप्रकृतिःसचराचरंविश्वंसूयते जनयति अनेनमदधिष्ठानेनहेतुनाइदंजगत् विपरिवर्तते पुनःपुनर्जायतेसन्निधिमात्रेणाधिष्ठातृत्वात्कर्तृत्व मुदासीनत्वंचाविरुद्धमितिभावः ॥ १० ॥ नन्वेवंभूतंपरमेश्वरंत्वांकिमितिकेचिन्नाद्रियंतेतत्राह अवजानंतीतिद्वाभ्याम् । सर्वभूतमहेश्वररूपंमदीयंपरंभावंतत्त्वम

नचमांतानिकर्माणिनिबध्नंतिधनंजय ॥ उदासीनवदासीनमसक्तंतेषुकर्मसु ॥ ९ ॥ मयाऽध्यक्षेणप्रकृतिःसूयतेसचराच रम् ॥ हेतुनाऽनेनकौंतेयजगद्विपरिवर्तते ॥ १० ॥ अवजानंतिमांमूढामानुषींतनुमाश्रितम् ॥ परंभावमजानंतोममभूतम हेश्वरम् ॥ ११ ॥ मोघाशामोघकर्माणोमोघज्ञानाविचेतसः ॥ राक्षसीमासुरींचैवप्रकृतिंमोहिनींश्रिताः ॥ १२ ॥

जानंतोमूढामूर्खाःमामवजानन्त्यवमन्यंते अवज्ञानेहेतुः—शुद्धसत्वमयीमपितनुंभक्तेच्छावशान्मनुष्याकारामाश्रितवंतम् ॥ ११ ॥ किंच मोघाशाइति । मत्तोऽ न्यदेवतांतरंक्षिप्रंफलंदास्यतीत्येवंभूतामोघानिष्फलैवाशायेषांते अतएवमद्विमुखत्वान्मोघानिव्यर्थानिकर्माणियेषांते मोघमेवनानाकुतर्काश्रितंशास्त्रज्ञानंयेषांते अतएवाविचेतसोविक्षिप्तचित्ताः सर्वत्रहेतुः—राक्षसींतामसींहिंसादिप्रचुराम् आसुरींचराजसींकामदर्पादिबहुलाम् मोहिनींबुद्धिभ्रंशकरींप्रकृतिंस्वभावंश्रिताआ श्रिताःसंतोमामवजानंतीतिपूर्वेणान्वयः ॥ १२ ॥

केतर्हि त्वामाराधयंतीत्यतआह महात्मानस्त्विति । महात्मानः कामाद्यनभिभूतचित्ताः यतः अभयंसत्वसंशुद्धिरित्यादिनावक्ष्यमाणांदैवींप्रकृतिंस्वभावमाश्रिताः
अतएवमद्व्यतिरेकेणनास्त्यन्यस्मिन्मनोयेषांते भूतादिंजगत्कारणमव्ययंनित्यंचमांज्ञात्वाभजंति ॥ १३ ॥ तेषांभजनप्रकारमाह सततमितिद्वाभ्याम् । सततंसर्वदा
स्तोत्रमंत्रादिभिःकीर्तयंतःकेचिन्मामुपासतेसेवंते दृढानिव्रतानिनियमायेषांतादृशाः संतोयतंतश्चेश्वरपूजादिषु इंद्रियोपसंहारादिषुचप्रयत्नंकुर्वंतश्च केचिद्भक्त्या
नमस्यंतःप्रणमंतश्चान्येनित्ययुक्ताअनवरतमवहिताः सर्वेसेवंते भक्त्येतिनित्ययुक्ताइतिचकीर्तनादिष्वपिद्रष्टव्यम् ॥ १४ ॥ किंच ज्ञानेति । वासुदेवःसर्वमित्ये

महात्मानस्तुमांपार्थदैवींप्रकृतिमाश्रिताः ॥ भजंत्यनन्यमनसोज्ञात्वाभूतादिमव्ययम् ॥ १३ ॥ सततंकीर्तयंतोमांयतंतश्चदृढव्रताः ॥
नमस्यंतश्चमाभक्त्यानित्ययुक्ताउपासते ॥ १४ ॥ ज्ञानयज्ञेनचाप्यन्येयजंतोमामुपासते ॥ एकत्वेनपृथक्त्वेनबहुधाविश्वतोमुखम् ॥
॥ १५ ॥ अहंक्रतुरहंयज्ञःस्वधाऽहमहमौषधम् ॥ मंत्रोऽहमहमेवाज्यमहमग्निरहंहुतम् ॥ १६ ॥ पिताऽहमस्यजगतोमाताधातापिता
महः ॥ वेद्यंपवित्रमोंकारऋक्सामयजुरेवच ॥ १७ ॥

वंसर्वात्मत्वदर्शनंज्ञानंतदेवयज्ञस्तेनज्ञानयज्ञेनमांयजंतःपूजयंतोऽन्येऽप्युपासते तत्रापिकेचिदेकत्वेनएकमेवपरंब्रह्मेतिपरमार्थदर्शनरूपाभेदभावनया केचित्पृ
थक्त्वेनदासोऽहमितिपृथग्भावनया केचित्तुविश्वतोमुखंसर्वात्मकंमांबहुधाब्रह्मरुद्रादिरूपेणोपासते ॥ १५ ॥ सर्वात्मतांप्रपंचयति अहमितिचतुर्भिः । क्रतुःश्रौतोऽ
ग्निष्टोमादिः यज्ञस्तुस्मार्तःपंचयज्ञादिः स्वधापित्रर्थेश्राद्धादिः औषधमोषधिप्रभवमन्नंभेषजंवा मंत्रोयाज्यापुरोनुवाक्यादिः आज्यंहोमादिसाधनम् अग्निराहव
नीयादिः हुतंहोमः एतत्सर्वमहमेव ॥ १६ ॥ किंच पितेति । धाताकर्मफलविधाता वेद्यंज्ञेयंवस्तुपवित्रं शोधकंप्रायश्चित्तात्मकंवा ओंकारःप्रणवः ऋग्वेदादयो

१२

वेदाश्चअहमेव स्पष्टमन्यत् ॥ १७ ॥ किंच गतिरिति । गम्यतइतिगतिःफलम् भर्तापोषणकर्ता प्रभुःनियंता साक्षीशुभाशुभद्रष्टा निवासःभोगस्थानम् शरणं रक्षकः सुहृद्धितकर्ता प्रकर्षेणभवत्यनेनेतिप्रभवःस्रष्टा प्रलीयतेऽनेनेतिप्रलयःसंहर्ता तिष्ठंत्यस्मिन्निितिनिधानमाधारः निधीयतेऽस्मिन्नितिनिधानंलयस्थानम् बीजं कारणम् तथाप्यव्ययमविनाशि नतुव्रीह्यादिबीजवन्नश्वरमित्यर्थः ॥ १८ ॥ किंच तपामीति । आदित्यात्मनास्थित्वान्निदाघसमयेतपामि जगतस्तापंकरोमि वृष्टिसमयेचवर्षमुत्सृजामि विमुंचामि कदाचित्तुवर्षनिगृह्णामिआकर्षामि अमृतंजीवनं मृत्युश्चनाशः सत्स्थूलंदृश्यम् असच्चसूक्ष्ममदृश्यम् एतत्सर्वमहमेवेतिमत्वामामेवबहुधाउपासतइतिपूर्वेणैवान्वयः ॥ १९ ॥ तदेवमवजानंतिमांमूढाइत्यादिश्लोकद्वयेनक्षिप्रफलाशयादेवतांतरंभजंतोमांनाद्रियंतइत्यभक्तादर्शिताः महात्मान

**गतिर्भर्ताप्रभुः साक्षीनिवासःशरणंसुहृत्।।प्रभवःप्रलयःस्थानंनिधानंबीजमव्ययम् ॥ १८ ॥ तपाम्यहमहंवर्षंनिगृह्णाम्युत्सृजामिच ॥ अमृतंचैवमृत्युश्चसदसच्चाहमर्जुन।। १९ ।। त्रैविद्यामांसोमपाःपूतपापायज्ञैरिष्ट्वास्वर्गतिंप्रार्थयंते।।तेपुण्यमासाद्यसुरेंद्रलोकमश्नंतिदिव्यान्दिविदेवभोगान्२०।।**

स्तुमांपार्थेत्यादिनाचभक्ताउक्ताः तत्रैकत्वेनपृथक्त्वेनवापरमेश्वरंश्रीवासुदेवंयेनभजंति तेषांजन्ममृत्युप्रवाहोदुर्वारइत्याह त्रैविद्यामामितिद्वाभ्यां । ऋग्यजुःसामलक्षणास्तिस्रोविद्यायेषांतेत्रिविद्याः त्रिविद्याएवत्रैविद्याः स्वार्थेताद्धितः तिस्रोविद्याअधीयंतेजानंतीतिवात्रैविद्याःवेदत्रयोक्तकर्मतत्पराइत्यर्थः वेदत्रयविहितैर्यज्ञैर्मामिष्ट्वाममैवरूपंदेवतांतरमित्यजानंतोऽपिवस्तुतइंद्रादिरूपेणमामेवेष्ट्वासंपूज्य यज्ञशेषंसोमंपिबंतीतिसोमपाः तेनैवपूतपापाःशोधितकल्मषाः संतः स्वर्गतिंस्वर्गप्रतिगतिंयेप्रार्थयंतेतेपुण्यफलरूपंसुरेंद्रस्यलोकंस्वर्गमासाद्यप्राप्यदिविस्वर्गेदिव्यानुत्तमानदेवानांभोगानश्नंति भुंजते ॥ २० ॥

ततश्च तेतंभुक्त्वेति । तेस्वर्गकामास्तंप्रार्थितंविपुलंस्वर्गलोकंतत्सुखंभुक्त्वाभोगप्रापकेपुण्येक्षीणेसतिमर्त्यलोकंविशंति पुनरप्येवमेववेदत्रय्याविहितंधर्ममनुसृताः
कामकामाः भोगान्कामयमानाः गतागतंयातायातंलभंते ॥ २१ ॥ मद्भक्तास्तुमत्प्रसादेनकृतार्थाभवंतीत्याह अनन्याइति । अनन्याः नास्तिमद्व्यतिरेकेणान्य
त्काम्यंभजनीयंदेवतांतरंयेषांतथाभूतायेजनाः मांचिंतयंतःसेवंतेतेषांनित्याभियुक्तानांसर्वदामदेकनिष्ठानांयोगंधनादिलाभंक्षेमंचतत्पालनंमोक्षंवातैरप्रार्थितमप्यहमे
ववहामिप्रापयामि ॥ २२ ॥ ननुचत्वद्व्यतिरेकेणवस्तुतोदेवतांतरस्याभावादिंद्रादिसेविनोऽपित्वद्भक्ताएवेतिकथंतेगतागतंलभेरंस्तत्राह येऽपीति । श्रद्धयोपेताभ

तेतंभुक्त्वास्वर्गलोकंविशालंक्षीणेपुण्येमर्त्यलोकंविशंति ॥ एवंत्रयीधर्ममनुप्रपन्नागतागतंकामकामालभंते ॥ २१ ॥ अनन्याश्चिंतयंतो
मांयेजनाःपर्युपासते ॥ तेषांनित्याभियुक्तानांयोगक्षेमंवहाम्यहम् ॥ २२ ॥ येऽप्यन्यदेवताभक्तायजंतेश्रद्धयान्विताः ॥ तेऽपिमामेवकौं
तेययजंत्यविधिपूर्वकम् ॥ २३ ॥ अहंहिसर्वयज्ञानांभोक्ताचप्रभुरेवच ॥ नतुमामभिजानंतितत्त्वेनातश्च्यवंतिते ॥ २४ ॥ यांतिदेव
व्रतादेवान्पितॄन्यांतिपितृव्रताः ॥ भूतानियान्तिभूतेज्यायान्तिमद्याजिनोऽपिमाम् ॥ २५ ॥

क्ताःसंतोयेऽपिजनाःयज्ञेनान्यदेवताइंद्रादिरूपायजंते तेऽपिमामेवयजंतीतिसत्यम् किंतु अविधिपूर्वकंमोक्षप्रापकंविधिंविनायजंति अस्ततेपुनरावर्तंते ॥ २३ ॥
एतदेवविवृणोति अहंहीति । सर्वेषांयज्ञानांतत्तद्देवतारूपेणाहमेवभोक्ता प्रभुश्चस्वामी फलदातापिचाहमेवेत्यर्थः एवंभूतंमांतेतत्त्वेनयथावन्नाभिजानंतिअतश्च्य
वंतिप्रच्यवंतेपुनरावर्तंते येतुसर्वदेवतासुमामेवांतर्यामिणंपश्यंतोयजंतितेतुनावर्तंते ॥ २४ ॥ तदेवोपपादयति यांतीति । देवेषुइंद्रादिषुव्रतंनियमोयेषांतेअंतवतोदे
वान्यांतिअतःपुनरावर्तंते पितृषुव्रतंयेषांश्राद्धादिक्रियापराणांतेपितॄन्यांतिभूतेषुविनायकमातृकादिषुइज्यापूजायेषांतेभूतानियांति मांयष्टुंशीलंयेषांतेमद्याजिनस्ते

तुमामक्षयंपरमानंदरूपंनारायणंयाति ॥ २५ ॥ तदेवंस्वभक्तानामक्षयफलत्वमुक्तंअनायासत्वंस्वभक्तेर्दर्शयति पत्रमिति । पत्रपुष्पादिमात्रमपिमह्यंभक्त्याप्रीत्या यःप्रयच्छति तस्यप्रयतात्मनःशुद्धचित्तस्यनिष्कामभक्तस्यतत्पत्रपुष्पादिकंतेनभक्त्याउपहृतंसमर्पितमहमश्नामिप्रीत्यागृह्णामि नहिमहाविभूतिपतेःपरमेश्वरस्यमक्षुद्रदेवतानामिवबहुवित्तसाध्ययागादिभिःपरितोषःस्यात् किंतु भक्तिमात्रेण अतोभक्तेनसमर्पितंयत्किंचित्पत्रादिमात्रमपितदनुग्रहार्थमेवाश्नामीतिभावः॥ २६॥ नचपत्रपुष्पादिकमपियज्ञार्थंपशुसोमादिद्रव्यवन्मदर्थमेवोद्यमैरापाद्यसमर्पणीयम् किंतर्हियदिति । स्वभावतोवाशास्त्रतोवायत्किंचित्कर्मकरोषि तथायदश्नासि यज्जुहोषि यद्ददासि यत्तपस्यासि तपःकरोषि तत्सर्वंमय्यर्पितंयथाभवत्येवंकुरुष्व ॥२७॥ एवंचयत्फलंप्राप्स्यसितच्छृणु शुभेति । एवंकुर्वन्कर्मबंधनैःकर्मनिमित्तैरिष्टा

पत्रंपुष्पंफलंतोयंयोमेभक्त्याप्रयच्छति ॥ तदहंभक्त्युपहृतमश्नामिप्रयतात्मनः ॥ २६ ॥ यत्करोषियदश्नासियज्जुहोषिददासियत् ॥ यत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणम् ॥ २७ ॥ शुभाशुभफलैरेवंमोक्ष्यसेकर्मबंधनैः ॥ संन्यासयोगयुक्तात्माविमुक्तोमामुपैष्यसि ॥ २८ ॥ समोऽहंसर्वभूतेषुनमेद्वेष्योऽस्तिनप्रियः ॥ येभजंतितुमांभक्त्यामयितेतेषुचाप्यहम् ॥ २९ ॥

निष्टैःफलैर्मुक्तोभविष्यासि कर्मणांमयिसमर्पितत्वेनतवतत्फलसंबंधानुपपत्तेः तैश्चविमुक्तःसन् संन्यासयोगयुक्तात्मासंन्यासःकर्मणांमदर्पणंसएवयोगस्तेनयुक्तः आत्माचित्तंयस्यतथाभूतस्त्वं मांप्राप्स्यासि ॥ २८ ॥ यदिभक्तेभ्यएवमोक्षंददासि नाभक्तेभ्यश्चतर्हितवापिकिंरागद्वेषादिकृतंवैषम्यमस्तिनेत्याह समइति । समोऽहंसर्वेष्वपिभूतेषुअतोमेममप्रियश्चद्वेष्यश्चनास्त्येव एवंसत्यपियेमांभजंतितेभक्तामयिवर्तंते अहमपितेषुअनुग्राहकतयावर्ते अयंभावः—यथाऽग्नेः स्वसेवकेष्वेवतमःशीतादिदुःखमपाकुर्वतोऽपिनवैषम्यं यथावाकल्पवृक्षस्य तथैवभक्तपक्षपातिनोऽपिममनवैषम्यंकिंतुमद्भक्तेरेवंमहिमेति ॥ २९ ॥

अपिच मद्भक्तेरवितर्क्यःप्रभावइतिदर्शयन्नाह अपिचेदिति। अत्यंतंदुराचारोऽपियद्यप्यपृथक्त्वेनपृथक्देवताअपिवासुदेवएवेतिबुद्ध्यानरोदेवतांतरभक्तिमकुर्वन्मा मेवश्रीनारायणंभजतेतर्हिसाधुःश्रेष्ठएवसमंतव्यः यतोऽसौसम्यग्व्यवसितः परमेश्वरभजनेनैवकृतार्थोभविष्यामीतिशोभनमध्यवसायंकृतवान् ॥ ३० ॥ ननु कथंसमीचीनाध्यवसायमात्रेणसाधुर्मंतव्यस्तत्राह क्षिप्रमिति। दुराचारोऽपिमांभजन्शीघ्रंधर्मचित्तोभवति ततश्चशश्वच्छांतिंशाश्वतीमुपशांतिंचित्तोपप्लवोपरमरूपां परमेश्वरनिष्ठांनितरांगच्छतिप्राप्नोति कुतर्ककर्कशवादिनोनैतन्मन्येरन्नितिशंकाव्याकुलचित्तमर्जुनंप्रोत्साहयति हेकौंतेय! पटहकाहलादिमहाघोषपूर्वकंविवदमाना

अपिचेत्सुदुराचारोभजतेमामनन्यभाक् ॥ साधुरेवसमंतव्यःसम्यग्व्यवसितोहिसः ॥ ३० ॥
क्षिप्रंभवतिधर्मात्माशश्वच्छांतिंनिगच्छति ॥ कौंतेयप्रतिजानीहिनमेभक्तःप्रणश्यति ॥ ३१ ॥
मांहिपार्थव्यपाश्रित्ययेऽपिस्युःपापयोनयः ॥ स्त्रियोवैश्यास्तथाशूद्रास्तेपियांतिपरांगतिम् ॥ ३२ ॥

नांसभांगत्वाबाहुमुत्क्षिप्यनिःशंकंप्रतिजानीहि प्रतिज्ञांकुरु कथं मेपरमेश्वरस्यभक्तःसुदुराचारोऽपिनप्रणश्यति अपितुकृतार्थएवभवतीतिततश्चतेत्वत्प्रौढिविजृंभा द्विध्वंसितकुतर्कानिःसंशयंत्वामेवगुरुत्वेनआश्रयेरन् ॥ ३१ ॥ आचारभ्रष्टंमद्भक्तिःपवित्रीकरोतीतिंकिमत्रचित्रम् यतोमद्भक्तिर्दुष्कुलानप्यनधिकारिणोऽपिसं सारान्मोचयतीत्याह मांहीति। येऽपिपापयोनयःस्युः निकृष्टजन्मानोंऽत्यजादयोभवेयुः येऽपिवैश्याःकेवलंकृष्यादिनिरताःस्त्रियःशूद्रादयश्चाध्ययनादिरहिताः तेऽपि मांव्यपाश्रित्यसंसेव्यपरांगतिंयांति हिनिश्चितम् ॥ ३२ ॥

यदेवंतदासत्कुलाःसदाचाराश्चमद्भक्ताःपरांगतिंयांतीतिकिंवक्तव्यमित्याह किमिति । पुण्याःसुकृतिनोब्राह्मणाः तथाराजानश्चतेऋषयश्चक्षत्रियाः एवंभूताःपरांगतिंयांतीतिकिंवक्तव्यमित्यर्थः अतस्त्वमिमंराजर्षिरूपंलोकंदेहंप्राप्यलब्ध्वामांभजस्व किंच अनित्यध्रुवमसुखंसुखरहितमिमंमर्त्यलोकंप्राप्यानित्यत्वाद्विलंबमकुर्वन्असुखत्वाच्चसुखार्थोद्यमंहित्वामामेवभजस्वेत्यर्थः ॥ ३३ ॥ भजनप्रकारंदर्शयन्नुपसंहरति मन्मनाइति । मय्येवमनोयस्यसमन्मनास्त्वंभव तथैवममैवभक्तःमत्सेवकोभव मद्याजीमद्यजनशीलोभव मामेवचनमस्कुरु एवमेभिःप्रकारैर्मत्परायणःसन्नात्मानंमनोमयियुक्त्वासमाधायमामेवपरमानंदरूपमेष्यसि प्राप्स्यसि ॥ ३४ ॥ 'निजमैश्वर्यमाश्चर्यंभक्तेश्चाद्भुतवैभवम् ॥ नवमेराजगुह्याख्येकृपयाऽवोचदच्युतः' ॥ १ ॥ इतिसुबोधिन्यांटीकायांनवमोऽध्यायः ॥ ९ ॥

किंपुनर्ब्राह्मणाःपुण्याभक्ताराजर्षयस्तथा ॥ अनित्यमसुखंलोकमिमंप्राप्यभजस्वमाम् ॥ ३३ ॥ मन्मनाभवमद्भक्तोमद्याजीमांनमस्कुरु ॥ मामेवैष्यसियुक्त्वैवमात्मानंमत्परायणः ॥ ३४ ॥ इतिश्रीमद्भगवद्गीतायांराजविद्याराजगुह्ययोगोनामनवमोऽध्यायः ॥ ९ ॥

श्रीभगवानुवाच ॥ ॥ भूयएवमहाबाहोशृणुमेपरमंवचः ॥ यत्तेऽहंप्रीयमाणायवक्ष्यामिहितकाम्यया ॥ १ ॥

'उक्ताःसंक्षेपतःपूर्वंसप्तमादौविभूतयः ॥ दशमेतावितन्यंतेसर्वत्रेश्वरदृष्टये ॥१॥' एवंतावत्सप्तमादिभिस्त्रिभिरध्यायैर्भजनीयंपरमेश्वररूपंनिरूपितम् तद्विभूतयश्चसप्तमेरसोऽहमप्सुकौंतेयेत्यादिनासंक्षेपतोदर्शिताः अष्टमेचअधियज्ञोऽहमेवात्रेत्यादिना नवमेचअहंक्रतुरहंयज्ञइत्यादिना अथेदानींताएवविभूतीःप्रपंचयिष्यन्स्वभक्तेश्चावश्यंकरणीयत्वंवर्णयिष्यन् श्रीभगवानुवाच भूयएवेति । महांतौयुद्धादिस्वधर्मानुष्ठानेमहत्परिचर्यायांवाकुशलौबाहूयस्य हेमहाबाहो ! भूयएवपुनरपिमेवचःशृणु कथंभूतम् परमंपरमात्मनिष्ठं मद्वचनामृतेनैवप्रीतिंप्राप्नुवतेतेतुभ्यंहितकाम्ययाहितेच्छयायदहंवक्ष्यामितत् ॥ १ ॥

उक्तस्यापिपुनर्वचनेदुर्ज्ञेयत्वंहेतुमाह नमइति । मेममप्रकृष्टंभवंजन्मरहितस्यापिनानाविभूतिभिराविर्भावंसुरगणाअपिमहर्षयोभृग्वादयोऽपिनजानंति तत्रहेतुः— अहंहिदेवानांमहर्षीणांचादिःकारणम सर्वशःसर्वप्रकारैःउत्पादकत्वेनबुद्ध्यादिप्रवर्तकत्वेनचअतोमदनुग्रहंविनामांकेऽपिनजानंतीत्यर्थः ॥ २ ॥ एवंभूतात्मज्ञाने फलमाह योमामिति । सर्वकारणत्वादेवनविद्यतेआदिःकारणंयस्यतमनादिम् अतएवाजंजन्मशून्यम लोकानांमहेश्वरंचमांयोवेत्ति समनुष्येषुअसंमूढःसंमोहर हितःसन्सर्वपापैःप्रमुच्यते ॥ ३ ॥ लोकमहेश्वरतामेवस्फुटयति बुद्धिरितित्रिभिः । बुद्धिःसारासारविवेकनैपुण्यम ज्ञानमात्मविषयम् असंमोहोव्याकुलत्वाभावः

नमेविदुःसुरगणाःप्रभवंनमहर्षयः ॥ अहमादिर्हिदेवानांमहर्षीणांचसर्वशः ॥ २ ॥ योमामजमनादिंचवेत्तिलोकमहेश्वरम् ॥
असंमूढःसमर्त्येषुसर्वपापैःप्रमुच्यते ॥ ३ ॥ बुद्धिर्ज्ञानमसंमोहःक्षमासत्यंदमःशमः ॥ सुखंदुःखंभवोभावोभयंचाभयमेवच ॥ ४ ॥
अहिंसासमतातुष्टिस्तपोदानंयशोऽयशः ॥ भवंतिभावाभूतानांमत्तएवपृथग्विधाः ॥ ५ ॥

क्षमासहिष्णुत्वम सत्यंयथार्थभाषणम् दमोबाह्येंद्रियसंयमः शमोंऽतःकरणसंयमः सुखमनुकूलसंवेदनीयम दुःखंचतद्विपरीतं भवउद्भवः अभावस्तद्विपरीतः भयंत्रासः अभयंतद्विपरीतम अस्यलोकस्यमत्तएवभवंतीत्युत्तरेणान्वयः ॥ ४ ॥ किंच अहिंसेति । अहिंसापरपीडानिवृत्तिः समतारागद्वेषादिराहित्यम् मित्रामित्रतुल्यताच तुष्टिर्दैवलब्धेनसंतोषः तपःशारीरादिवक्ष्यमाणम् दानंन्यायार्जितधनादेःसत्पात्रार्पणम् यशःसत्कीर्तिः अयशोऽपकीर्तिः एतेबुद्धिर्ज्ञानमित्यादयस्तद्विपरीताश्चाबुद्ध्यादयोनानाविधाभावाःप्राणिनांमत्तःसकाशादेवभवंति ॥ ५ ॥

किंच महर्षयइति । सप्तमहर्षयोभृग्वादयःसप्तब्राह्मणाइत्येतेपुराणेनिश्चयंगताइत्यादिपुराणप्रसिद्धाः तेभ्योऽपिपूर्वेऽन्येचत्वारोमहर्षयःसनकादयः तथामनवःस्वायंभुवादयः मद्भावामदीयोभावःप्रभावोयेषुते हिरण्यगर्भात्मनोममैवमनसःसंकल्पमात्राज्जाताः प्रभावमेवाह येषामिति । येषांभृग्वादीनांचसनकादीनांचइमाब्राह्मणाद्यालोकेवर्धमानाः यथायथंपुत्रपौत्रादिरूपाः शिष्यादिरूपाश्च प्रजाजातावर्तंते ॥ ६ ॥ यथोक्तविभूत्यादितत्त्वज्ञानस्यफलमाह एतामिति । एतांभृग्वादिलक्षणांममविभूतिंयोगंचैश्वर्यलक्षणंतत्त्वतोयोवेत्तिसोऽविकम्पेनानिःसंशयेनयोगेनसम्यग्दर्शनेनयुक्तोभवति नास्त्यत्रसंशयः ॥ ७ ॥ यथाचविभूतियोगयोर्ज्ञानेनसम्य

महर्षयःसप्तपूर्वेचत्वारोमनवस्तथा ॥ मद्भावामानसाजातायेषांलोकइमाःप्रजाः ॥ ६ ॥ एतांविभूतिंयोगंचममयोवेत्तितत्त्वतः ॥ सोऽविकंपेनयोगेनयुज्यतेनात्रसंशयः ॥ ७ ॥ अहंसर्वस्यप्रभवोमत्तःसर्वंप्रवर्तते ॥ इतिमत्वाभजंतेमांबुधाभावसमन्विताः ॥ ८ ॥ मच्चित्तामद्गतप्राणाबोधयंतःपरस्परम् ॥ कथयंतश्चमांनित्यंतुष्यंतिचरमंतिच ॥ ९ ॥ तेषांसततयुक्तानांभजतांप्रीतिपूर्वकम् ॥ ददामिबुद्धियोगंतंयेनमामुपयांतिते ॥ १० ॥

ग्ज्ञानावाप्तिस्तद्दर्शयाति अहमित्यादिचतुर्भिः । अहंसर्वस्यजगतःप्रभवः भृग्वादिरूपवि भूतिद्वारेणोत्पत्तिहेतुःमत्तएवचास्यसर्वस्यबुद्धिर्ज्ञानमसंमोहइत्यादिसर्वंप्रवर्ततइति एवंमत्वाऽवबुद्ध्य बुधाविवेकिनोभावसमन्विताःप्रीतियुक्तामांभजंते ॥ ८ ॥ प्रीतिपूर्वकंभजनमेवाह मच्चित्ताइति । मय्येवाचित्तंयेषांतेमच्चिताः मामेवगताःप्राप्ताःप्राणाइंद्रियाणियेषांतेमद्गतप्राणाः मदर्पितजीवनाइतिवा एवंभूतास्तेबुधाः अन्योऽन्यंमांन्यायोपेतैःश्रुत्यादिप्रमाणैर्बोधयंतः बुद्ध्याचमांकथयन्तः संकीर्तयन्तः संतोनित्यंतुष्यंति अनुमोदनेनतुष्टिंयांति रमंतिच निर्वृत्तिंयांति ॥ ९ ॥ एवंभूतानांचसम्यग्ज्ञानमहंददामीत्याह तेषामिति । एवंसततयुक्तानां

मय्यासक्तानांप्रीतिपूर्वकंभजतांतेषांतंबुद्धिरूपंयोगमुपायंददामि तमितिकम् येनोपायेनतेभक्तामांप्राप्नुवंति ॥ १० ॥ बुंद्धियोगंदत्त्वाचतस्यानुभवपर्यंततमापा
द्याविद्याकृतंसंसारंनाशयामीत्याह तेषामिति । तेषामनुकंपार्थमनुग्रहार्थमेवाज्ञानाज्जातंतमः संसाराख्यं नाशयामि कुत्रवास्थितःसन्केनसाधनेनतमोनाशय
सीत्यतआह आत्मभावस्थः बुद्धिवृत्तौस्थितःसन् भास्वताविस्फुरताज्ञानलक्षणेनदीपेननाशयामि ॥ ११ ॥ संक्षेपेणोक्ताविभूतीर्विस्तरेणजिज्ञासुर्भगवंतंस्तु
वन्नर्जुनउवाच परंब्रह्मेतिसप्तभिः परंब्रह्मचपरंधामचआश्रयःपरमंचपवित्रंभवानेव कुतइत्यतआह यतःशाश्वतंनित्यंपुरुषं तथादिव्यंद्योतनात्मकं स्वप्रकाशंच

तेषामेवानुकंपार्थमहमज्ञानजंतमः ॥ नाशयाम्यात्मभावस्थोज्ञानदीपेनभास्वता ॥ ११ ॥ ॥ अर्जुनउवाच ॥ ॥ परंब्रह्मपरंधा
मपवित्रंपरमंभवान् ॥ पुरुषंशाश्वतंदिव्यमादिदेवमजंविभुम् ॥ १२ ॥ आहुस्त्वामृषयःसर्वेदेवर्षिर्नारदस्तथा ॥ असितोदेवलोव्या
सःस्वयंचैवब्रवीषिमे ॥ १३ ॥ सर्वमेतदृतंमन्येयन्मांवदसिकेशव ॥ नहितेभगवन्व्यक्तिंविदुर्देवानदानवाः ॥ १४ ॥

आदिश्चासौदेवश्चतं देवानामादिभूतामित्यर्थः तथाअजंअजन्मानंविभुंव्यापकंत्वामेवाहुः ॥ १२ ॥ केतइत्यतआह आहुरिति । ऋषयःभृग्वादयःसर्वे देवर्षिर्ना
रदः असितश्चदेवलश्चव्यासश्च स्वयंत्वमेवसाक्षान्मेमह्यंब्रवीषि ॥ १३ ॥ अतोममेदानींत्वदैश्वर्येअसंभावनानिवृत्तेत्याह सर्वमिति । एतद्भवानेवपरंब्रह्मेत्यादि
सर्वमपिऋतंसत्यंमन्ये यन्मांप्रतित्वंकथयसि नमेविदुःसुरगणाइत्यादितदपिसत्यमेवमन्यतइत्याह नहीति । हेभगवन् तवव्यक्तिंदेवानविदुः अस्मदनुग्रहार्थमिय
मभिव्यक्तिरितिनजानांति दानवाश्चास्मन्निग्रहार्थमितिनाविदुरेवेति ॥ १४ ॥

१३

किंतर्हि स्वयमिति । स्वयमेवत्वमात्मानंवेत्थजानासि नान्यः तदप्यात्मनास्वेनैववेत्थ नसाधनांतरेण अत्यादरेणबहुधासंबोधयति हेपुरुषोत्तम पुरुषोत्तमत्वेहेतुग र्भाणिसंबोधनानि हेभूतभावनभूतोत्पादक भूतानामीशनियन्तः देवानामादित्यादीनांदेवप्रकाशक जगत्पतेविश्वपालक ॥ १५ ॥ यस्मात्त्वाभिव्यक्तिंत्वमेव वेत्सिनदेवादयस्तस्माद्वक्तुमर्हसीति याआत्मनस्तवदिव्याअत्यद्भुताविभूतयस्ताःसर्वावक्तुंत्वमेवार्हसि योग्योभवसि याभिरितिविभूतीनांविशेषणं स्पष्टा र्थम् ॥ १६ ॥ कथनप्रयोजनंदर्शयनप्रार्थयते कथमितिद्वाभ्याम् । हे योगिन् ! कथंकैर्विभूतिभेदैःसदापरिचिंतयन्नहंत्वांविद्यांजानीयाम् विभूतिभेदेनचिंत्योऽ

स्वयमेवात्मनाऽऽत्मानंवेत्थत्वंपुरुषोत्तम ॥ भूतभावनभूतेशदेवदेवजगत्पते ॥ १५ ॥ वक्तुमर्हस्यशेषेणदिव्याह्यात्मविभूतयः ॥ याभि र्विभूतिभिर्लोकानिमांस्त्वंव्याप्यतिष्ठसि ॥ १६ ॥ कथंविद्यामहंयोगिंस्त्वांसदापरिचिंतयन् ॥ केषुकेषुचभावेषुचिंत्योऽसिभगवन्म या ॥ १७ ॥ विस्तरेणात्मनोयोगंविभूतिंचजनार्दन ॥ भूयःकथयतृप्तिर्हिशृण्वतोनास्तिमेऽमृतम् ॥ १८ ॥ ॥ श्रीभगवानुवाच ॥
हन्ततेकथयिष्यामिदिव्याह्यात्मविभूतयः ॥ प्राधान्यतःकुरुश्रेष्ठनास्त्यन्तोविस्तरस्यमे ॥ १९ ॥

सित्वंकेषुकेषुपदार्थेषुमयाचिंतनीयोऽसि ॥ १७ ॥ तदेवंबहिर्मुखेऽपिचित्तेतत्रतत्रविभूतिभेदेनत्वच्चिंतैवयथाभवेत्तथाविस्तरेणकथयेत्याह विस्तरेणेति । आत्मन स्तवयोगंसर्वज्ञत्वसर्वशक्तित्वादिलक्षणंयोगैश्वर्यंविभूतिंचविस्तरेणपुनःकथय हियस्मात्त्वद्वाक्यममृतरूपंशृण्वतोममतृप्तिरलंबुद्धिर्नास्ति ॥ १८ ॥ एवंप्रार्थितःसन् श्रीभगवानुवाच हन्तेति । हंतेत्यनुकंपासंबोधनं दिव्यायाममविभूतयस्ताः प्राधान्येनतुभ्यंकथयिष्यामि यतोऽवान्तरस्यविभूतिविस्तरस्यमदीयस्यांतोनास्ति अत प्रधानभूताःकतिचिद्वर्णयिष्यामि ॥ १९ ॥

तत्रप्रथममैश्वरंरूपंकथयति अहमिति । हेगुडाकेश ! सर्वेषांभूतानामाशयेष्वंतःकरणेषुसर्वज्ञत्वादिगुणैर्नियंतृत्वेनावस्थितःपरमात्माहम् आदिर्जन्म मध्यांस्थितिः अंतःसंहारः सर्वभूतानांजन्मादिहेतुश्चाहमेवेत्यर्थः ॥ २० ॥ इदानींविभूतीःकथयति आदित्यानामित्यादिनायावदध्यायसमाप्ति । आदित्यानांद्वादशानांमध्ये विष्णुर्वामनोऽहम् ज्योतिषांप्रकाशानांमध्येंऽशुमान्विश्वव्यापकरश्मियुक्तोरविःसूर्योऽहम् मरुतांदेवविशेषाणांमध्येमरीचिनामाहमस्मि यद्वा सप्तमरुद्गणावायवस्ते षांमध्यइति तेच आवहःप्रवहःविवहःपरावहःउद्वहःसंवहःपरिवहइतिमरुद्गणाः नक्षत्राणांमध्येचंद्रोऽहम् अत्रच आदित्यानामहंविष्णुरित्यादिषुप्रायशोनिर्धार

अहमात्मागुडाकेशसर्वभूताशयस्थितः ॥ अहमादिश्चमध्यंचभूतानामंतएवच ॥ २० ॥
आदित्यानामहंविष्णुर्ज्योतिषांरविरंशुमान् ॥ मरीचिर्मरुतामस्मिनक्षत्राणामहंशशी ॥ २१ ॥
वेदानांसामवेदोऽस्मिदेवानामस्मिवासवः ॥ इंद्रियाणांमनश्चास्मिभूतानामस्मिचेतना ॥ २२ ॥
रुद्राणांशंकरश्चास्मिवित्तेशोयक्षरक्षसाम् ॥ वसूनांपावकश्चास्मिमेरुःशिखरिणामहम् ॥ २३ ॥

णेषष्ठी क्वचिच्चभूतानामस्मिचेतनेत्यादिनासंबंधेषष्ठी तच्चतत्रतत्रैवदर्शयिष्यामः विष्णुरित्याद्यवतारोऽपिप्रभावातिशयमात्रविवक्षयाविभूतित्वेननिर्दिश्यते अतः परंचाध्यायस्यस्पष्टार्थत्वेऽपिक्वचित्किंचिद्व्याख्यास्यामः ॥ २१ ॥ वेदानामिति । वासवइंद्रः भूतानांसंबंधिनीचेतनाज्ञानशक्तिरहमस्मि ॥ २२ ॥ रुद्राणामिति । यक्षरक्षसामितिराक्षसानामपिक्रूरत्वादिसाम्याद्यक्षैःसहैकीकृत्यनिर्देशः तेषांमध्येवित्तेशः कुबेरोऽस्मि पावकोऽग्निः शिखरिणांशिखरवतांउच्छ्रिता नांमध्येमेरुः ॥ २३ ॥

पुरोधसामिति । पुरोधसांमध्येदेवपुरोहितत्वान्मुख्यंबृहस्पतिंमांविद्धि सेनानीनांसेनापतीनांमध्येदेवसेनापतिः स्कंदोऽहमस्मि सरसास्थिरजलाशयानांमध्येसमुद्रोऽस्मि ॥ २४ ॥ महर्षीणामिति । गिरांवाचांपदात्मिकानांमध्येएकमक्षरमोंकाराख्यंपदमस्मि यज्ञानांश्रौतस्मार्तानांमध्येजपरूपोयज्ञोऽहम् ॥ २५ ॥ अश्वत्थ इति । देवाएवसंतोमंत्रदर्शनेनयऋषित्वंप्राप्तास्तेषांमध्येनारदोऽस्मि सिद्धानांउत्पत्तितएवाधिगतपरमार्थतत्त्वानांमध्येकपिलाख्योमुनिरस्मि ॥ २६ ॥ उच्चैःश्रवसमिति । अमृतार्थंक्षीराब्धिमथनादुद्भूतमुच्चैःश्रवसंनामाश्वंमद्विभूतिंविद्धि अमृतोद्भवमित्येतदैरावतेऽपिसंबध्यते नराधिपंराजानंमाविद्धि ॥ २७ ॥ आयुधा

पुरोधसाचमुख्यंमांविद्धिपार्थबृहस्पतिम् ॥ सेनानीनामहंस्कंदःसरसामस्मिसागरः ॥ २४ ॥ महर्षीणांभृगुरहंगिरामस्म्येकमक्षरम् ॥ यज्ञानांजपयज्ञोऽस्मिस्थावराणांहिमालयः ॥ २५ ॥ अश्वत्थःसर्ववृक्षाणांदेवर्षीणांचनारदः ॥ गंधर्वाणांचित्ररथः सिद्धानांकपिलोमुनिः ॥ २६ ॥ उच्चैःश्रवसमश्वानांविद्धिमाममृतोद्भवम् ॥ ऐरावतंगजेंद्राणांनराणांचनराधिपम् ॥ २७ ॥ आयुधानामहंवज्रंधेनूनामस्मिकामधुक् ॥ प्रजनश्चास्मिकंदर्पःसर्पाणामस्मिवासुकिः ॥ २८ ॥ अनंतश्चास्मिनागानांवरुणोयादसामहम् ॥ पितॄणामर्यमाचास्मियमःसंयमतामहम् ॥ २९ ॥

नामिति । आयुधानांमध्येवज्रम् कामान्दोग्धीतिकामधुक् प्रजनःप्रजोत्पत्तिहेतुःकंदर्पःकामोऽस्मि नकेवलंसंभोगप्रधानःकामोमद्विभूतिः अशास्त्रीयत्वात् सर्पाणांसविषाणांराजावासुकिरस्मि ॥ २८ ॥ अनंतइति । नागानांनिर्विषाणांराजाअनंतःशेषोऽस्मि यादसांजलचराणांराजावरुणोऽस्मि पितॄणांराजाअर्यमाऽस्मि संयमतांनियमनंकुर्वतांमध्येयमोऽस्मि ॥ २९ ॥

प्रह्लादइति । कलयतांवशीकुर्वतांगणयतांवामध्येकालोऽहम् मृगेंद्रःसिंहःपक्षिणांमध्येगरुडोऽस्मि ॥ ३० ॥ पवनइति । पवतांपावयितॄणांवेगवतांवामध्येवायु
रस्मि शस्त्रभृतांवीराणांरामोदाशरथिः यद्वापरशुरामः झषाणांमत्स्यानांमकरःमत्स्यविशेषस्तिमिंगिलः स्रोतसांप्रवाहोदकानांमध्येभागीरथी ॥ ३१ ॥ सर्गा
णामिति । सृज्यंतइतिसर्गाआकाशादयस्तेषामादिरंतश्चमध्यंचैवाहं अहमादिश्चमध्यंचेत्यत्रसृष्ट्यादिकर्तृत्वंपारमैश्वर्यमुक्तं अत्रतूत्पत्तिस्थितिलयामद्विभूतित्वेन
ध्येयाइत्युच्यतइतिविशेषः अध्यात्मविद्याआत्मविद्या प्रवदतांवादिनांसंबंधिन्योवादजल्पवितंडाख्यास्तिस्रःकथाःप्रसिद्धाः तासांमध्येवादोऽहम् यत्रद्वाभ्याम
पिप्रमाणतस्तर्कतश्चस्वपक्षःस्थाप्यते परपक्षश्छलजातिनिग्रहस्थानैर्दूष्यतेसजल्पोनाम यत्रत्वेकःस्वपक्षंस्थापयति अन्यस्तुछलजातिनिग्रहस्थानैस्तत्पक्षंदूषय

**प्रह्लादश्चास्मिदैत्यानांकालःकलयतामहम् ॥ मृगाणांचमृगेन्द्रोऽहंवैनतेयश्चपक्षिणाम् ॥ ३० ॥ पवनःपवतामस्मिरामःशस्त्रभृतामहम् ॥**
**झषाणांमकरश्चास्मिस्रोतसामस्मिजाह्नवी ॥ ३१ ॥ सर्गाणामादिरन्तश्चमध्यंचैवाहमर्जुन ॥ अध्यात्मविद्याविद्यानांवादःप्रवदतामहम्**
**॥ ३२ ॥ अक्षराणामकारोऽस्मिद्वंद्वःसामासिकस्यच ॥ अहमेवाक्षयःकालोधाताऽहंविश्वतोमुखः ॥ ३३ ॥**

तिनतुस्वपक्षंसाधयति सावितंडानामकथा तत्रजल्पवितंडेविजिगीषमाणयोर्वादिनोः शक्तिपरीक्षामात्रफले वादस्तुवीतरागयोःशिष्याचार्ययोरन्ययोर्वातत्त्वनि
र्णयफलश्चातोऽसौश्रेष्ठत्वान्मद्विभूतिरित्यर्थः ॥ ३२ ॥ अक्षराणामिति । अक्षराणांवर्णानांमध्येअकारोऽस्मि तस्यसर्ववाङ्मयत्वेनश्रेष्ठत्वात् तथाचश्रुतिः—अकारो
हिसर्वावाक्सैषास्पर्शोष्मभिर्व्यज्यमानाबह्वीनानारूपाभवतीति सामासिकस्यसमाससमूहस्यमध्येद्वंद्वःरामकृष्णावित्यादिसमासोऽस्मि उभयपदप्रधानत्वेनश्रेष्ठ
त्वात् अक्षयःप्रवाहरूपःकालोऽहमेवकालःकलयतामित्यत्रायुर्गणनात्मकः संवत्सरशताद्यायुःस्वरूपकालउक्तः सचतस्मिन्नायुषिक्षीणेसतिक्षीयते अत्रतुप्रवा

हात्मकोऽक्षयःकालउच्यतइतिविशेषः कर्मफलविधातॄणामध्येविश्वतोमुखोधाता सर्वकर्मफलविधाताहमित्यर्थः ॥ ३३ ॥ मृत्युरिति । संहारकारिणांमध्येस र्वहरोमृत्युरहम् भविष्यतांभाविकल्याणानांप्राणिनामुद्भवःअभ्युदयोऽहम् नारीणांस्त्रीणांमध्येकीर्त्याद्याःसप्तदेवतारूपाःस्त्रियोऽहम यासामाभासमात्रयोगेनप्रा णिनःश्लाघ्याभवंति ताःकीर्त्याद्याःस्त्रियोमद्विभूतयः ॥ ३४ ॥ बृहत्सामेति । त्वामिद्धिहवामहइत्यस्यामृचिगीयमानंबृहत्साम तेनचेंद्रःसर्वेश्वरत्वेनस्तूयतइति श्रैष्ठ्यंदर्शितं छंदोविशिष्टानांमंत्राणांमध्येगायत्र्यहम द्विजत्वापादकत्वेनसोमाहरणेनचश्रेष्ठत्वात् कुसुमाकरोवसंतः ॥ ३५ ॥ द्यूतमिति । छलयता

**मृत्युःसर्वहरश्चाहमुद्भवश्चभविष्यताम् ॥ कीर्तिःश्रीर्वाक्चनारीणांस्मृतिर्मेधाधृतिःक्षमा ॥ ३४ ॥ बृहत्सामतथासाम्नांगायत्रीच्छंदसाम हम् ॥ मासानांमार्गशीर्षोऽहमृतूनांकुसुमाकरः ॥ ३५ ॥ द्यूतंछलयतामस्मितेजस्तेजस्विनामहम् ॥ जयोऽस्मिव्यवसायोऽस्मिसत्त्वंस त्त्ववतामहम् ॥ ३६ ॥ वृष्णीनांवासुदेवोऽस्मिपांडवानांधनंजयः ॥ मुनीनामप्यहंव्यासःकवीनामुशनाकविः ॥ ३७ ॥ दंडोदमय तामस्मिनीतिरस्मिजिगीषताम् ॥ मौनंचैवास्मिगुह्यानांज्ञानंज्ञानवतामहम् ॥ ३८ ॥**

मन्योन्यवंचनपराणांसंबंधिद्यूतमस्मि तेजस्विनांप्रभावतां तेजःप्रभावोऽस्मि जेतॄणांजयोऽस्मि व्यवसायिनामुद्यमवतांव्यवसायउद्यमोऽस्मि सत्त्ववतां सात्त्विकानांसत्त्वमहम् ॥ ३६ ॥ वृष्णीनामिति । वासुदेवोयोऽहंत्वामुपदिशामि धनंजयस्त्वमेवमद्विभूतिः मुनीनांवेदार्थमननशीलानांवेदव्यासोऽह मस्मि कवीनांकाव्यदर्शिनांमध्येउशनानामकविःशुक्रः ॥ ३७ ॥ दंडइति । दमयतांदमनकर्तॄणांसंबंधीदंडोऽस्मि येनअसंयताअपिसंयताभवंतिसदंडोमद्विभू तिः जेतुमिच्छतांसंबंधिनीसामाद्युपायरूपानीतिरस्मि गुह्यानांगोप्यानांगोपनहेतुर्मौनमवचनमहमस्मि नहितूष्णींस्थितस्याभिप्रायोज्ञायतेज्ञानवतांतत्त्वज्ञानिनां

यज्ज्ञानंतदहम् ॥ ३८ ॥ यदिति । यदपिचसर्वभूतानांबीजंप्ररोहकारणंतदहं तत्रहेतुः—मयाविनायत्स्यात्भवेत् तच्चराचरंभूतंनास्त्येवेति ॥ ३९ ॥ प्रक
रणार्थमुपसंहरति नान्तइति । अनन्तत्वाद्विभूतीनांताःसाकल्येनवक्तुंनशक्यंतेएषतुविभूतेर्विस्तरउद्देशतःसंक्षेपतःप्रोक्तः ॥ ४० ॥ पुनश्चसाकांक्षंप्रतिकथं
चित्साकल्येनकथयाति यद्यदिति । विभूतिमदैश्वर्ययुक्तम् श्रीमत्संपत्तियुक्तम् ऊर्जितंकेनचित्प्रभावबलादिनागुणेनातिशयितंयद्यत्सत्त्वंवस्तुमात्रंतत्तदेवममते
जःप्रभावस्यांशेनसंभूतंजानीहि ॥ ४१ ॥ अथवाकिमनेनपरिच्छिन्नज्ञानेन सर्वत्रसमदृष्टिमेवकुर्वित्याह अथवेति । बहुनापृथग्ज्ञातेनकिंतवकार्यं यदिदंसर्वं

यच्चापिसर्वभूतानांबीजंतदहमर्जुन ॥ नतदस्तिविनायत्स्यान्मयाभूतंचराचरम् ॥ ३९ ॥ नान्तोऽस्तिममदिव्यानांविभूतीनांपरंतप ॥
एषतूद्देशतःप्रोक्तोविभूतेर्विस्तरोमया ॥ ४० ॥ यद्यद्विभूतिमत्सत्वंश्रीमदूर्जितमेववा ॥ तत्तदेवावगच्छत्वंममतेजोंऽशसंभवम् ॥ ४१ ॥
अथवाबहुनैतेनकिंज्ञातेनतवार्जुन ॥ विष्टभ्याहमिदंकृत्स्नमेकांशेनस्थितोजगत् ॥ ४२ ॥ इतिश्रीमद्भग० विभूतियोगोनामदशमोऽ
ध्यायः ॥ १० ॥ ॥ अर्जुनउवाच ॥ ॥ मदनुग्रहायपरमंगुह्यमध्यात्मसंज्ञितम् ॥ यत्त्वयोक्तंवचस्तेनमोहोऽयंविगतोमम ॥ १ ॥

जगदेकांशेनएकदेशमात्रेणविष्टभ्यधृत्वाव्याप्येतिवाअहमेवास्थितः नमद्व्यतिरिक्तंकिंचिदस्ति "पादोऽस्यविश्वाभूतानि"इतिश्रुतेः ॥ ४२ ॥ 'इंद्रियद्वारतश्चित्तेबहि
र्धावतिसत्यपि ॥ ईशदृष्टिविधानायविभूतीर्दशमेऽब्रवीत् ॥ १ ॥' इतिसुबोधिन्यांटीकायांदशमोऽध्यायः ॥ १० ॥ 'विभूतिवैभवंप्रोच्यकृपयापरयाहरिः ॥ दिदृ
क्षोरर्जुनस्याथविश्वरूपमदर्शयत् ॥ १ ॥' पूर्वाध्यायांतेविष्टभ्याहमिदंकृत्स्नमेकांशेनस्थितोजगदितिविश्वात्मकं पारमेश्वरंरूपमुपक्षिप्तं तद्दिदृक्षुःपूर्वोक्तमभिनंदन्न
र्जुनउवाच मदनुग्रहायेतिचतुर्भिः ममानुग्रहायशोकनिवृत्तयेपरमंपरमार्थनिष्ठंगुह्यंगोप्यमपिअध्यात्ममितिसंज्ञितंआत्मानात्मविवेकविषयं यत्त्वयोक्तंवचः अ

शोच्यानन्वशोचस्त्वमित्यादिषष्ठाध्यायपर्यंतंयद्वाक्यं तेनममायंमोहोऽहंहन्ताएतेहन्यंतइत्यादिलक्षणोभ्रमोविगतःविनष्टः आत्मनःकर्तृत्वाद्यभावोक्तेः ॥ १ ॥ किंच भवाप्ययाविति। भूतानांभवाप्ययौसृष्टिप्रलयौत्वत्तःसकाशादेवभवतइतिश्रुतौमया अहंकृत्स्नस्यजगतःप्रभवःप्रलयस्तथाइत्यादौविस्तरशःपुनःपुनः कमलपत्रेइवसुप्रसन्नेविशालेअक्षिणीयस्यसः हेकमलपत्राक्ष। माहात्म्यमपिचाव्ययम् अक्षयंश्रुतम् विश्वसृष्ट्यादिकर्तृत्वेऽपिशुभाशुभकर्मकारयितृत्वेऽपिबंधमोक्षादिविचित्रफलदातृत्वेऽपिअविकारावैषम्यासंगोदासीन्यादिलक्षणमपरिमितंमहत्त्वंश्रुतम् अव्यक्तंव्यक्तिमापन्नंमन्यते मयाततमिदंसर्वं नचमांतानिकर्माणिनिबध्नंति स

भवाप्ययौहिभूतानांश्रुतौविस्तरशोमया ॥ त्वत्तःकमलपत्राक्षमाहात्म्यमपिचाव्ययम् ॥ २ ॥
एवमेतद्यथात्थत्वमात्मानंपरमेश्वर ॥ द्रष्टुमिच्छामितेरूपमैश्वरंपुरुषोत्तम ॥ ३ ॥
मन्यसेयदितच्छक्यंमयाद्रष्टुमितिप्रभो ॥ योगेश्वरततोमेत्वंदर्शयात्मानमव्ययम् ॥ ४ ॥

मोऽहंसर्वभूतेषुइत्यादिना अतस्त्वत्परतंत्रत्वादपिजीवानामहंकर्तेत्यादिर्मदीयोमोहोविगतइतिभावः ॥ २ ॥ किंच एवमिति। भवाप्ययौहिभूतानामित्यादिमयाश्रुतं यथाचेदानीमात्मानंत्वमात्थ विष्टभ्याहमिदंकृत्स्नमित्येवंकथयसि हेपरमेश्वर। एवमेतत् अत्राप्यविश्वासोममनास्तीत्यर्थः तथापिहेपुरुषोत्तम! तवैश्वरंज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिःसंपन्नंत्वद्रूपं कौतूहलादहंद्रष्टुमिच्छामि ॥ ३ ॥ नचाहंद्रष्टुमिच्छामीत्येतावतैवत्वयातद्रूपंदर्शयितव्यं किंतर्हिमन्यसइति। योगिनएवयोगास्तेषामीश्वर! मयाअर्जुनेनतद्रूपंद्रष्टुंशक्यमितियदिमन्यसे ततस्तर्हितद्रूपवंतमात्मानंअव्ययंनित्यंममदर्शय ॥ ४ ॥

एवंप्रार्थितःसन्नत्यद्भुतंरूपंदर्शयिष्यन्सावधानोभवेत्येवमर्जुनमभिमुखीकरोति श्रीभगवानुवाच पश्येतिचतुर्भिः । रूपस्यैकत्वेऽपिनानाविधत्वाद्रूपाणीतिबहु वचनंअपरिमितान्यनेकप्रकाराणिदिव्यान्यलौकिकानिममरूपाणिपश्य वर्णाःशुक्लकृष्णादयः आकृतयोऽवयवसन्निवेशविशेषाः नानाअनेकवर्णाआकृतयश्च येषांतानिनानावर्णाकृतीनि ॥ ५ ॥ तान्येवाह पश्येति । आदित्यादीन्ममदेहेपश्य मरुतएकोनपंचाशद्देवविशेषान् अदृष्टपूर्वाणि त्वयावान्येनवापूर्वम- दृष्टानिरूपाणि आश्चर्याण्यत्यद्भुतानि ॥ ६ ॥ किंच इहेति । तत्रतत्रपरिभ्रमतावर्षकोटिभिरपिद्रष्टुमशक्यंकृत्स्नमपिचराचरसहितं जगदिहास्मिन्ममदेहेऽ

श्रीभगवानुवाच ॥ ॥ पश्यमेपार्थरूपाणिशतशोऽथसहस्रशः ॥ नानाविधानिदिव्यानिनानावर्णाकृतीनिच ॥ ५ ॥ पश्या दित्यान्वसून्रुद्रानश्विनौमरुतस्तथा ॥ बहून्यदृष्टपूर्वाणिपश्याश्चर्याणिभारत ॥ ६ ॥ इहैकस्थंजगत्कृत्स्नंपश्याद्यसचराचरम् ॥ मम देहेगुडाकेशयच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥ नतुमांशक्यसेद्रष्टुमनेनैवस्वचक्षुषा ॥ दिव्यंददामितेचक्षुःपश्यमेयोगमैश्वरम् ॥ ८ ॥

संजयउवाच ॥ ॥ एवमुक्त्वाततोराजन्महायोगेश्वरोहरिः ॥ दर्शयामासपार्थायपरमंरूपमैश्वरम् ॥ ९ ॥

वयवरूपेणैकत्रैवस्थितमद्याधुनैवपश्य यच्चान्यज्जगदाश्रयभूतंकारणस्वरूपम् जगतश्चावस्थाविशेषादिकम् जयपराजयादिकंच यदप्यन्यद्द्रष्टुमिच्छसितत्स र्वंपश्य ॥ ७ ॥ यदुक्तमर्जुनेन मन्यसेयदितच्छक्यमिति तत्राह नत्विति । अनेनैवतुस्वीयेनचर्मचक्षुषामांद्रष्टुंनशक्यसे शक्तोनभविष्यसि अतोऽहंदिव्य मलौकिकंज्ञानात्मकंचक्षुस्तुभ्यंददामि ममैश्वरमसाधारणंयोगंयुक्तिमघटितघटनासामर्थ्यंपश्य ॥ ८ ॥ एवमुक्त्वाभगवानर्जुनायरूपंदर्शितवान् तच्चरूपं दृष्ट्वार्जुनःश्रीकृष्णंविज्ञापितवानितीममर्थं एवमुक्त्वेत्यादिभिःषड्भिःश्लोकैर्धृतराष्ट्रंप्रति संजयउवाच एवमिति । हेराजन् धृतराष्ट्र ! महांश्चासौ

१४

योगेश्वरश्चहरिःपरमंऐश्वरंरूपंदर्शितवान् ॥ ९ ॥ कथंभूतंतदित्यतआह अनेकेति । अनेकानिवक्त्राणिनयनानिचयस्मिंस्तत् अनेकानामद्भुतानांदर्शनंयस्मिं
स्तत् अनेकानिदिव्याभरणानियस्मिंस्तत् दिव्यान्यनेकानिउद्यतातिआयुधानिचयस्मिन्तत् ॥ १० ॥ किंच दिव्येति । दिव्यानिमाल्यांबराणिचधारयंती
तितथा दिव्योगंधोयस्यतादृशमनुलेपनंयस्यतत् सर्वाश्चर्यमयमनेकाश्चर्यप्रायम् देवंद्योतनात्मकम् अनंतमपरिच्छिन्नम् विश्वतःसर्वतोमुखानियस्मिंस्तत् ॥
॥ ११ ॥ विश्वरूपदीप्तेर्निरुपमत्वमाह दिवीति । दिव्याकाशेसूर्यसहस्रस्ययुगपदुत्थितस्ययदियुगपदुत्थिताभाःप्रभाभवेत् तर्हिसातदामहात्मनोविश्वरूप

**अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ॥ अनेकदिव्याभरणंदिव्यानेकोद्यतायुधम् ॥ १० ॥ दिव्यमाल्याम्बरधरंदिव्यगन्धानुलेपनम् ॥**
**सर्वाश्चर्यमयंदेवमनंतंविश्वतोमुखम् ॥ ११ ॥ दिविसूर्यसहस्रस्यभवेद्युगपदुत्थिता ॥ यदिभाःसदृशीसास्याद्भासस्तस्यमहात्मनः ॥**
**॥ १२ ॥ तत्रैकस्थंजगत्कृत्स्नंप्रविभक्तमनेकधा ॥ अपश्यद्देवदेवस्यशरीरेपांडवस्तदा ॥ १३ ॥ ततःसविस्मयाविष्टोहृष्टरोमाधनं**
**जयः ॥ प्रणम्यशिरसादेवंकृतांजलिरभाषत ॥ १४ ॥**

स्यभासःप्रभायाःकथंचित्सदृशीस्यात् नान्योपमाऽस्तीत्यर्थः तथाभूतंरूपंदर्शयामासेतिपूर्वेणान्वयः ॥ १२ ॥ ततःकिंवृत्तमित्यपेक्षायामाहसंजयः तत्रेति ।
अनेकधाप्रविभक्तंनानाविभागेनावस्थितंकृत्स्नंजगद्देवदेवस्यशरीरेतदवयवत्वेनैकत्रैवस्थितंतदापांडवोऽर्जुनोऽपश्यत् ॥ १३ ॥ एवंदृष्ट्वाकिंकृतवानित्यत
आह ततइति । ततोदर्शनानंतरं विस्मयेनाविष्टोव्याप्तःसन्हृष्टान्युत्पुलकितानिरोमाणियस्यसधनंजयोदेवंतमेवशिरसाप्रणम्यकृतांजलिःसंपुटीकृतहस्तोभूत्वा
ऽभाषत उक्तवान् ॥ १४ ॥

भाषणमेवाह पश्यामीतिसप्तदशभिः । हेदेव तवदेहेदेवानादित्यादीन्पश्यामि तथासर्वान्भूतविशेषाणांजरायुजांडजादीनांसंघांश्च तथादिव्यानृषीन्वसिष्ठादीन्
उरगांश्चतक्षकादीन् तथादेवानामीशंस्वामिनं ब्रह्माणंच कथंभूतम् कमलासनस्थम् पृथ्वीपद्मकर्णिकायांमेरौस्थितम् यद्वा त्वन्नाभिपद्मासनस्थम् ॥१५॥ किंच
अनेकेति । अनेकानिबाह्वादीनियस्यताद्दशंपश्यामि अनंतानिरूपाणियस्यतंत्वांसर्वतःपश्यामि तवतुअंतंमध्यमादिंचनपश्यामिसर्वगतत्वात् ॥ १६ ॥ किंच कि
रीटिनमिति । किरीटिनंमुकुटवन्तं गादिनंगदावन्तं चक्रिणंचक्रवन्तं सर्वतोदीप्तिमन्तं तेजःपुंजरूपम् तथादुर्निरीक्ष्यंद्रष्टुमशक्यम् तत्रहेतुः—दीप्तयोरनलार्कयोर्द्यु

अर्जुनउवाच ॥ ॥ पश्यामिदेवांस्तवदेवदेहेसर्वांस्तथाभूतविशेषसंघान् ॥ ब्रह्माणमीशंकमलासनस्थमृषींश्चसर्वानुरगांश्चदिव्यान्
॥ १५ ॥ अनेकबाहूदरवक्त्रनेत्रंपश्यामित्वांसर्वतोऽनंतरूपम् ॥ नांतंनमध्यंनपुनस्तवादिंपश्यामिविश्वेश्वरविश्वरूप ॥ १६ ॥ किरी
टिनंगदिनंचक्रिणंचतेजोराशिंसर्वतोदीप्तिमंतम् ॥ पश्यामित्वांदुर्निरीक्ष्यंसमंताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥ त्वमक्षरंपरमंवे
दितव्यंत्वमस्यविश्वस्यपरंनिधानम् ॥ त्वमव्ययःशाश्वतधर्मगोप्तासनातनस्त्वंपुरुषोमतोमे ॥ १८ ॥ अनादिमध्यांतमनंतवीर्यमनं
तबाहुंशशिसूर्यनेत्रम् ॥ पश्यामित्वांदीप्तहुताशवक्त्रंस्वतेजसाविश्वमिदंतपंतम् ॥ १९ ॥

तिरिवद्युतिस्तेजोयस्यतम् अतएवाप्रमेयम् एवंभूतइतिनिश्चेतुमशक्यम् त्वांसमंततःपश्यामि ॥ १७ ॥ यस्मादेवंतवातर्क्यमैश्वर्यंतस्मात् त्वमिति । त्वमेवाक्षरंपर
मंब्रह्म कथंभूतं वेदितव्यंमुमुक्षुभिर्ज्ञातव्यम् त्वमेवास्यविश्वस्यपरंनिधानम् निधीयतेऽस्मिन्नितिनिधानंप्रकृष्टाश्रयःअतएवत्वमव्ययोनित्यः शाश्वतस्यनित्यस्यधर्म
स्यगोप्तापालकः सनातनश्चिरंतनःपुरुषोमेमतःसंमतोऽसि ॥ १८ ॥ किंच अनादीति । अनादिमध्यान्तमुत्पत्तिस्थितिप्रलयरहितम् अनंतंवीर्यंप्रभावोयस्यतम्

अनन्तबाहुं अनन्ताबाहवोयस्यतम् शशिसूर्यौनेत्रेयस्यतम् तादृशंत्वांपश्यामि तथादीप्तोहुताशोऽग्निर्वक्रेषुयस्यतम् स्वतेजसा इदंविश्वं तपंतंसंतापयन्तंपश्यामि ॥ ॥ १९ ॥ किंच द्यावापृथिव्योरिति । द्यावापृथिव्योरिदमंतरं हि अन्तरिक्षंत्वयैकेनव्याप्तम् दिशश्चसर्वाव्याप्ताः अद्भुतंअदृष्टपूर्वंत्वदीयमिदमुग्रंघोरंरूपंदृष्ट्वा लोकत्रयंप्रव्यथितमतिभीतंपश्यामिइतिपूर्वस्यैवानुषंगः ॥ २० ॥ किंच अमीहीति । अमीसुरसंघाः भीताःसंतः त्वांविशंतिशरणंप्रविशंति तेषांमध्येकेचिदति भीताः दूरतएवास्थित्वाकृतसंपुटकरयुगुलाःसंतोगृणंति जयजयरक्षरक्षेतिप्रार्थयंते स्पष्टमन्यत् ॥ २१ ॥ किंच रुद्रेति । रुद्राश्चादित्याश्चवसवश्चयेचसाध्यानामदेवाः

द्यावापृथिव्योरिदमंतरंहिव्याप्तंत्वयैकेनदिशश्चसर्वाः ॥ दृष्ट्वाऽद्भुतंरूपमुग्रंतवेदंलोकत्रयंप्रव्यथितंमहात्मन् ॥ २० ॥ अमीहित्वांसुर संघाविशंतिकेचिद्भीताःप्रांजलयोगृणंति ॥ स्वस्तीत्युक्त्वामहर्षिसिद्धसंघाःस्तुवंतित्वांस्तुतिभिःपुष्कलाभिः ॥ २१ ॥ रुद्रादित्याव सवोयेचसाध्याविश्वेऽश्विनौमरुतश्चोष्मपाश्च ॥ गंधर्वयक्षासुरसिद्धसंघावीक्षंतेत्वांविस्मिताश्चैवसर्वे ॥ २२ ॥ रूपंमहत्तेबहुवक्त्रनेत्रं महाबाहोबहुबाहूरुपादम् ॥ बहूदरंबहुदंष्ट्राकरालंदृष्ट्वालोकाःप्रव्यथितास्तथाऽहम् ॥ २३ ॥

विश्वेदेवाः अश्विनौदेवौ मरुतोमरुद्गणाः ऊष्माणंपिबंतीत्यूष्मपाःपितरः“ऊष्मभागाहिपितरः”इत्यादिश्रुतेः स्मृतिश्च—‘यावदुष्णंभवेदन्नंयावदश्नंतिवाग्यताः । पितर स्तावदश्नंतियावन्नोक्ताहविर्गुणाः’इतिगंधर्वाश्चयक्षाश्चासुराश्चविरोचनादयः सिद्धानांसंघाश्चतेसर्वएव विस्मिताःसंतःत्वांवीक्षंतइत्यन्वयः ॥ २२ ॥ किंच रूपमिति । हेमहाबाहो!महदत्यूर्जितंतवरूपंदृष्ट्वालोकाःसर्वेप्रव्यथिताःअतिभीताः तथाऽहंप्रव्यथितोऽस्मि कीदृशंरूपंदृष्ट्वा बहूनिवक्त्राणिनेत्राणिचयस्मिंस्तत् बहवोबाहवऊरव

पादाश्वयस्मिंस्तत् बहूनिउदराणियस्मिंस्तत् बहुभिर्दंष्ट्राभिः करालंविकृतं रौद्रमित्यर्थः ॥२३॥ नकेवलंभीतोऽहमित्येतावदेव अपितुनभःस्पृशमिति । नभः स्पृश
तीतिनभःस्पृक्तं अन्तरिक्षव्यापिनमित्यर्थः दीप्तंतेजोयुक्तम् अनेकेवर्णास्यतमनेकवर्णम् व्यात्तानिविवृतान्याननानियस्यतम् दीप्तानिविशालानिनेत्राणि
यस्यतम् एवंभूतंत्वांदृष्ट्वाप्रव्यथितोंऽतरात्मामनोयस्यसोऽहम् धृतिंधैर्यमुपशमंचनलभे ॥ २४ ॥ किंच दंष्ट्रेति । भोदेवेश ! तवमुखानिदृष्ट्वाभयावेशेनदिशोन
जानामिशर्मचसुखंनलभे भोजगन्निवास ! प्रसन्नोभव कीदृशानिमुखानि दंष्ट्राभिःकरालानि कालानलःप्रलयाग्निस्तत्सदृशानि ॥२५॥ यच्चान्यद्रष्टुमिच्छसीत्यनेना

नभःस्पृशंदीप्तमनेकवर्णंव्यात्ताननंदीप्तविशालनेत्रम् ॥ दृष्ट्वाहित्वांप्रव्यथितांतरात्माधृतिंनविंदामिशमंचविष्णो ॥ २४ ॥ दंष्ट्राक
रालानिचतेमुखानिदृष्ट्वैवकालानलसन्निभानि ॥ दिशोनजानेनलभेचशर्मप्रसीददेवेशजगन्निवास ॥ २५ ॥ अमीचत्वांधृतराष्ट्रस्य
पुत्राःसर्वेसहैवावनिपालसंघैः ॥ भीष्मोद्रोणःसूतपुत्रस्तथाऽसौसहास्मदीयैरपियोधमुख्यैः ॥ २६ ॥ वक्त्राणितेत्वरमाणाविशंतिदंष्ट्रा
करालानिभयानकानि ॥ केचिद्विलग्नादशनांतरेषुसंदृश्यंतेचूर्णितैरुत्तमांगैः ॥ २७ ॥

स्मिन्संग्रामेभाविजयपराजयादिकंचममदेहेपश्येतियद्भगवतोक्तंतदिदानींपश्यन्नाह अमीचेतिपंचभिः । अमीधृतराष्ट्रस्यपुत्रादुर्योधनादयःसर्वे अवनिपाला
नांजयद्रथादीनांराज्ञांसंघैःसहैव तववक्त्राणिविशंतीत्युत्तरेणान्वयः तथा भीष्मश्चद्रोणश्चासौसूतपुत्रःकर्णश्चनकेवलंतएवविशंति अपितुप्रतियोद्धारोयेऽस्मदी
यायोधमुख्याःशिखंडीधृष्टद्युम्नादयःतैःसह ॥ २६ ॥ वक्त्राणीति । एतेसर्वेत्वरमाणाधावंतइवदंष्ट्राभिःकरालानिभयंकराणिवक्त्राणिविशंति तेषांमध्येकेचि
चूर्णीकृतैरुत्तमांगैःशिरोभिरुपलक्षितादंतसंधिषुसंश्लिष्टाःसंदृश्यंते ॥ २७ ॥

प्रवेशमेवदृष्टांतेनाह यथेति । नदीनामनेकमार्गप्रवृत्तानांबहवःअम्बूनावारीणांवेगाःप्रवाहाःसमुद्राभिमुखाःसंतोयथासमुद्रमेवद्रवंति प्रविशंति तथाअमीयेनरलोक वीराःतेअभिविज्वलंति सर्वतःप्रदीप्यमानानिवक्राणिप्रविशंति ॥२८॥ अवशत्वेनप्रवेशेनदीवेगोदृष्टांतउक्तःबुद्धिपूर्वकप्रवेशेदृष्टांतमाह यथेति । प्रदीप्तंज्वलनमग्निंपतंगाःसूक्ष्मपक्षिविशेषाः बुद्धिपूर्वकंसमृद्धोवेगोयेषांतेयथानाशायमरणायैवविशंति तथैवलोकाएतेजनाअपितवमुखानिप्रविशंति ॥ २९ ॥ ततःकिमत आह लेलिह्यसइति । ग्रसमानोगिलन् समग्रान्लोकान्सर्वानेतान्वीरान्समंतात्सर्वतोलेलिह्यसेअतिशयेनभक्षयसि कैःज्वलद्भिर्वदनैः किंच हेविष्णो! तवभासो

यथानदीनांबहवोंऽबुवेगाःसमुद्रमेवाभिमुखाद्रवंति ॥ तथातवामीनरलोकवीराविशंतिवक्राण्यभिविज्वलंति ॥ २८ ॥ यथाप्रदीप्तं ज्वलनंपतंगाविशंतिनाशायसमृद्धवेगाः ॥ तथैवनाशायविशंतिलोकास्तवापिवक्राणिसमृद्धवेगाः ॥ २९ ॥ लेलिह्यसेग्रसमानः समंताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ॥ तेजोभिरापूर्यजगत्समग्रंभासस्तवोग्राःप्रतपंतिविष्णो ॥ ३० ॥ आख्याहिमेकोभवानुग्ररूपो नमोऽस्तुतेदेववरप्रसीद ॥ विज्ञातुमिच्छामिभवंतमाद्यंनहिप्रजानामितवप्रवृत्तिम् ॥ ३१ ॥ ॥ श्रीभगवानुवाच ॥ कालो ऽस्मिलोकक्षयकृत्प्रवृद्धोलोकान्समाहर्तुमिहप्रवृत्तः ॥ ऋतेऽपित्वांनभविष्यंतिसर्वेयेऽवस्थिताःप्रत्यनीकेषुयोधाः ॥ ३२ ॥

दीप्तयस्तेजोभिर्विस्फुरणैःसमस्तंजगद्व्याप्यउग्रास्तीव्राःसत्यःप्रतपंतिसंतापयंति ॥ ३० ॥ यतएवंतस्मात् आख्याहीति । भवानुग्ररूपःकइत्याख्याहिकथय तुभ्यंनमोऽस्तु हेदेववरप्रसीदप्रसन्नोभव भवंतमाद्यंपुरुषंविशेषेणज्ञातुमिच्छामि यतस्तवप्रवृत्तिंचेष्टांकिमर्थमेवंप्रवृत्तोऽसीतिनजानामि एवंभूतस्यतवप्रवृत्तिंवार्तामपिनजानामीतिवा ॥ ३१ ॥ एवंप्रार्थितःसन् श्रीभगवानुवाच कालोऽस्मीतित्रिभिः । लोकानांक्षयकर्ताप्रवृद्धोऽत्युग्रः कालोस्मि लोकान्प्राणिनः संहर्तुमिहलोकेप्रवृत्तोऽस्मि

अतः ऋतेऽपित्वामिति । त्वांहंतारंविनाऽपिनभविष्यंति नजीविष्यंति यद्यपित्वयानहंतव्याएतेतथापिमयाकालात्मनाग्रस्ताःसंतोमरिष्यंत्येव केते प्रत्यनीकेषु अनीकान्यनीकानिप्रतिभीष्मद्रोणादीनांसर्वासुसेनासुयेयोद्धारोऽवस्थितास्तेसर्वेऽपि ॥ ३२ ॥ तस्मादिति । यस्मादेवंतस्मात्त्वंयुद्धायोत्तिष्ठ देवैरपिदुर्जयाःभीष्मद्रोणादयोऽर्जुनेननिर्जिताइत्येवंभूतंयशोलभस्व प्राप्नुहि अयत्नेनशत्रून्जित्वासमृद्धंराज्यंभुंक्ष्व एतेचतवशत्रवस्त्वदीययुद्धात्पूर्वमेवमयैवकालात्मनानिहतप्रायाः तथापित्वंनिमित्तमात्रंभव हेसव्यसाचिन् सव्येनवामहस्तेनसाचितुंशरान्संधातुंशीलंयस्येतिव्युत्पत्त्यावामेनापिबाणक्षेपात्सव्यसाचीत्युच्यते ॥ ३३ ॥

तस्मात्त्वमुत्तिष्ठयशोलभस्वजित्वाशत्रून्भुंक्ष्वराज्यंसमृद्धम् ॥ मयैवैतेनिहताःपूर्वमेवनिमित्तमात्रंभवसव्यसाचिन् ॥ ३३ ॥ द्रोणंच भीष्मंचजयद्रथंचकर्णंतथाऽन्यानपियोधवीरान् ॥ मयाहतास्त्वंजहिमाव्यथिष्ठायुध्यस्वजेतासिरणेसपत्नान् ॥३४॥ ॥ संजयउवाच ॥ एतच्छ्रुत्वावचनंकेशवस्यकृतांजलिर्वेपमानःकिरीटी ॥ नमस्कृत्वाभूयएवाहकृष्णंसगद्गदंभीतभीतःप्रणम्य ॥ ३५ ॥

नचैतद्विद्मःकतरन्नोगरीयइत्यादिर्याशंकासाऽपिनकार्येत्याह द्रोणंचेति । येभ्यस्त्वंशंकसेतान्द्रोणादीन्मयैवहतांस्त्वंजहिघातय माव्यथिष्ठाःशोकंमाकार्षीः सपत्नान्शत्रून्रणेयुद्धेनिश्चितंजेतासिजेष्यसि ॥ ३४ ॥ तयोर्यद्वृत्तंतद्धृतराष्ट्रंप्रति संजयउवाच एतदिति । एतत्पूर्वश्लोकत्रयात्मकंकेशवस्यवचनंश्रुत्वा वेपमानः कंपमानः किरीट्यर्जुनः कृतांजलिःसंपुटीकृतहस्तः कृष्णंनमस्कृत्यपुनरप्याहउक्तवान् कथमाह भयहर्षाद्यावेशवशाद्गद्गदेनकंठकंपनेनसहवर्ततइतिसगद्गदं यथाभवतितथा किंचभीतादपिभीतःसन् प्रणम्यअवनतोभूत्वा ॥ ३५ ॥

स्थानइत्येकादशभिरर्जुनस्योक्तिः स्थानेइत्यव्ययंयुक्तमित्यस्मिन्नर्थे हेऋषीकेशयतएवंत्वमद्भुतप्रभावोभक्तवत्सलश्चअतस्तवप्रकीर्त्यामाहात्म्यंसंकीर्तनेननकेवलम
हमेवप्रहृष्यामि किंतु जगत्सर्वंप्रहृष्यतिप्रकर्षेणहर्षंप्राप्नोति एतत्तुस्थाने युक्तमित्यर्थः तथा जगदनुरज्यतेअनुरागंचोपैतिइतियत् तथा रक्षांसिभीतानिसंतिदिशः
प्रतिद्रवंतिपलायंतइतियत् सर्वेयोगतपोमंत्रादिसिद्धानांसंघानमस्यंतिप्रणमंतीतियत् एतच्चस्थानेयुक्तमेव नचित्रमित्यर्थः ॥ ३६ ॥ तत्रहेतुमाह कस्मादिति ।
हेमहात्मन् ! हेअनंत ! हेदेवेश ! हेजगन्निवास ! कस्माद्धेतोस्तेतुभ्यंननमेरन्ननमस्कारंनकुर्युः कथंभूताय ब्रह्मणोऽपिगरीयसेगुरुतराय आदिकर्त्रेच ब्रह्मणोऽपि

अर्जुनउवाच ॥ ॥ स्थानेहृषीकेशतवप्रकीर्त्याजगत्प्रहृष्यत्यनुरज्यतेच ॥ रक्षांसिभीतानिदिशोद्रवंतिसर्वेनमस्यंतिचसिद्धसंघाः
॥ ३६ ॥ कस्माच्चतेननमेरन्महात्मन्गरीयसेब्रह्मणोऽप्यादिकर्त्रे ॥ अनंतदेवेशजगन्निवासत्वमक्षरंसदसत्तत्परंयत् ॥ ३७ ॥ त्वमा
दिदेवःपुरुषःपुराणस्त्वमस्यविश्वस्यपरंनिधानम् ॥ वेत्ताऽसिवेद्यंचपरंचधामत्वयाततंविश्वमनंतरूप ॥ ३८ ॥ वायुर्यमोऽग्निर्वरुणःश
शांकःप्रजापतिस्त्वंप्रपितामहश्च ॥ नमोनमस्तेऽस्तुसहस्रकृत्वःपुनश्चभूयोऽपिनमोनमस्ते ॥ ३९ ॥

जनकाय किंच सत्व्यक्तंअसदव्यक्तंचताभ्यांपरंमूलकारणंयदक्षरंब्रह्मतच्चत्वमेव एतैर्नवभिर्हेतुभिस्त्वांसर्वेनमस्यंतीतिनाचित्रमित्यर्थः॥ ३७ ॥ किंच त्वमिति ।
त्वमादिदेवः देवानामादिः यतःपुराणःअनादिपुरुषस्त्वम् अतएवत्वमस्यविश्वस्यपरंनिधानंलयस्थानम् तथाविश्वस्यवेत्तावेदिताज्ञाताचत्वम् यच्चवेद्यंवस्तुजातं
परंचधामवैष्णवंपदंतदपित्वमेवासि अतएवहेअनंतरूप ! त्वयैवविश्वमिदंततंव्याप्तं एतैश्चसप्तभिस्त्वमेवनमस्कार्यइतिभावः ॥ ३८ ॥ इतश्चत्वमेवसर्वैर्नमस्का
र्यः सर्वदेवात्मकत्वादितिस्तुवन्स्वयमपिनमस्करोति वायुरिति । वाय्वादिरूपस्त्वमितिसर्वदेवतात्मकत्वोपलक्षणार्थमुक्तम् प्रजापतिःपितामहः तस्यापिजनकत्वात्

प्रपितामहस्त्वमतस्तेतुभ्यंसहस्रकृत्वःसहस्रशोनमोऽस्तु भूयोऽपिपुनरपिसहस्रकृत्वोनमोनमइति भक्तिश्रद्धाभरातिरेकेणनमस्कारेषुतृप्तिमनधिगच्छन्बहुशःप्रण
मति ॥३९॥ किंच नमइति। हेसर्व सर्वात्मन्! सर्वास्वपिदिक्षुतुभ्यं नमोऽस्तु सर्वात्मकत्वमुपपादयन्नाह अनंतवीर्यसामर्थ्ययस्य तथापिअमितोविक्रमः पराक्रमो-
यस्यसः एवंभूतस्त्वंसर्वविश्वंसम्यगंतर्बहिश्चसमाप्नोषि व्याप्नोषि सुवर्णमिवकटककुंडलादि स्वकार्यव्याप्यवर्तसेततःसर्वरूपोऽसि ॥४०॥ इदानींभगवंतंक्षमापयति
सखेतिद्वाभ्यां।त्वांप्राकृतःसखेतिमत्वाप्रसभंहठेनतिरस्कारेणयदुक्तंतत्क्षामयेत्वामित्युत्तरेणान्वयः किंतत् हेकृष्ण!हेयादव! हेसखेतिसंधिरार्षः प्रसभोक्तौहेतुः—त

नमःपुरस्तादथपृष्ठतस्तेनमोऽस्तुतेसर्वतएवसर्व ॥ अनंतवीर्यामितविक्रमस्त्वंसर्वंसमाप्नोषिततोऽसिसर्वः ॥ ४० ॥ सखेतिमत्वाप्रसभंय
दुक्तंहेकृष्णहेयादवहेसखेति ॥ अजानतामहिमानंतवेदंमयाप्रमादात्प्रणयेनवापि ॥ ४१ ॥ यच्चावहासार्थमसत्कृतोऽसिविहारशय्यास
नभोजनेषु ॥ एकोऽथवाप्यच्युततत्समक्षंतत्क्षामयेत्वामहमप्रमेयम् ॥ ४२ ॥ पिताऽसिलोकस्यचराचरस्यत्वमस्यपूज्यश्चगुरुर्गरीयान् ॥
नत्वत्समोऽस्त्यभ्यधिकःकुतोऽन्योलोकत्रयेऽप्यप्रतिमप्रभावः ॥ ४३ ॥



वमहिमानमिदंचविश्वरूपमजानता मयाप्रमादात्प्रणयेनस्नेहेनापिवायदुक्तमिति ॥४१॥ किंच यच्चेति । हेअच्युत! यच्चपरिहासार्थंक्रीडादिषुतिरस्कृतोऽसि एकः
केवलःसखीन्विनारहसिस्थितइत्यर्थः अथवातत्समक्षंतेषांपरिहसतांसखीनांसमक्षंपुरतोऽपि तत्सर्वमपराधजातंत्वांअप्रमेयमचिंत्यप्रभावंक्षामयेक्षमांकारयामि ॥
॥ ४२ ॥ अचिंत्यप्रभावमेवाह पितेति । नविद्यतेप्रतिमाउपमायस्यसोऽप्रतिमः तथाविधःप्रभावोयस्यतव हेअप्रतिमप्रभाव ! त्वमस्यचराचरस्यलोकस्यपिता

जनकोऽसि अतएवपूज्यश्चगुरुश्च गुरोरपिगरीयान्गुरुतरः अतोलोकत्रयेऽपित्वत्समएवतावदन्योनास्ति परमेश्वरस्यान्यस्याभावात्त्वत्तोऽभ्यधिकः पुनःकुतःस्यात्॥ ॥ ४३ ॥ यस्मादेवं तस्मादिति । तस्मात्त्वामीशंजगतःस्वामिनमीड्यंस्तुत्यंप्रसादयेप्रसादयामि कथं कायंप्रणिधायदंडवन्निपात्य प्रणम्यप्रकर्षेणनत्वा अतस्त्वं ममापराधंसोढुंक्षंतुमर्हसि कस्यकइव पुत्रस्यापराधंकृपयापितायथासहते सख्युर्मित्रस्यापराधंसखानिरुपाधिबंधुर्यथा प्रियश्चप्रियायाअपराधंतत्प्रियार्थंयथातद्वत् ॥ ४४ ॥ एवंक्षमापयित्वाप्रार्थयते अदृष्टपूर्वमितिद्वाभ्यां । हेदेव ! पूर्वमदृष्टंतवरूपंदृष्ट्वाहृषितोहृष्टोऽस्मि तथाभयेनचमेमनः प्रव्यथितंप्रचलितं तस्मान्मम

तस्मात्प्रणम्यप्रणिधायकायंप्रसादयेत्वामहमीशमीड्यम् ॥ पितेवपुत्रस्यसखेवसख्युःप्रियःप्रियायार्हसिदेवसोढुम् ॥ ४४ ॥ अदृष्टपूर्वंहृषितोऽस्मिदृष्ट्वाभयेनचप्रव्यथितंमनोमे ॥ तदेवमेदर्शयदेवरूपंप्रसीददेवेशजगन्निवास ॥ ४५ ॥ किरीटिनंगदिनंचक्रहस्तमिच्छामित्वांद्रष्टुमहंतथैव ॥ तेनैवरूपेणचतुर्भुजेनसहस्रबाहोभवविश्वमूर्ते ॥ ४६ ॥

व्यथानिवृत्तयेतदेवरूपंदर्शय हेदेवेश ! हेजगन्निवास ! प्रसन्नोभव ॥ ४५ ॥ तदेवरूपंविशेषयन्नाह किरीटिनमिति ! किरीटिनंगदावंतंचक्रहस्तंचत्वांद्रष्टुमिच्छामि पूर्वंयथादृष्टोऽस्मितथैव अतोहेसहस्रबाहो ! विश्वमूर्ते! इदंविश्वरूपंसंहृत्यतेनैवकिरीटादियुक्तेनचतुर्भुजेनरूपेणभवआविर्भव तदनेनश्रीकृष्णमर्जुनःपूर्वमपिकिरीटादियुक्तमेवपश्यतीतिगम्यते यत्तुपूर्वमुक्तंविश्वरूपदर्शने किरीटिनंगदिनंचक्रिणंचपश्यामीतितद्बहुकिरीटाद्यभिप्रायेण यद्वा एतावंतंकालंयंत्वांकिरीटिनंगदिनंचक्रिणंचसुप्रसन्नमपश्यं तमेवइदानींतेजोराशिंदुर्निरीक्ष्यंपश्यामीत्येवंतत्रबहुवचनव्यक्तिरित्यविरोधः ॥ ४६ ॥

एवंप्रार्थितःसन्तमाश्वासयन्श्रीभगवानुवाच मयेतित्रिभिः । हेअर्जुन ! किमितिबिभेषि यतोमयाप्रसन्नेनकृपयातवेदंपरमुत्तमंरूपंदर्शितम् आत्मनोममयोगाद्यो गंमायासामर्थ्यात् परत्वमेवाह तेजोमयंविश्वंविश्वात्मकमनंतमाद्यंच यन्ममरूपंत्वदन्येनत्वादृशाद्भक्तादन्येननपूर्वंदृष्टंतत् ॥ ४७ ॥ एतद्दर्शनमतिंदुर्लभंलब्ध्वा त्वंकृतार्थोऽसीत्याह नेति । वेदाध्ययनातिरेकेणयज्ञाध्ययनस्याभावाद्यज्ञशब्देनयज्ञविद्याःकल्पसूत्राद्यालक्ष्यंते वेदानांयज्ञविद्यानांचाध्ययनैरित्यर्थः नचदानैर्नच क्रियाभिरग्निहोत्रादिभिः नचोग्रैस्तपोभिश्चांद्रायणादिभिः एवंरूपोऽहंत्वदन्येनमनुष्यलोकेद्रष्टुंशक्यः अपितुत्वमेवकेवलंमत्प्रसादेनदृष्ट्वाकृतार्थोऽसि ॥ ४८ ॥

॥ श्रीभगवानुवाच ॥ मयाप्रसन्नेनतवार्जुनेदंरूपंपरंदर्शितमात्मयोगात् ॥ तेजोमयंविश्वमनंतमाद्यंयन्मेत्वदन्येननदृष्टपूर्वम् ॥ ४७ ॥ नवेदयज्ञाध्ययनैर्नदानैर्नचक्रियाभिर्नतपोभिरुग्रैः ॥ एवंरूपःशक्यअहंनृलोकेद्रष्टुंत्वदन्येनकुरुप्रवीर ॥ ४८ ॥ मातेव्यथामाचवि मूढभावोदृष्ट्वारूपंघोरमीदृङ्ममेदं ॥ व्यपेतभीःप्रीतमनाःपुनस्त्वंतदेवमेरूपमिदंप्रपश्य ॥ ४९ ॥ ॥ संजयउवाच ॥ ॥ इत्यर्जुनंवा सुदेवस्तथोक्त्वास्वकंरूपंदर्शयामासभूयः ॥ आश्वासयामासचभीतमेनंभूत्वापुनःसौम्यवपुर्महात्मा ॥ ५० ॥

एवमपिचेत्तवेदंरूपंघोरंदृष्ट्वाव्यथाभवतितर्हितदेवरूपंदर्शयामीत्याह मातइति । ईदृक्ईदृशंमदीयंघोरंरूपंदृष्ट्वातेव्यथामास्तु विमूढभावोविमूढत्वंचमास्तु व्यपगत भयःप्रीतमनाश्वसन्पुनस्त्वंतदेवेदंममरूपंप्रकर्षेणपश्य ॥ ४९ ॥ एवमुक्त्वाप्राक्तनमेवरूपंदर्शितवानितिसंजयउवाच इतीति । श्रीवासुदेवोऽर्जुनमेवमुक्त्वायथा पूर्वमासीत्तथैवकिरीटादियुक्तंचतुर्भुजंस्वीयंरूपंपुनर्दर्शयामास एनमर्जुनंभीतमेवप्रसन्नवपुर्भूत्वापुनरप्याश्वासितवान् महात्माविश्वरूपःकृपालुरितिवा ॥ ५० ॥

ततोनिर्भयःसन्नर्जुनउवाच दृष्ट्वेति। सचेताःप्रसन्नचित्तइदानींसंवृत्तःजातोऽस्मि प्रकृतिंस्वास्थ्यंचप्राप्तोऽस्मि शेषंस्पष्टम् ॥ ५१ ॥ स्वकृतस्यानुग्रहस्यातिदुर्लभ त्वंदर्शयन्श्रीभगवानुवाच सुदुर्दर्शमिति। यन्ममविश्वरूपंत्वंदृष्टवानसि इदंसुदुर्दर्शमत्यंतंद्रष्टुमशक्यम् अतोदेवाअप्यस्यरूपस्यसर्वदादर्शनमिच्छंति नकेवलं पुनरिदंपश्यंति ॥ ५२ ॥ तत्रहेतुः नाहमितिस्पष्टार्थः ॥ ५३ ॥ केनोपायेनतर्हिद्रष्टुंशक्यइति तत्राह भक्त्येति। अनन्ययामदेकनिष्ठयाभक्त्यातुएवंभूतोविश्व

॥ अर्जुनउवाच ॥ दृष्ट्वेदंमानुषंरूपंतवसौम्यंजनार्दन ॥ इदानीमस्मिसंवृत्तःसचेताःप्रकृतिंगतः ॥ ५१ ॥ श्रीभगवानुवाच ॥ सुदुर्दर्शमिदंरूपंदृष्टवानसियन्मम ॥ देवाअप्यस्यरूपस्यनित्यंदर्शनकांक्षिणः ॥ ५२ ॥ नाहंवेदैर्नतपसानदानेननचेज्यया ॥ शक्यएवंविधोद्रष्टुंदृष्टवानसिमांयथा ॥ ५३ ॥ भक्त्यात्वनन्ययाशक्यअहमेवंविधोऽर्जुन ॥ ज्ञातुंद्रष्टुंचतत्त्वेनप्रवेष्टुंचपरंतप ॥ ५४ ॥ मत्कर्मकृन्मत्परमोमद्भक्तःसंगवर्जितः ॥ निर्वैरःसर्वभूतेषुयःसमामेतिपांडव ॥ ५५ ॥ इतिश्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायां योगशास्त्रेश्रीकृष्णार्जुनसंवादेविश्वरूपदर्शनयोगोनामैकादशोऽध्यायः ॥ ११ ॥

रूपोऽहंतत्त्वेनपरमार्थतोज्ञातुंशक्यःशास्त्रतःद्रष्टुंप्रत्यक्षतःप्रवेष्टुंचतादात्म्येनशक्यः नान्यैरुपायैः॥५४॥अतःसर्वशास्त्रसारंपरमंरहस्यंशृण्वित्याह मत्कर्मकृदिति। मदर्थंकर्मकरोतीतिमत्कर्मकृत् अहमेवपरमःपुरुषार्थोयस्यसः ममैवभक्तोमामेवाश्रितः पुत्रादिषुसंगवर्जितोनिर्वैरश्चसर्वभूतेषु एवंभूतोयःसमांप्राप्नोति नान्यइति ॥ ५५ ॥ 'देवैरपिसुदुर्दर्शंतपोज्ञानादिकोटिभिः ॥ भक्तायभगवानेवंविश्वरूपमदर्शयत् ॥ १ ॥' इतिसुबोधिन्यांटीकायामेकादशोऽध्यायः ॥ ११ ॥

'निर्गुणोपासनस्यैवंसगुणोपासनस्यच ॥ श्रेयःकतरदित्येवंनिर्णेतुंद्वादशोद्यमः ॥ १ ॥' पूर्वाध्यायांते मत्कर्मकृन्मत्परमइत्येवंभक्तिनिष्ठस्यश्रेष्ठत्वमुक्तम् कौंतेय प्रतिजानीहीत्यादिना तत्रतस्यैवश्रेष्ठत्वंवर्णितं तथा तेषांज्ञानीनित्ययुक्तएकभक्तिर्विशिष्यतइत्यादिनासर्वंज्ञानप्लवेनैववृजिनंसंतरिष्यसीत्यादिनाचज्ञाननिष्ठस्य श्रेष्ठत्वमुक्तम् एवमुभयोःश्रैष्ठ्येऽपिविशेषजिज्ञासयाभगवंतंप्रतिअर्जुनउवाच एवमिति । एवंसर्वकर्मार्पणादिनासततंयुक्तास्त्वन्निष्ठाःसंतोयेभक्तास्त्वांविश्वरूपंसर्वज्ञंसर्वशक्तिंपर्युपासतेध्यायंति येचाप्यक्षरंब्रह्मअव्यक्तंनिर्विशेषंउपासते तेषांउभयेषांमध्ये अतिशयेनकेयोगविदः श्रेष्ठाइत्यर्थः ॥ १ ॥ तत्रप्रथमाः श्रेष्ठाइत्यु

॥ अर्जुनउवाच ॥ एवंसततयुक्तायेभक्तास्त्वांपर्युपासते ॥ येचाप्यक्षरमव्यक्तंतेषांकेयोगवित्तमाः ॥ १ ॥ श्रीभगवानुवाच ॥
मय्यावेश्यमनोयेमानित्ययुक्ताउपासते ॥ श्रद्धयापरयोपेतास्तेमेयुक्ततमामताः ॥ २ ॥ येत्वक्षरमनिर्देश्यमव्यक्तंपर्युपासते ॥ सर्वत्र
गमचिंत्यंचकूटस्थमचलंध्रुवम् ॥ ३ ॥ सन्नियम्येंद्रियग्रामंसर्वत्रसमबुद्धयः ॥ तेप्राप्नुवंतिमामेवसर्वभूतहितेरताः ॥ ४ ॥

त्तरंश्रीभगवानुवाच मयीति । मयिपरमेश्वरेसर्वज्ञत्वादिगुणविशिष्टेमनआवेश्यैकाग्रंकृत्वा नित्ययुक्ताः मदर्थकर्मानुष्ठानादिनामन्निष्ठाःसंतःश्रेष्ठयाश्रद्धयायुक्तायेमामाराधयंतितेयुक्ततमाममाभिमताः ॥ २ ॥ तर्हिइतरेकिंनश्रेष्ठाइत्यतआह येत्विति द्वाभ्याम् । येत्वक्षरंपर्युपासतेध्यायंतितेऽपिमामेवप्राप्नुवंतीतिद्वयोरन्वयः अक्षरस्यलक्षणमानिर्देश्यमित्यादि अनिर्देश्यशब्देननिर्देष्टुमशक्यम् यतोऽव्यक्तंरूपादिहीनं सर्वत्रगंसर्वव्यापिअव्यक्तत्वादेवाचिंत्यं कूटस्थंकूटेमायाप्रपंचेस्थितम् अधिष्ठानत्वेनस्थितं अचलंस्पंदनरहितम् अतएवध्रुवंनित्यम् वृद्ध्यादिरहितम् ॥ ३ ॥ संनियम्येति स्पष्टम् ॥ ४ ॥

ननुचतेऽपित्वामेवप्राप्नुवंति तर्हीतरेषांयुक्ततमत्वंकुतइत्यपेक्षायांक्लेशाक्लेशकृतंविशेषमाह क्लेशइतित्रिभिः । अव्यक्तेनिर्विशेषेअक्षरेआसक्तंचेतोयेषांतेषांक्लेशोऽधि कतरः हियस्माद्व्यक्तविषयागतिर्निष्ठादेहाभिमानिभिःदुखंयथाभवत्येवमवाप्यतेदेहाभिमानिनांनित्यंप्रत्यक्प्रवणत्वस्यदुर्घटत्वादितिभावः ॥ ५ ॥ मद्भक्ता नांमत्प्रसादादनायासतएवसिद्धिर्भवतीत्याह येत्वितिद्वाभ्याम् । मयिपरमेश्वरेसर्वाणिकर्माणिसंन्यस्यसमर्प्यमत्पराभूत्वामांध्यायंतःअनन्येननाविद्यते अन्योभजनी योयस्मिन्तेनैव एकांतभक्तियोगेनोपासतइत्यर्थः ॥ ६ ॥ तेषामिति । एवंमयिआवेशितंचेतोयैस्तेषांमृत्युयुक्तात्संसारसागरादहंसम्यगुद्धर्ताअचिरेणैवभवामि

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ॥ अव्यक्ताहिगतिर्दुःखंदेहवद्भिरवाप्यते ॥५॥ येतुसर्वाणिकर्माणिमयिसंन्यस्यमत्पराः ॥
अनन्येनैवयोगेनमांध्यायंतउपासते ॥ ६ ॥ तेषामहंसमुद्धर्तामृत्युसंसारसागरात् ॥ भवामिनचिरात्पार्थमय्यावेशितचेतसाम् ॥ ७ ॥
मय्येवमनआधत्स्वमयिबुद्धिंनिवेशय ॥ निवसिष्यसिमय्येवअतऊर्ध्वंनसंशयः ॥ ८ ॥ अथचित्तंसमाधातुंनशक्नोषिमयिस्थिरम् ॥
अभ्यासयोगेनततोमामिच्छाप्तुंधनंजय ॥ ९ ॥

॥ ७ ॥ यस्मादेवंतस्मात् मय्येवेति । मय्येवसंकल्पविकल्पात्मकंमनआधत्स्वस्थिरीकुरु बुद्धिमपिव्यवसायात्मिकांमय्येवानिवेशय.एवंकुर्वन्मत्प्रसादेनलब्धज्ञानः सन्नतऊर्ध्वंदेहांतेमरणानंतरंमय्येवनिवसिष्यसि निवत्स्यसि मदात्मनावासंकरिष्यासि नात्रसंशयः तथाचश्रुतिः–"देहांतेदेवस्तारकंपरब्रह्मव्याचष्टे"इति ॥ ८ ॥ अत्राशक्तंप्रतिसुगमापायमाह अथेति । स्थिरंयथाभवत्येवंमायिचित्तंधारयितुंयदिशक्तोनमवसितर्हिविक्षिप्तंचित्तंपुनःप्रत्याहृत्यममानुस्मरणलक्षणोयोगाभ्या सस्तेनमांप्राप्तुमिच्छप्रयत्नंकुरु ॥ ९ ॥

यदिपुनर्नैवंतत्राह अभ्यासइति। अभ्यासेऽपियद्यशक्तोऽसितर्हिमत्प्रीत्यर्थानियानिकर्माणिएकादश्युपवासव्रतचर्यानामसंकीर्तनादीनितदनुष्ठानमेवपरमंयस्यताद्दशो भव एवंभूतानिकर्माण्यपिमदर्थंकुर्वन्मोक्षंप्राप्स्यासि ॥१०॥ अत्यंतंभगवद्धर्मपरिनिष्ठायामशक्तस्यपक्षांतरमाह अथैतदपीति। अथैतदपिकर्तुमशक्तोऽसितर्हिमद्योगं मदेकशरणत्वमाश्रितःसर्वेषांदृष्टादृष्टार्थानामावश्यकानांचाग्निहोत्रादिकर्मणांफलानिनियतचित्तोभूत्वापरित्यज्य एतदुक्तंभवति मयातावदीश्वराज्ञयायथाशक्तिकर्माणिकर्तव्यानिफलंपुनर्दृष्टमदृष्टंवापरमेश्वराधीनमित्येवंमयिभारमारोप्यफलासक्तिंपरित्यज्यवर्तमानोमत्प्रसादेनकृतार्थोभविष्यसीतितात्पर्यम् ॥ ११ ॥ तमिमंफल

अभ्यासेऽप्यसमर्थोऽसिमत्कर्मपरमोभव ॥ मदर्थमपिकर्माणिकुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥ अथैतदप्यशक्तोऽसिकर्तुंमद्योगमाश्रितः ॥ सर्वकर्मफलत्यागंततःकुरुयतात्मवान् ॥११॥ श्रेयोहिज्ञानमभ्यासाज्ज्ञानाद्ध्यानंविशिष्यते ॥ ध्यानात्कर्मफलत्यागस्त्यागाच्छांतिरनंतरम् ॥ १२ ॥ अद्वेष्टासर्वभूतानांमैत्रःकरुणएवच ॥ निर्ममोनिरहंकारःसमदुःखसुखःक्षमी ॥ १३ ॥

त्यागंस्तौति श्रेयोहीति। सम्यग्ज्ञानरहितादभ्यासाद्युक्तिसहितोपदेशपूर्वकंज्ञानंश्रेष्ठं तस्मादपितत्पूर्वकंध्यानंश्रेष्ठं "ततस्तुतंपश्यतिनिष्कलंध्यायमान"इतिश्रुतेः तस्मादपिउक्तलक्षणःकर्मफलत्यागःश्रेष्ठः तस्मादेवंभूतात्कर्मफलत्यागात्कर्मसुतत्फलेषुचासक्तिनिवृत्त्यामत्प्रसादेनचसमनंतरमेवसंसारशांतिर्भवति ॥ १२ ॥ एवंभूतस्यभक्तस्यक्षिप्रमेवपरमेश्वरप्रसादहेतून्धर्मानाह अद्वेष्टेत्यष्टभिः सर्वभूतानांयथायथमद्वेष्टामैत्रः करुणश्च उत्तमेषुद्वेषशून्यः समेषुमित्रतयावर्ततइति मैत्रः हीनेषुकृपालुरित्यर्थः निर्ममोनिरहंकारश्चकृपालुत्वादेवान्यैः सहसमेदुःखसुखेयस्यसः क्षमीक्षमावान् ॥ १३ ॥

संतुष्टइति। सततंलाभेअलाभेचसंतुष्टःप्रसन्नचित्तःयोगीअप्रमत्तःयतात्मासंयतस्वभावः दृढोमद्विषयोनिश्चयोयस्यमय्यर्पितेमनोबुद्धीयेन एवंभूतोयोमद्भक्तःसमे प्रियः ॥१४॥ किंच यस्मादिति। यस्मात्सकाशाल्लोकोजनोनोद्विजतेभयशंकयासंक्षोभंनप्राप्नोति यश्चलोकान्नोद्विजते यश्चस्वाभाविकैर्हर्षादिभिर्मुक्तः तत्रहर्षः स्वस्येष्टार्थलाभेउत्साहः अमर्षःपरस्यलाभेऽसहनम भयंत्रासः उद्वेगोभयादिनिमित्तचित्तक्षोभःएतैर्विमुक्तोयोमद्भक्तःसमेप्रियः॥१५॥किंच अनपेक्षइति। अनपेक्षो यदृच्छोपस्थितेऽप्यर्थेनिःस्पृहः शुचिर्बाह्याभ्यंतरशौचसंपन्नः दक्षोनलसः उदासीनःपक्षपातरहितः गतव्यथआधिशून्यः सर्वान्दृष्टादृष्टार्थानारंभानुद्यमान्परित्यक्तुं

संतुष्टःसततंयोगीयतात्मदृढनिश्चयः ॥ मय्यर्पितमनोबुद्धिर्योमद्भक्तःसमेप्रियः ॥ १४ ॥ यस्मान्नोद्विजतेलोकोलोकान्नोद्विजतेचयः ॥
हर्षामर्षभयोद्वेगैर्मुक्तोयःसचमेप्रियः ॥ १५ ॥ अनपेक्षःशुचिर्दक्षउदासीनोगतव्यथः ॥ सर्वारंभपरित्यागीयोमद्भक्तःसमेप्रियः ॥ १६ ॥
योनहृष्यतिनद्वेष्टिनशोचतिनकांक्षति ॥ शुभाशुभपरित्यागीभक्तिमान्यःसमेप्रियः ॥ १७ ॥ समःशत्रौचमित्रेचतथामानापमान
योः ॥ शीतोष्णसुखदुःखेषुसमःसंगविवर्जितः ॥ १८ ॥

शीलंयस्यसः एवंभूतःसन्योमद्भक्तःसमेप्रियः ॥१६॥ किंच येनेति। प्रियंप्राप्ययोनहृष्यति अप्रियंप्राप्ययोनद्वेष्टि इष्टार्थनाशेसतियोनशोचति अप्राप्तमर्थंयोने कांक्षति शुभाशुभेपुण्यपापेपरित्यक्तुंशीलंयस्यसएवंभूतोभूत्वा योमद्भक्तिमान्समेप्रियः ॥ १७ ॥ किंच समइति। शत्रौचमित्रेचसमएकरूपः मानापमानयोरपित थासमएव हर्षविषादशून्यइत्यर्थः शीतोष्णयोःसुखदुःखयोश्चसमः संगविवर्जितः क्वचिदप्यनासक्तः ॥ १८ ॥

तुल्यइति।तुल्येनिंदास्तुतीयस्य मौनीसंयतवाक् येनकेनचिद्यथालब्धेनसंतुष्टः अनिकेतोनियतवासशून्यः स्थिरमतिःव्यवस्थिताचित्तः एवंभूतोमद्भक्तिमान्यः समेप्रियोनरः ॥१९॥ उक्तंधर्मजातंसफलमुपसंहरति येत्विति । यथोक्तमुक्तप्रकारंधर्मएवामृतममृतत्वसाधनत्वात् धर्म्यामृतमिदमितिकेचित्पठंति तद्येउपासते अनुतिष्ठंति श्रद्धांकुर्वंतोमत्परमाश्चसंतोमद्भक्ताः तेऽतीवमेप्रियाइति ॥ २०॥ 'दुःखमव्यक्तवर्त्मैतद्बहुविघ्नमतोबुधः ॥ सुखंकृष्णपदांभोजभक्तिसत्पथमाभजेत् ॥ १ ॥' इतिसुबोधिन्यांटीकायांद्वादशोऽध्यायः ॥ १२ ॥ 'भक्तानामहमुद्धर्तासंसारादित्यवादियत्॥त्रयोदशेऽथतत्सिद्ध्यैतत्त्वज्ञानमुदीर्यते ॥ १ ॥' तेषामहं

तुल्यनिंदास्तुतिर्मौनीसंतुष्टोयेनकेनचित् ॥ अनिकेतःस्थिरमतिर्भक्तिमान्मेप्रियोनरः ॥ १९ ॥ येतुधर्मामृतमिदंयथोक्तंपर्युपासते ॥
श्रद्दधानामत्परमाभक्तास्तेऽतीवमेप्रियाः ॥ २० ॥ इतिश्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रेश्रीकृष्णार्जुनसंवादेभक्ति
योगोनामद्वादशोऽध्यायः॥१२॥ ॥ श्रीभगवानुवाच॥इदंशरीरंकौंतेयक्षेत्रमित्यभिधीयते॥एतद्योवेत्तितंप्राहुःक्षेत्रज्ञइतितद्विदः ॥१॥

समुद्धर्तामृत्युसंसारसागरात् भवामीतिपूर्वप्रतिज्ञातं तन्नचात्मज्ञानंविनासंसारादुद्धरणंसंभवति इतितत्त्वज्ञानोपदेशार्थंप्रकृतिपुरुषविवेकाध्यायआरभ्यते तत्रयत्स प्तमेऽध्यायेअपरापराचेतिप्रकृतिद्वयमुक्तं तयोरविवेकाज्जीवभावमापन्नस्याचिदंशस्यायंसंसारः याभ्यांचजीवोपभोगार्थमीश्वरःसृष्ट्यादिषुप्रवर्तते तदेवप्रकृतिद्वयं क्षेत्रक्षेत्रज्ञशब्दवाच्यंपरस्परंविविक्तंतत्त्वतोनिरूपयिष्यन् श्रीभगवानुवाच इदमिति। इदंभोगायतनंक्षेत्रमित्यभिधीयते संसारस्यप्ररोहभूमित्वात् एतद्योवेत्ति अहं ममेतिमन्यते तंक्षेत्रज्ञइतिप्राहुः कृषीवलवत्तत्फलभोक्तृत्वात्तद्विदःक्षेत्रक्षेत्रज्ञयोर्विवेकज्ञाः ॥ १ ॥

तदेवंसंसारिणःस्वरूपमुक्तं इदानींतस्यैवपारमार्थिकमसंसारिस्वरूपमाह क्षेत्रज्ञमिति । तंचक्षेत्रज्ञंसंसारिणंजीवंवस्तुतःसर्वक्षेत्रेष्वनुगतंमामेवाविद्धि तत्त्वमसीति श्रुत्युपलक्षितेनचिदंशेनमद्रूपस्योक्तत्वात् आदरार्थमेवतज्ज्ञानंस्तौति क्षेत्रक्षेत्रज्ञयोर्यद्वैलक्षण्येनज्ञानंतदेवमोक्षहेतुत्वान्ममज्ञानंमतं अन्यत्तुवृथापांडित्यं बंधहेतुत्वादित्यर्थः तदुक्तं—'तत्कर्मयन्नबंधायसाविद्यायाविमुक्तये ॥ आयासायापरंकर्मविद्यान्याशिल्पनैपुणम्'इति ॥ २ ॥ अत्रयद्यपिचतुर्विंशतिभेदैर्भिन्नाप्रकृतिःक्षेत्रमित्यभिप्रेतं तथापिदेहरूपेणपरिणतायामेत्रतस्यामहंभावेनाविवेकःस्फुटइतितद्विवेकार्थमिदंशरीरंक्षेत्रमित्याद्युक्तं तदेतत्प्रपंचयिष्यन्प्रतिजानीते तत्क्षेत्रमिति । यदुक्तंमया तत्क्षेत्रं यत्स्वरूपतोजडंदृश्यादिस्वभावं यादृक्यादृशंचेच्छादिधर्मकं यद्विकारियैरिंद्रियादिविकारैर्युक्तंयतश्चप्रकृतिपुरुषसंयोगाद्भवति यदिति यैः

क्षेत्रज्ञंचापिमांविद्धिसर्वक्षेत्रेषुभारत ॥ क्षेत्रक्षेत्रज्ञयोर्ज्ञानंयत्तज्ज्ञानंमतंमम ॥ २ ॥ तत्क्षेत्रंयच्चयादृक्चयद्विकारियतश्चयत ॥ सचयोयत्प्रभावश्चतत्समासेनमेशृणु ॥ ३ ॥ ऋषिभिर्बहुधागीतंछन्दोभिर्विविधैःपृथक् ॥ ब्रह्मसूत्रपदैश्चैवहेतुमद्भिर्विनिश्चितैः ॥ ४ ॥

स्थावरजंगमादिभेदैर्भिन्नमित्यर्थः सचक्षेत्रज्ञोयःस्वरूपतःयत्प्रभावश्च अचिंत्यैश्वर्ययोगेनयैःप्रभावैःसंपन्नःतत्सर्वं संक्षेपतोमत्तःशृणु ॥ ३ ॥ कैर्विस्तरेणोक्तस्यायंसंक्षेपइत्यपेक्षायामाह ऋषिभिरिति । ऋषिभिर्वसिष्ठादिभिर्योगशास्त्रेषुध्यानधारणादिविषयत्वेनवैराजादिरूपेणबहुधागीतंनिरूपितम् विविधैर्विचित्रैश्चनित्यनैमित्तिककाम्यविषयैश्छंदोभिर्वेदैर्नानायजनीयदेवतादिरूपेणगीतं ब्रह्मणःसूत्रैःपदैश्च ब्रह्मसूत्र्यतेसूच्यते एभिरितिब्रह्मसूत्राणि " यतोवाइमानिभूतानिजायंते " इत्यादीनितटस्थलक्षणपराण्युपनिषद्वाक्यानि तथाचब्रह्मपद्यते गम्यतेसाक्षाज्ज्ञायतेएभिरितिपदानिस्वरूपलक्षणपराणि सत्यंज्ञानमनंतंब्रह्मेत्यादीनितैश्चबहुधागीतं

किंच हेतुमद्भिः "सदेवसौम्येदमग्रआसीत्कथमसतःसज्जायेत" इति तथा "कोह्येवान्यात्कःप्राण्यात् यदेषआकाश आनंदोनस्यात् एषह्येवानंदयति" इत्यादियु
क्तिमद्भिः अन्यात्अपानचेष्टांकःकुर्यात् प्राण्यात्प्राणानांव्यापारंकोवाकुर्यादितिपदयोरर्थः विनिश्चितैरुपक्रमोपसंहारैकवाक्यतया असंदिग्धार्थप्रतिपादकैरित्यर्थः
तदेवमेतैर्विस्तरेणोक्तंदुःसंग्रहंसंक्षेपतस्तुभ्यंकथयिष्यामितच्छृण्वित्यर्थः।यद्वा "अथातोब्रह्मजिज्ञासा" इत्यादीनिब्रह्मसूत्राणि गृह्यंतेतान्येव ब्रह्मपद्यतेनिश्चीयतेएभिरि
तिपदानि तैर्हेतुमद्भिः "ईक्षतेर्नाशब्दं।आनंदमयोऽभ्यासात्" इत्यादियुक्तिमद्भिर्विनिश्चितार्थैः शेषंसमानम्॥४॥तत्रक्षेत्रस्वरूपमाह महाभूतानितिद्वाभ्यां।महाभूता
निभूम्यादीनिपंच अहंकारस्तत्कारणभूतःबुद्धिर्विज्ञानात्मकंमहत्तत्त्वं अव्यक्तंमूलप्रकृतिः इंद्रियाणिबाह्यानिदश श्रोत्रत्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्रांघ्रिपायवइति

महाभूतान्यहंकारोबुद्धिरव्यक्तमेवच ॥ इंद्रियाणिदशैकंचपंचचेंद्रियगोचराः ॥ ५ ॥ इच्छाद्वेषःसुखंदुःखंसंघातश्चेतनाधृतिः ॥ एत
त्क्षेत्रंसमासेनसविकारमुदाहृतम् ॥ ६ ॥ अमानित्वमदंभित्वमहिंसाक्षांतिरार्जवम् ॥ आचार्योपासनंशौचंस्थैर्यमात्मविनिग्रहः ॥ ७ ॥

एकंचमनःइंद्रियगोचराश्चपंचतन्मात्ररूपाएवशब्दादयःआकाशादिविशेषगुणतयाव्यक्ताःसंतइंद्रियविषयाःपंच तदेवंचतुर्विंशतितत्त्वान्युक्तानि ॥५॥ इच्छेति।
इच्छादयःप्रसिद्धाः संघातःशरीरं चेतनाज्ञानात्मिकामनोवृत्तिः धृतिर्धैर्यं एतेइच्छादयोदृश्यत्वान्नात्मधर्माअपितुमनोधर्माएव अतःक्षेत्रांतःपातिनएव उपलक्षणं
चैतत्संकल्पादीनां तथाचश्रुतिः—"कामः संकल्पोविचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वंमनएवेति" अनेनचयादृगितिप्रतिज्ञाताःक्षेत्रधर्मादर्शिताः
एतत्क्षेत्रंसविकारंइंद्रियादिविकारसहितंसंक्षेपेणतुभ्यंमयोक्तमितिक्षेत्रोपसंहारः ॥ ६ ॥ इदानीमुक्तलक्षणात्क्षेत्राद्विविक्ततयाज्ञेयंशुद्धंक्षेत्रज्ञंविस्तरेणवर्णयिष्यंस्त
ज्ज्ञानसाधनान्याह अमानित्वमितिपंचभिः अमानित्वंस्वगुणश्लाघाराहित्यम् अदंभित्वंदंभराहित्यं अहिंसापरपीडावर्जनं क्षांतिःसहिष्णुत्वम् आर्जवमवक्रता

आचार्योपासनंसद्गुरुसेवा शौचंबाह्यमाभ्यंतरंच तत्रबाह्यंमृज्जलादिना आभ्यंतरंचरागादिमलक्षालनम् तथाचस्मृतिः । 'शौचंतुद्विविधंप्रोक्तंबाह्यमाभ्यंतरंतथा ॥ मृज्जलाभ्यांस्मृतंबाह्यंभावशुद्धिस्तथांतरम्' इति स्थैर्यसन्मार्गेप्रवृत्तस्यतदेकनिष्ठता आत्मविनिग्रहःशरीरसंयमःएतज्ज्ञानमितिप्रोक्तमितिपंचमेनान्वयः ॥ ७ ॥ किंच इंद्रियार्थेष्विति । जन्मादिषुदुःखदोषयोरनुदर्शनम् पुनःपुनरालोचनम् दुःखस्वरूपस्यदोषस्यानुदर्शनमितिवास्पष्टमन्यत् ॥ ८ ॥ किंच असक्तिरिति । असक्तिःपुत्रादिपदार्थेषुप्रीतित्यागःअनभिष्वंगःपुत्रादीनांसुखेदुःखेवाअहमेवसुखीदुःखीचेत्यध्यासातिरेकाभावः इष्टानिष्टयोरुपपत्तिषुप्राप्तिषुनित्यंसर्वदा समचित्तत्वम् ॥ ९ ॥ किंच मयिचेति । मयिपरमेश्वरेअनन्ययोगेनसर्वात्मदृष्ट्या अव्यभिचारिणीएकांतभक्तिः विविक्तःशुद्धचित्तप्रसादकरः तंदेशंसेवितुंशीलं

इंद्रियार्थेषुवैराग्यमनहंकारएवच ॥ जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥ असक्तिरनभिष्वंगःपुत्रदारगृहादिषु ॥ नित्यं चसमचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥ मयिचानन्ययोगेनभक्तिरव्यभिचारिणी ॥ विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥ अध्यात्मज्ञाननित्यत्वंतत्त्वज्ञानार्थदर्शनम् ॥ एतज्ज्ञानमितिप्रोक्तमज्ञानंयदतोऽन्यथा ॥ ११ ॥

यस्यतस्यभावस्तत्त्वम् प्राकृतानांजनानांसंसदिसभायांअरतीरत्यभावः ॥ १० ॥ किंच अध्याऽत्मेति । आत्मानमधिकृत्यवर्तमानंमध्यात्मज्ञानम् तस्मिन्नित्यत्वंनित्यभावः त्वंपदार्थशुद्धिनिष्ठत्वमित्यर्थः तत्त्वज्ञानस्यार्थःप्रयोजनंमोक्षःतस्यदर्शनं मोक्षस्यसर्वोत्कृष्टतालोचनमित्यर्थः एतदमानित्वमदंभित्वमित्यादिविंशतिसंख्यात्मकंयदुक्तमेतज्ज्ञानमितिप्रोक्तम् ज्ञानसाधनत्वात् अतोऽन्यथास्माद्विपरीतंमानित्वादियदेतदज्ञानमितिप्रोक्तंवसिष्ठादिभिः ज्ञानविरोधित्वात् अतःसर्वथात्याज्यमित्यर्थः ॥ ११ ॥

एभिःसाधनैर्यज्ज्ञेयंतदाह ज्ञेयमितिषड्भिः। यज्ज्ञेयंतत्प्रवक्ष्यामि श्रोतुरादरसिद्धयेज्ञानफलंदर्शयति यद्वक्ष्यमाणंज्ञात्वाऽमृतंमोक्षंप्राप्नोति किंतत् अनादिमत् आदि मन्नभवतीत्यनादिमत् परंनिरतिशयंब्रह्म अनादीत्येतावतैवबहुव्रीहिणाअनादिमत्त्वेसिद्धेऽपिपुनर्मतुपःप्रयोगश्छांदसः यद्वा अनादीतिमत्परमितिचपदद्वयं मम विष्णोः परंनिर्विशेषंरूपंब्रह्मेत्यर्थः तदेवाह नसत्तन्नचासदुच्यते विधिमुखेनप्रमाणस्यविषयःसच्छब्देनोच्यते निषेधस्यविषयस्त्वसच्छब्देनोच्यते इदंतुतदुभय विलक्षणंअविषयत्वादित्यर्थः ॥ १२ ॥ नन्वेवंब्रह्मणःसदसद्विलक्षणत्वेसति सर्वंखल्विदंब्रह्म ब्रह्मैवेदंसर्वमित्यादिश्रुतिभिर्विरुद्ध्येतेत्याशंक्य "पराऽस्यशक्ति र्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाच" इत्यादिश्रुतिप्रसिद्धचाऽचिंत्यशक्त्यासर्वात्मतांतस्यदर्शयन्नाह सर्वतइतिपंचभिः सर्वतःसर्वत्रपाणयः पादाश्चयस्यतत्

ज्ञेयंयत्तत्प्रवक्ष्यामियज्ज्ञात्वाऽमृतमश्नुते ॥ अनादिमत्परंब्रह्मनसत्तन्नासदुच्यते ॥ १२ ॥ सर्वतःपाणिपादंतत्सर्वतोऽक्षिशिरोमुखम् ॥ सर्व तःश्रुतिमल्लोकेसर्वमावृत्यतिष्ठति ॥ १३ ॥ सर्वेंद्रियगुणाभासंसर्वेंद्रियविवर्जितम् ॥ असक्तंसर्वभृच्चैवनिर्गुणंगुणभोक्तृच ॥ १४ ॥

सर्वतोऽक्षीणिशिरांसिमुखानिचयस्यतत् सर्वतःश्रुतिमच्छ्रवणेंद्रियैर्युक्तंसल्लोकेसर्वमावृत्यव्याप्यतिष्ठति सर्वप्राणिप्रवृत्तिभिःपाण्यादिभिरुपाधिभिःसर्वव्यवहा रास्पदत्वेतिष्ठतीत्यर्थः ॥१३॥किंच सर्वेंद्रियेति। सर्वेषांचक्षुरादीनामिंद्रियाणांगुणेषुरूपाद्याकारासुवृत्तिषुतत्तदाकारेणभासतइतितथा सर्वाणींद्रियाणिगुणांश्चतत्तद्वि षयानाभासयतीतिवा सर्वेंद्रियैर्विवर्जितंच तथाचश्रुतिः—"अपाणिपादोजवनोग्रहीतापश्यत्यचक्षुःसशृणोत्यकर्णः" इत्यादि असक्तंसंगशून्यम् तथापिसर्वंबिभर्तीति सर्वभृत् सर्वस्याधारभूतम् तदेवनिर्गुणंसत्त्वादिगुणरहितम् गुणभोक्तृगुणानांसत्त्वादीनांभोक्तृचपालकम् ॥ १४ ॥

किंच बहिरिति। भूतानांचराचराणांस्वकार्याणांबहिश्चांतश्चतदेवसुवर्णमिवकटककुंडलादीनाम् जलतरंगाणामन्तर्बहिश्चजलमिव अचरंस्थावरंचरंजंगमंयद्भूतजातं तदेव कारणात्मकत्वात्कार्यस्य एवमपिसूक्ष्मत्वाद्रूपादिहीनत्वात्तदविज्ञेयमिदंतादितिस्पष्टज्ञानार्हंनभवति अतएवाविदुषांयोजनलक्षांतरितमिवदूरस्थंचसविकारायाः प्रकृतेःपरत्वात् विदुषांपुनःप्रत्यगात्मत्वादंतिकेच तन्नित्यंसन्निहितम् तथाचमंत्रः-"यदेजतितन्नैजतितद्दूरेतद्वदंतिके तदन्तरस्यसर्वस्यतदुसर्वस्यास्यबाह्यतः" इति एजतिचलतिनैजतिनचलतितत्उअदंतिकेइतिच्छेदः ॥१५॥ किंच अविभक्तमिति। भूतेषुस्थावरजंगमात्मकेषुअविभक्तंकारणात्मनाअभिन्नं कार्यात्मनाविभक्तंचभिन्नमिवावस्थितंच समुद्राज्जातंफेनादिसमुद्रादन्यन्नभवति तत्पूर्वोक्तंस्वरूपंचज्ञेयम् भूतानांभर्तृचपोषकंस्थितिकाले प्रलयकालेचग्रसिष्णु ग्रसनशीलं

बहिरंतश्चभूतानामचरंचरमेवच ॥ सूक्ष्मत्वात्तदविज्ञेयंदूरस्थंचांतिकेचतत् ॥ १५ ॥ अविभक्तंचभूतेषुविभक्तमिवचास्थितम् ॥ भूतभर्तृचतज्ज्ञेयंग्रसिष्णुप्रभविष्णुच ॥ १६ ॥ ज्योतिषामपितज्ज्योतिस्तमसःपरमुच्यते ॥ ज्ञानंज्ञेयंज्ञानगम्यंहृदिसर्वस्यविष्ठितम्॥१७॥

सृष्टिकालेचप्रभविष्णु नानाकार्यात्मनाप्रभवशीलम् ॥१६॥ किंच ज्योतिषामिति। ज्योतिषांचंद्रादित्यादीनामापितज्ज्योतिःप्रकाशकं ततो"येनसूर्यस्तपतितेजसेद्धः नतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोऽयमग्निः तमेवभांतमनुभातिसर्वंतस्यभासासर्वमिदंविभाति" इत्यादिश्रुतेः अतएवतमसोऽज्ञानात्परं तेनासंस्पृष्टमुच्यते "आदित्यवर्णंतमसःपरस्तात्" इत्यादिश्रुतेः ज्ञानंचतदेव बुद्धिवृत्तावभिव्यक्तं तदेवरूपाद्याकारेणज्ञेयंच ज्ञानेनगम्यंच अमानित्वमदंभित्वमित्यादिलक्षणेनपूर्वोक्तेनज्ञानसाधनेनप्राप्यमित्यर्थः ज्ञानगम्यंविशिनष्टिसर्वस्यप्राणिमात्रस्यहृदिविष्ठितंविशेषेणाप्रच्युतस्वरूपेणनियंतृतयास्थितम् धिष्ठितमितिपाठेऽधिष्ठायस्थितामित्यर्थः ॥ १७ ॥

उक्तंक्षेत्रादिकमधिकारिफलसहितमुपसंहरति इतीति । इत्येवंक्षेत्रंमहाभूतादिधृत्यंतंतथाज्ञानंच अमानित्वादितत्त्वज्ञानार्थदर्शनांतम् ज्ञेयंच अनादिमत्परंब्रह्मे त्यादिविष्ठितमित्यंतम् वसिष्ठादिभिर्विस्तरेणोक्तंसर्वमपिमयासंक्षेपेणोक्तम् एतच्चपूर्वाध्यायोक्तलक्षणोमद्भक्तोविज्ञायमद्भावायब्रह्मत्वायउपपद्यतेयोग्योभवति ॥ १८ ॥ तदेवंतत्क्षेत्रंयच्चयादृक्चेत्येतावत्प्रपंचितम इदानींतुयद्विकारियतश्चयत् सचयोयत्प्रभावश्चेत्येतत्पूर्वंप्रतिज्ञातमेवंप्रकृतिपुरुषयोःसंसारहेतुत्वकथनेन प्रपंचयति प्रकृतिमितिपंचभिःतत्रप्रकृतिपुरुषयोरादिमत्त्वेतयोरपिप्रकृत्यंतरेणभाव्यमित्यनवस्थापत्तिःस्यात् अतस्तावुभावनादीविद्धि अनादेरीश्वरस्यशक्तित्वा त्प्रकृतिरनादिः पुरुषोऽपितदंशत्वादनादिरेव अत्रच परमेश्वरस्यतच्छक्तीनांचानादित्वंनित्यत्वंचश्रीमच्छंकरभगवद्भाष्यकृद्भिरतिप्रबंधेनोपपादितमितिग्रन्थबाहु

इतिक्षेत्रंतथाज्ञानंज्ञेयंचोक्तंसमासतः ॥ मद्भक्तएतद्विज्ञायमद्भावायोपपद्यते ॥ १८ ॥ प्रकृतिंपुरुषंचैवविद्ध्यनादीउभावपि ॥ विका रांश्चगुणांश्चैवविद्धिप्रकृतिसंभवान् ॥ १९ ॥ कार्यकारणकर्तृत्वेहेतुःप्रकृतिरुच्यते ॥ पुरुषःसुखदुःखानांभोक्तृत्वेहेतुरुच्यते ॥ २० ॥

ल्यान्नास्माभिःप्रतन्यते विकारांश्चदेहेंद्रियादीन् गुणांश्चगुणपरिणामान्सुखदुःखमोहादीन्प्रकृतेःसंभवान्संभूतान्विद्धि ॥ १९ ॥ विकाराणांप्रकृतिसंभवत्वंदर्श यन्पुरुषस्यसंसारहेतुत्वंदर्शयति कार्यकारणेति । कार्यंशरीरम् कारणानिसुखदुःखसाधनानींद्रियाणि तेषांकर्तृत्वेतदाकारपरिणामेप्रकृतिर्हेतुरुच्यते कपिलादिभिः पुरुषोजीवस्तत्कृतसुखदुःखानांभोक्तृत्वेहेतुरुच्यते अयंभावः—यद्यप्यचेतनायाःप्रकृतेः स्वतःकर्तृत्वंनसंभवति तथापुरुषस्याप्यविकारिणोभोक्तृत्वंनसंभवति तथापिकर्तृत्वंनामक्रियानिर्वर्तकत्वम् तच्चाचेतनस्यापिचेतनादृष्टवशाच्चैतन्याधिष्ठितत्वात्संभवति यथावह्नेरूर्ध्वज्वलनम् वायोस्तिर्यग्गमनम् वत्सादृष्टवशात्स्त

न्यपयसः क्षरणमित्यादि अतः पुरुषसन्निधानात्प्रकृतेः कर्तृत्वमुच्यते भोक्तृत्वंचसुखदुःखसंवेदनम् तच्चेतनधर्मएवेतिसान्निधानात्पुरुषस्यभोक्तृत्वमुच्यतइति ॥२०॥ तथाप्यविकारिणोजन्मरहितस्यभोक्तृत्वंकथमित्यतआह पुरुषइति । हियस्मात्प्रकृतिस्थः तत्कार्यदेहेतादात्म्येस्थितः पुरुषः अतस्तज्जनितान्सुखादीन्भुंक्ते अस्यचपुरुषस्यसतीषुदेवादियोनिषुअसतीषुतिर्यगादियोनिषुयानिजन्मानितेषुगुणसंगः गुणैः शुभाशुकर्मकारिभिरिंद्रियैः संगः कारणमित्यर्थः ॥ २१ ॥ तदनेनप्रकारेणप्रकृत्यविवेकात्पुरुषस्यसंसारोनतुस्वरूपतइत्याशयेनतस्यस्वरूपमाह उपद्रष्टेति । अस्मिन्प्रकृतिकार्येदेहेचवर्तमानोऽपिपुरुषः परोभिन्नएव नतद्गुणैर्युज्यतइत्यर्थः तत्रहेतवः—यस्मादुपद्रष्टा पृथग्भूतएवसमीपेस्थित्वाद्रष्टा तथाऽनुमंता अनुमोदितेवसान्निधिमात्रेणानुग्राहकः "साक्षीचेताकेवलोनिर्गुणश्च"

पुरुषः प्रकृतिस्थोहिभुंक्तेप्रकृतिजान्गुणान् ॥ कारणंगुणसंगोऽस्यसदसद्योनिजन्मसु ॥ २१ ॥ उपद्रष्टाऽनुमंताचभर्ताभोक्तामहेश्वरः ॥ परमात्मेतिचाप्युक्तोदेहेऽस्मिन्पुरुषः परः ॥ २२ ॥ यएवंवेत्तिपुरुषंप्रकृतिंचगुणैः सह ॥ सर्वथावर्तमानोऽपिनसभूयोऽभिजायते ॥ २३ ॥ ध्यानेनात्मनिपश्यंतिकेचिदात्मानमात्मना ॥ अन्येसांख्येनयोगेनकर्मयोगेनचापरे ॥ २४ ॥

इत्यादिश्रुतेः तथाऐश्वरेणरूपेणभर्ताविधारकइतिचोक्तः भोक्तापालकइतिच महांश्चासावीश्वरश्चेति सब्रह्मादीनामाधिपतिरितिच परमात्माअंतर्यामीतिचोक्तः श्रुत्या तथाचश्रुतिः—"एषभूताधिपतिरेषलोकेश्वरएषलोकपाल" इत्यादिः ॥ २२ ॥ एवंप्रकृतिपुरुषविवेकज्ञानिनंस्तौति यएवमिति । एवमुपद्रष्टृत्वादिरूपेणपुरुषं योवेत्ति प्रकृतिंचगुणैः सुखदुःखादिपरिणामैः सहितांयोवेत्ति सपुरुषः सर्वथाविधिमतिलंघ्यवर्तमानोऽपिपुनर्नाभिजायते मुच्यतएवेत्यर्थः ॥ २३ ॥ एवंभूतविविक्तात्मज्ञानेसाधनविकल्पानाह ध्यानेनेतिद्वाभ्यां । ध्यानेनआत्माकारप्रत्ययावृत्त्या आत्मनिदेहे आत्मनामनसाएवमात्मानंकेचित्पश्यंति अन्येतुसांख्येन

प्रकृतिपुरुषवैलक्षण्यालोचनेन योगेनाष्टांगेन अपरेचकर्मयोगेन पश्यंतीतिसर्वत्रानुषंगः एतेषांचध्यानादीनांयथायोगंक्रमसमुच्चयेसत्यपितत्तान्निष्ठाभेदाभिप्रायेणवि कल्पोक्तिः ॥ २४ ॥ अतिमंदाधिकारिणांनिस्तारोपायमाह अन्यइति । अन्येतुसांख्ययोगादिमार्गेणैवंभूतमुपद्रष्टृत्वादिलक्षणमात्मानंसाक्षात्कर्तुमजानंतोऽन्येभ्य आचार्येभ्यउपदेशेनश्रुत्वाउपासते ध्यायंति तेच श्रद्धयोपदेशश्रवणपरायणाः संतोमृत्युंसंसारंशनैरतितरंत्येव ॥ २५ ॥ तत्रकर्मयोगस्यतृतीयचतुर्थपंचमेषुप्रपं चितत्वात् ध्यानयोगस्यचषष्ठाष्टमयोःप्रपंचितत्वात् ध्यानादेश्चसांख्यविविक्तात्मविषयत्वात्सांख्यमेवप्रपंचयन्नाह यावदित्यादियावदध्यायसमाप्ति । यावत्किंचित् वस्तुमात्रंसत्वमुत्पद्यते तत्सर्वंक्षेत्रक्षेत्रज्ञयोर्योगात् अविवेककृतात्तादात्म्याध्यासाद्भवतीतिजानीहि ॥ २६ ॥ अविवेककृतंसंसारोद्भवमुक्त्वातन्निवृत्तयेविविक्ता

अन्येत्वेवमजानंतःश्रुत्वाऽन्येभ्यउपासते ॥ तेऽपिचातितरंत्येवमृत्युंश्रुतिपरायणाः ॥ २५ ॥ यावत्संजायतेकिंचित्सत्वंस्थावरजंगमम् ॥
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धिभरतर्षभ ॥ २६ ॥ समंसर्वेषुभूतेषुतिष्ठंतंपरमेश्वरम् ॥ विनश्यत्स्वविनश्यंतंयःपश्यतिसपश्यति ॥ २७ ॥
समंपश्यन्हिसर्वत्रसमवस्थितमीश्वरम् ॥ नहिनस्त्यात्मनाऽऽत्मानंततोयातिपरांगतिम् ॥ २८ ॥

त्मविषयंसम्यग्दर्शनमाह सममिति । स्थावरजंगमात्मकेषुभूतेषुनिर्विशेषंसद्रूपेणसमंयथाभवत्येवंतिष्ठंतंपरमात्मानंयःपश्यति अतएवतेषुविनश्यत्स्वपिअविनश्यंतं यःपश्यतिसएवसम्यक्पश्यतिनान्यः ॥ २७ ॥ कुतइत्यतआह सममिति । सर्वत्रभूतमात्रेसमंसम्यगप्रच्युतस्वरूपेणावस्थितंपरमात्मानंपश्यन् हियस्मात् आत्मना स्वेनैवात्मानंनहिनास्ति अविद्ययासच्चिदानंदरूपमात्मानंतिरस्कृत्यनविनाशयति ततश्चपरांगतिंमोक्षमाप्नोति यस्त्वेवंनपश्यति सहिदेहात्मदर्शीदेहेनसहात्मानं हिनस्ति तथाचश्रुतिः–“असुर्यानामतेलोकाअंधेनतमसावृताः । तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाः” इति ॥ २८ ॥

ननुशुभाशुभकर्मकर्तृत्वेनवैषम्येदृश्यमानेकथमात्मनःसमत्वमित्याशंक्याह प्रकृत्यैवेति । प्रकृत्यैवदेहेंद्रियाकारेणपरिणतया सर्वशःसर्वैःप्रकारैःक्रियमाणानिकर्माणियःपश्यति तथात्मानंचाकर्तारं देहाभिमानेनैवात्मनःकर्तृत्वं नस्वतःइत्येवंयःपश्यतिसएवसम्यक्पश्यतिनान्यइत्यर्थः ॥ २९ ॥ इदानींतुभूतानांप्रकृतितावन्मात्रत्वेनाभेदाद्भूतभेदकृतमप्यात्मनोभेदमपश्यन्ब्रह्मत्वमुपैतीत्याह यदेति । यदाभूतानांस्थावरजंगमानांपृथग्भावंभेदंपृथक्त्वं एकस्थंएकस्यामेवेश्वरशक्तिरूपायांप्रकृतौस्थितं प्रलयेअनुपश्यति आलोचयति ततएवचतस्याएवप्रकृतेःसकाशाद्भूतानांविस्तारंसृष्टिसमयेऽनुपश्यति तदाप्रकृतितावन्मात्रत्वेनभूतानामप्यभेदंपश्य

प्रकृत्यैवचकर्माणिक्रियमाणानिसर्वशः ॥ यः पश्यतितथाऽऽत्मानमकर्तारंसपश्यति ॥ २९ ॥ यदाभूतपृथग्भावमेकस्थमनुपश्यति ॥ ततएवचविस्तारंब्रह्मसंपद्यतेतदा ॥ ३० ॥ अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ॥ शरीरस्थोऽपिकौंतेयनकरोतिनलिप्यते ॥ ३१ ॥ यथासर्वगतंसौक्ष्म्यादाकाशंनोपलिप्यते ॥ सर्वत्रावस्थितोदेहेतथाऽऽत्मानोपलिप्यते ॥ ३२ ॥

न्परिपूर्णब्रह्मसंपद्यतेब्रह्मैवभवतीत्यर्थः ॥ ३० ॥ तथापिपरमेश्वरस्यसंसारावस्थायांदेहकर्मसंबंधनिमित्तैःकर्मभिस्तत्फलैश्चसुखदुःखादिवैषम्यंदुष्परिहरमितिकुतःसमदर्शनंतत्राह अनादित्वादिति । यदुत्पत्तिमत् तदेवहिव्येतिविनाशमेति यच्चगुणवद्वस्तुतस्यगुणनाशेव्ययोभवति अयंतुपरमात्माअनादिर्निर्गुणश्चातोऽव्ययःअविकारीत्यर्थः तस्माच्छरीरेस्थितोऽपिकिंचिन्नकरोति नचकर्मफलैर्लिप्यतइति ॥ ३१ ॥ तत्रदृष्टांतमाह यथेति । यथासर्वत्रपंकादिष्वपिस्थितमाकाशं सौक्ष्म्यादसंगत्वात्पंकादिभिर्नोपलिप्यते तथासर्वत्रउत्तमेमध्यमेऽधमेवादेहेऽवस्थितोऽप्यात्मा नोपलिप्यतेदैहिकैर्गुणदोषैर्नयुज्यतइत्यर्थः ॥ ३२ ॥

असंगत्वाल्लेपोनास्तीत्याकाशदृष्टांतेनोक्तम् प्रकाशकत्वाच्चप्रकाश्यधर्मैर्नयुज्यतइतिरविदृष्टांतेनाह यथेति । स्पष्टार्थः ॥ ३३ ॥ अध्यायार्थमुपसंहरति क्षेत्रक्षेत्रज्ञयोरिति । एवमुक्तप्रकारेणक्षेत्रक्षेत्रज्ञयोरंतरंभेदंविवेकज्ञानलक्षणेनचक्षुषायेविदुः तथाचेयमुक्ता भूतानांप्रकृतिस्तस्याःसकाशान्मोक्षंमोक्षोपायंध्यानादिकंचयेविदुस्ते परंपदंयांति ॥ ३४ ॥ 'विविक्तौयेनतत्वेनामिश्रौप्रकृतिपूरुषौ ॥ तंवंदेपरमानन्दनन्दनंदनमीश्वरम् ॥ १ ॥' इतिसुबोधिन्यांटीकायांत्रयोदशोऽध्यायः ॥ १३ ॥ 'पुंप्रकृत्योःस्वतंत्रत्वंवारयन्गुणसंगतः ॥ प्राहसंसारवैचित्र्यंविस्तरेणचतुर्दशे॥१॥' 'यावत्संजायतेकिंचित्सत्त्वंस्थावरजंगमम् । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धिभरतर्षभ'

यथाप्रकाशयत्येकःकृत्स्नंलोकमिमंरविः ॥ क्षेत्रंक्षेत्रीतथाकृत्स्नंप्रकाशयतिभारत ॥ ३३ ॥ क्षेत्रक्षेत्रज्ञयोरेवमंतरंज्ञानचक्षुषा ॥ भूतप्रकृतिमोक्षंचयेविदुर्यांतितेपरम् ॥ ३४ ॥ इतिश्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रेश्रीकृष्णार्जुनसंवादेप्रकृतिपुरुषयोगोनामत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ श्रीभगवानुवाच ॥ परंभूयःप्रवक्ष्यामिज्ञानानांज्ञानमुत्तमम् ॥ यज्ज्ञात्वामुनयःसर्वेपरांसिद्धिमितोगताः ॥ १ ॥

इत्युक्तम् सचक्षेत्रक्षेत्रज्ञयोःसंयोगोनिरीश्वरसांख्यानामिवनस्वातंत्र्येण किंत्वीश्वरेच्छयैवेतिकथनपूर्वकं 'कारणंगुणसंगोऽस्यसदसद्योनिजन्मसु' इत्यनेनोक्तंसत्त्वादिगुणकृतंसंसारवैचित्र्यंप्रपंचयिष्यन्नेवंभूतंवक्ष्यमाणमर्थंस्तौति श्रीभगवानुवाच परंभूयइतिद्वाभ्यां। परंपरमार्थनिष्ठं ज्ञायतेऽनेनेतिज्ञानमुपदेशं भूयोऽपितुभ्यंप्रकर्षेणवक्ष्यामि कथंभूतम् ज्ञानानांतपःकर्मादिविषयाणांमध्येउत्तमम् मोक्षहेतुत्वात् तदेवाह यज्ज्ञात्वाप्राप्यमुनयोमननशीलाःसर्वेइतोदेहबंधनात्परांसिद्धिंगताःप्राप्ताः॥१॥

किंच इदमिति । इदंवक्ष्यमाणंज्ञानमुपाश्रित्यइदंज्ञानसाधनमनुष्ठायममसाधर्म्यंमद्रूपत्वंप्राप्ताःसंतः सर्गेऽपिब्रह्मादिषूत्पद्यमानेष्वपिनोत्पद्यंते तथाप्रलयेऽपिनव्यथंति प्रलयेदुःखानिनानुभवंति पुनर्नावर्ततइत्यर्थः ॥ २ ॥ तदेवंप्रशंसयाश्रोतारमभिमुखीकृत्यपरमेश्वराधीनयोःप्रकृतिपुरुषयोःसर्वभूतोत्पत्तिंप्रतिहेतुत्वं नतुस्वतंत्रयोरितीमंविवक्षितमर्थंकथयति ममेति। देशतःकालतश्चानवच्छिन्नत्वान्महत् बृंहणत्वात्स्वकार्याणांवृद्धिहेतुत्वाद्वाब्रह्म प्रकृतिरित्यर्थः तन्महद्ब्रह्ममम परमेश्वरस्ययोनिर्गर्भाधानस्थानं तस्मिन्नहंगर्भंजगद्विस्तारहेतुंचिदाभासंदधामिनिक्षिपामि प्रलयेमयिलीनंसंतमविद्याकामकर्मानुशयवंतंक्षेत्रज्ञंसृष्टिसमयेभोग्येनक्षेत्रेणसंयोजयामीत्यर्थः ततोगर्भाधानात्सर्वभूतानांब्रह्मादीनांसंभवउत्पत्तिर्भवतीति ॥ ३ ॥ नकेवलंसृष्ट्युपक्रमएवमदधिष्ठिताभ्यांप्रकृतिपुरुषाभ्यामयंभूतोत्पत्ति

इदंज्ञानमुपाश्रित्यममसाधर्म्यमागताः ॥ सर्गेऽपिनोपजायन्तेप्रलयेनव्यथन्तिच ॥ २ ॥ ममयोनिर्महद्ब्रह्मतस्मिन्गर्भंदधाम्यहम् ॥ संभवःसर्वभूतानांततोभवतिभारत ॥ ३ ॥ सर्वयोनिषुकौंतेयमूर्तयःसंभवंतियाः ॥ तासांब्रह्ममहद्योनिरहंबीजप्रदःपिता ॥ ४ ॥ सत्त्वंरजस्तमइतिगुणाःप्रकृतिसंभवाः ॥ निबध्नंतिमहाबाहोदेहेदेहिनमव्ययम् ॥ ५ ॥

प्रकारः अपितुसर्वदैवेत्याह सर्वयोनिष्विति । सर्वासुयोनिषुमनुष्याद्यासुयामूर्तयः स्थावरजंगमात्मिकाउत्पद्यंते तासांमूर्तीनां महद्ब्रह्मप्रकृतिः योनिर्मातृस्थानीया अहंचबीजप्रदः गर्भाधानादिकर्ता पिता ॥ ४ ॥ तदेवं परमेश्वराधीनाभ्यांप्रकृतिपुरुषाभ्यांसर्वभूतोत्पत्तिंनिरूप्य इदानींप्रकृतिसंयोगेन पुरुषस्य संसारं प्रपंचयति सत्त्वमित्यादिचतुर्भिः । सत्त्वंरजस्तमइतित्रयोगुणाःप्रकृतिसंभवाः प्रकृतितःसंभवउद्भवोयेषांते तथोक्ताः गुणसाम्यंप्रकृतिस्तस्याःसकाशात्पृथक्त्वेनाभिव्यक्ताःसंतः प्रकृतिकार्येदेहेतादात्म्येनस्थितंदेहिनंचिदंशंवस्तुतोऽव्ययंनिर्विकारमेवसंतंनिबध्नंति स्वकार्यैःसुखदुःखमोहादिभिःसंयोजयंतीत्यर्थः ॥ ५ ॥

तत्रसत्वस्यलक्षणंबंधकत्वप्रकारंचाह तत्रेति ।तत्रतेषांगुणानांमध्येसत्वंनिर्मलत्वात्स्वच्छत्वात्स्फटिकवत्प्रकाशकंभास्वरम अनामयंचानिरुपद्रवंशांतामित्यर्थः अतः शांतत्वात्स्वकार्येणसुखेनयःसंगस्तेनबध्नाति प्रकाशकत्वाच्चस्वकार्येणज्ञानेनयःसंगस्तेनचबध्नाति हेअनघनिष्पाप! अहंसुखीज्ञानीचेतिमनोधर्मास्तदभिमानिनिक्षेत्रज्ञेसंयोजयतीत्यर्थः ॥ ६ ॥ रजसोलक्षणंबंधकत्वंचाह रजोरागेति । रजःसंज्ञकंगुणंरागात्मकमनुरंजनरूपंविद्धि अतएवतृष्णासंगसमुद्भवम् तृष्णाअप्राप्तेर्थेऽ-भिलाषः संगःप्राप्तेऽर्थेप्रीतिः विशेषेणासक्तिस्तयोस्तृष्णासंगयोःसमुद्भवोयस्मात्तद्रजोदेहिनं दृष्टादृष्टार्थेषुकर्मसुसंगेनासक्त्यानितरांबध्नाति तृष्णासंगाभ्यांहिकर्म

तत्रसत्वंनिर्मलत्वात्प्रकाशकमनामयम् ॥ सुखसंगेनबध्नातिज्ञानसंगेनचानघ ॥ ६ ॥ रजोरागात्मकंविद्धितृष्णासंगसमुद्भवम् ॥
तन्निबध्नातिकौंतेयकर्मसंगेनदेहिनम् ॥ ७ ॥ तमस्त्वज्ञानजंविद्धिमोहनंसर्वदेहिनाम् ॥ प्रमादालस्यनिद्राभिस्तन्निबध्नातिभारत
॥ ८ ॥ सत्वंसुखेसंजयतिरजःकर्मणिभारत ॥ ज्ञानमावृत्यतुतमःप्रमादेसंजयत्युत ॥ ९ ॥

स्वासक्तिर्भवति ॥ ७ ॥ तमसोलक्षणंबंधत्वंचाह तमइति । तमस्तुअज्ञानाज्जातं आवरणशक्तिप्रधानात्प्रकृत्यंशादुद्भूतंविद्धीत्यर्थः अतःसर्वेषांदेहिनांमोहनंभ्रांतिजनकं अतएवप्रमादेनालस्येननिद्रयाचतत्तमोदेहिनंनिबध्नाति तत्रप्रमादोऽनवधानं आलस्यमनुद्यमः निद्राचित्तस्यावसादोलयः ॥ ८ ॥ सत्वादीनामेवंस्वकाकार्यकरणेसामर्थ्यातिशयमाह सत्वमिति । सत्वंसुखेसंजयतिश्लेषयति दुःखशोकादिकारणेसत्यपिसुखाभिमुखमेवदेहिनंकरोतीत्यर्थः एवंसुखादिकारणेसत्यपिरजःकर्मण्येवसंजयति तमस्तुमहत्संगेनोत्पद्यमानमपिज्ञानमावृत्याच्छाद्यप्रमादेसंजयति महद्भिरुपदिश्यमानस्यार्थस्यानवधानेयोजयति उत अपिआलस्यादावपि

संयोजयतीत्यर्थः ॥ ९ ॥ तत्रहेतुमाह रजइति । रजस्तमश्चेतिगुणद्वयमभिभूयतिरस्कृत्यसत्वंभवत्यदृष्टवशादुद्भवति ततःस्वकार्येसुखेज्ञानादौसंयोजयतीत्यर्थः एवंरजोऽपिसत्वंतमश्चेतिगुणद्वयमभिभूयोद्भवति ततःस्वकार्येतृष्णादौसंयोजयति एवंतमोऽपिसत्वंरजश्चाभिभूयोद्भवति ततश्चस्वकार्येप्रमादालस्यादौसंयोजयतीत्यर्थः ॥ १० ॥ इदानींसत्वादीनांवृद्धानांलिंगान्याहात्रिभिः सर्वद्वारेष्विति । अस्मिन्आत्मनोभोगायतनेदेहेसर्वेष्वपिद्वारेषुश्रोत्रादिषुयदाशब्दादिज्ञानात्मकः प्रकाशउपजायतेउत्पद्यतेतदाअनेनप्रकाशलिंगेनसत्वंविवृद्धंविद्याज्जानीयात् उतशब्दात्सुखादिलिंगेनापिजानीयादित्युक्तम् ॥ ११ ॥ किंच लोभइति । लोभो

रजस्तमश्चाभिभूयसत्वंभवतिभारत ॥ रजःसत्वंतमश्चैवतमःसत्वंरजस्तथा ॥ १० ॥ सर्वद्वारेषुदेहेऽस्मिन्प्रकाशउपजायते ॥ ज्ञानंयदातदाविद्याद्विवृद्धंसत्वमित्युत ॥ ११ ॥ लोभःप्रवृत्तिरारंभःकर्मणामशमःस्पृहा ॥ रजस्येतानिजायंतेविवृद्धेभरतर्षभ ॥ १२ ॥ अप्रकाशोऽप्रवृत्तिश्चप्रमादोमोहएवच ॥ तमस्येतानिजायंतेविवृद्धेकुरुनंदन ॥ १३ ॥ यदासत्वेप्रवृद्धेतुप्रलयंयातिदेहभृत् ॥ तदोत्तमविदाँल्लोकानमलान्प्रतिपद्यते ॥ १४ ॥

धनाद्यागमेबहुधाजायमानेऽपिपुनःपुनर्वर्धमानोऽभिलाषः प्रवृत्तिर्नित्यंकुर्वद्रूपता कर्मणामारंभोगृहादिनिर्माणोद्यमः अशमइदंकृत्वा इदंकरिष्यामीत्यादिसंकल्पविकल्पानुपरमः स्पृहा उच्चावचेषुदृष्टमात्रेषुवस्तुष्वितस्ततोजिघृक्षा रजसिप्रवृद्धेसति एतानिलिंगानिजायंते एतैर्लिंगैरजोगुणस्यवृद्धिंविद्यादित्यर्थः ॥ १२ ॥ किंच अप्रकाशइति । अप्रकाशोविवेकभ्रंशः अप्रवृत्तिरनुद्यमः प्रमादःकर्तव्यार्थानुसंधानराहित्यं मोहोमिथ्याभिनिवेशः तमसिप्रवृद्धे एतानिलिंगानिचिह्नानिजायंते एतैस्तमसोवृद्धिंजानीयादित्यर्थः ॥ १३ ॥ मरणसमयएववृद्धानांसत्वादीनांफलविशेषमाह यदेतिद्वाभ्यां । सत्वेप्रवृद्धेसतियदाजीवोमृत्युंप्राप्नोतितदा

उत्तमान्हिरण्यगर्भादीन्विदंतिउपासतइत्युत्तमविदस्तेषां येअमलाःप्रकाशमयालोकाःसुखोपभोगस्थानविशेषास्तान्प्रतिपद्यतेप्राप्नोति ॥ १४ ॥ किंच रजसी
ति । रजसिप्रवृद्धेसति मृत्युंप्राप्यकर्मासक्तेषुमनुष्येषुजायते तथातमसिप्रवृद्धेसतिप्रलीनोमृतोमूढयोनिषुपश्वादिषुजायते ॥१५॥ इदानींसत्वादीनांस्वानुरूपकर्म
द्वारेणविचित्रफलहेतुत्वमाह कर्मणइति । सुकृतस्यसात्विककर्मणः सात्विकंसत्वप्रधानं निर्मलंप्रकाशबहुलंसुखंफलमाहुःकपिलादयः रजसइतिराजसस्यकर्मणइ
त्यर्थः कर्मफलकथनस्यप्राकृतत्वात्तस्यदुःखंफलमाहुः तमसइति तामसस्यकर्मणइत्यर्थः तस्याज्ञानंमूढत्वंफलमाहुः सात्विकादिकर्मलक्षणंचनियतंसंगरहितमि

रजसिप्रलयंगत्वाकर्मसंगिषुजायते ॥ तथाप्रलीनस्तमसिमूढयोनिषुजायते ॥ १५ ॥ कर्मणःसुकृतस्याहुःसात्विकंनिर्मलंफलम् ॥
रजसस्तुफलंदुःखमज्ञानंतमसःफलम् ॥ १६ ॥ सत्वात्संजायतेज्ञानंरजसोलोभएवच ॥ प्रमादमोहौतमसोभवतोऽज्ञानमेवच ॥१७॥
ऊर्ध्वंगच्छंतिसत्वस्थामध्येतिष्ठंतिराजसाः ॥ जघन्यगुणवृत्तिस्थाअधोगच्छंतितामसाः ॥ १८ ॥

त्यादिनाऽष्टादशेवक्ष्यति ॥ १६ ॥ तत्रैवहेतुमाह सत्वादिति । सत्वाज्ज्ञानंसंजायते अतःसात्विकस्यकर्मणःप्रकाशबहुलंसुखंफलंभवति रजसोलोभोजायते तस्य
चदुःखहेतुत्वात् तत्पूर्वकस्यकर्मणोदुःखंफलंभवति तमसस्तुप्रमादमोहाज्ञानानिभवंति ततस्तामसस्यकर्मणोऽज्ञानप्रापकंफलंभवतीतियुक्तमेवेत्यर्थः ॥ १७ ॥
इदानींसत्वादिवृत्तिशीलानांफलभेदमाह ऊर्ध्वमिति । सत्वस्थाःसत्ववृत्तिप्रधानाऊर्ध्वंगच्छंति सत्वोत्कर्षतारतम्यादुत्तरोत्तरशतगुणानंदान्मनुष्यगंधर्वपितृदेवादि
लोकान्सत्यलोकपर्यंतान्प्राप्नुवंतीत्यर्थः राजसास्तुतृष्णाद्याकुलामध्येतिष्ठंति मनुष्यलोकेएवोत्पद्यंते जघन्योऽतिनिकृष्टस्तमोगुणस्तस्यवृत्तिः प्रमादमोहादिस्त

त्रस्थिताअधोगच्छंति तमोवृत्तितारतम्यात्तामिस्रादिषुनिरयेषूत्पद्यंते ॥ १८ ॥ तदेवंप्रकृतिगुणसंगकृतंसंसारंसप्रपंचमुक्त्वा इदानींतद्विवेकतोमोक्षंदर्शयति नान्यमिति । यदातुद्रष्टाविवेकीभूत्वाबुद्ध्याद्याकारपरिणतेभ्योगुणेभ्योऽन्यंकर्तारंनानुपश्यतिअपितुगुणाएवकर्माणिकुर्वंतीतिपश्यति गुणेभ्यश्चपरंव्यतिरिक्तंतत्सा क्षिणमात्मानंवेत्ति सतुमद्भावंब्रह्मत्वमधिगच्छति प्राप्नोति ॥ १९ ॥ ततश्चगुणकृतसर्वानर्थनिवृत्त्याकृतार्थोभवतीत्याह गुणानिति । देहाद्याकारःसमुद्भवःपरि णामोयेषांतेदेहसमुद्भवाः तानेतांस्त्रीनपिगुणानतीत्यातिक्रम्य तत्कृतैर्जन्मादिभिर्विमुक्तःसन्नमृतमश्नुते ब्रह्मानंदंप्राप्नोति ॥ २० ॥ गुणनेतानतीत्यामृतम

नान्यंगुणेभ्यःकर्तारंयदाद्रष्टाऽनुपश्यति ॥ गुणेभ्यश्चपरंवेत्तिमद्भावंसोऽधिगच्छति ॥ १९ ॥ गुणानेतानतीत्यत्रीन्देहीदेहसमुद्भ वान् ॥ जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥ ॥ अर्जुनउवाच ॥ कैर्लिंगैस्त्रीन्गुणानेतानतीतोभवतिप्रभो ॥ कि माचारःकथंचैतांस्त्रीन्गुणानतिवर्तते ॥ २१ ॥ ॥ श्रीभगवानुवाच ॥ प्रकाशंचप्रवृत्तिंचमोहमेवचपांडव ॥ नद्वेष्टिसंप्रवृत्तानि ननिवृत्तानिकांक्षति ॥ २२ ॥

श्नुतइत्येतच्छ्रुत्वागुणातीतस्यलक्षणमाचारंगुणात्ययोपायंचसम्यग्बुभुत्सुरर्जुनउवाच कैर्लिंगैरिति । हेप्रभो!कैर्लिंगैःकीदृशैरात्मन्युत्पन्नैश्चिह्नैर्गुणातीतोदेहीभवती तिलक्षणप्रश्नः कआचारोयस्येतिकिमाचारः कथंवर्ततइत्यर्थः कथंचकेनोपायेनैतांस्त्रीनपिगुणानतीत्यवर्ततेतत्कथयेति ॥ २१ ॥ स्थितप्रज्ञस्यकाभाषेत्या दिनाद्वितीयाध्यायेपृष्टमपिदत्तोत्तरमपिपुनर्विशेषबुभुत्सयापृच्छतीतिज्ञात्वाप्रकारांतरेणतस्यलक्षणादिकंश्रीभगवानुवाच प्रकाशंचेत्यादिषड्भिः । तत्रैकेनलक्षण माह प्रकाशंचेति। प्रकाशंचसर्वद्वारेषुदेहेऽस्मिन्नितिपूर्वोक्तंसत्वकार्यं प्रवृत्तिंचरजःकार्यम् मोहंचतमसःकार्यम् उपलक्षणमेतत् सत्वादीनांसर्वाण्यपिकार्याणिय

थायर्थंसंप्रवृत्तानिस्वतःप्राप्तानिसंतिदुखःबुद्ध्यायोनद्वेष्टि निवृत्तानिचसंतिसुखबुद्ध्यानकांक्षति गुणातीतःसउच्यते इतिचतुर्थेनान्वयः ॥ २२ ॥ तदेवंस्वसंवेद्यंतस्यलक्षणमुक्त्वापरसंवेद्यं तस्यलक्षणंवक्तुंकिमाचरइतिद्वितीयप्रश्नस्योत्तरमाह उदासीनवदितित्रिभिः । उदासीनवत्साक्षितयाआसीनःस्थितःसन् गुणैर्गुणकार्यैःसुखदुःखादिभिर्योनविचाल्यते स्वरूपान्नप्रच्याव्यते अपितुगुणाएवस्वकार्येषुवर्तंते एतैर्ममसंबंधएवनास्तीतिविवेकज्ञानेनयस्तूष्णीमवतिष्ठति परस्मैपदमार्षं नेंगते नचलति ॥ २३ ॥ अपिच समेति । समेसुखदुःखेयस्य यतःस्वस्थःस्वरूपएवास्थितः अतएवसमानिलोष्टाश्मकांचनानियस्य तुल्येप्रियाप्रियेसुखदुः-

उदासीनवदासीनोगुणैर्योनविचाल्यते ॥ गुणावर्ततंइत्येवयोऽवतिष्ठतिनेंगते ॥ २३ ॥ समदुःखसुखः
स्वस्थः समलोष्टाश्मकांचनः ॥ तुल्यप्रियाप्रियोधीरस्तुल्यनिंदात्मसंस्तुतिः ॥ २४ ॥ मानापमानयो
स्तुल्यस्तुल्योमित्रारिपक्षयोः ॥ सर्वारंभपरित्यागीगुणातीतःसउच्यते ॥ २५ ॥ मांचयोऽव्यभिचारेण
भक्तियोगेनसेवते ॥ सगुणान्समतीत्यैतान्ब्रह्मभूयायकल्पते ॥ २६ ॥

खहेतुभूतेयस्य धीरोधीमान् तुल्यानिंदाचआत्मस्तुतिश्चयस्य ॥ २४ ॥ अपिच मानापमानयोरिति । मानेअपमानेचतुल्यः मित्रपक्षेअरिपक्षेचतुल्यः सर्वान्दृष्टादृष्टार्थानारंभानुद्यमान्परित्यक्तुंशीलंयस्य सएवंभूताचारयुक्तोगुणातीतउच्यते ॥ २५ ॥ कथंचैतांस्त्रीन्गुणानतिवर्ततइत्यस्यप्रश्नस्योत्तरमाह मांचेति । चशब्दोऽवधारणार्थः मामेवपरमेश्वरंश्रीनारायणमव्यभिचारेणएकांतभक्तियोगेनयःसेवते सएतान्गुणान्समतीत्यसम्यगतिक्रम्यब्रह्मभूयायब्रह्मभावायमोक्षायकल्पते योग्योभवति ॥ २६ ॥

तत्रहेतुमाह ब्रह्मणोहीति । हियस्माद्ब्रह्मणोऽहंप्रतिष्ठाप्रतिमाघनीभूतंब्रह्मैवाहम् यथाघनीभूतःप्रकाशएवसूर्यमंडलंतद्वदेवेत्यर्थः तथाव्ययस्यनित्यस्यअमृतस्यमो
क्षस्यचनित्यमुक्तत्वात् तथातत्साधनस्यशाश्वतस्यचधर्मस्यशुद्धसत्वात्मकत्वात् तथाएकांतिकस्य अखंडितस्यसुखस्यचप्रतिष्ठाऽहम् परमानंदैकरूपत्वात् अतो
मत्सेविनोमद्भावस्यावश्यंभावित्वाद्युक्तमेवोक्तंब्रह्मभूयायकल्पतइति ॥ २७ ॥ 'कृष्णाधीनगुणासंगप्रसंजितभवांबुधिम्॥सुखंतरातितद्भक्तइत्यभाणिचतुर्दशे॥१॥'
इति सुबो०टी०चतुर्दशोऽध्यायः ॥१४॥ ॥ 'वैराग्येणविनाज्ञानंनचभक्तिरतःस्फुटम्॥वैराग्योपस्कृतंज्ञानमीशःपंचदशेऽदिशत्॥१॥'पूर्वोध्यायांते मांचयोऽव्यभि
चारेणभक्तियोगेनसेवतइत्यादिनापरमेश्वरमेकांतभक्त्याभजतस्तत्प्रसादलब्धज्ञानेनब्रह्मभावोभवतीत्युक्तं नचैकांतभक्तिर्ज्ञानंवाविरक्तस्यसंभवतीतिवैराग्यपूर्वकं

**ब्रह्मणोहिप्रतिष्ठाऽहममृतस्याव्ययस्यच ॥ शाश्वतस्यचधर्मस्यसुखस्यैकांतिकस्यच ॥ २७ ॥ इतिश्रीमद्भगवद्गीतासूप०**
**गुणत्रयविभागयोगोनामचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ श्रीभगवानुवाच ॥ ॥ ऊर्ध्वमूलमधःशाखमश्वत्थंप्राहुरव्ययम् ॥**
**छंदांसियस्यपर्णानियस्तंवेदसवेदवित् ॥ १ ॥**

ज्ञानमुपदेष्टुकामःप्रथमंतावत्सार्द्धश्लोकाभ्यांसंसारस्वरूपंवृक्षरूपकालंकारेणवर्णयन् श्रीभगवानुवाच ऊर्ध्वमूलमिति। ऊर्ध्वमुत्तमक्षराक्षराभ्यामुत्कृष्टःपुरुषोत्तमोमू
लंयस्यतम् अधइतिततोऽर्वाचीनाः कार्योपाधयोहिरण्यगर्भादयोगृह्यंते तेतुशाखाइवशाखायस्यतम्विनश्वरत्वेनश्वःप्रभातपर्यंतमपिनस्थास्यतीतिविश्वासानर्हत्वा
दश्वत्थंप्राहुः प्रवाहरूपेणाविच्छेदादव्ययंचप्राहुः ऊर्ध्वमूलोऽवाक्शाखएषोऽश्वत्थःसनातनइत्याद्याःश्रुतयःछंदांसिवेदाःयस्यपर्णानि धर्माधर्मप्रतिपादनद्वारेणछा
यास्थानीयैःकर्मफलैःसंसारवृक्षस्यसर्वजीवाश्रयणीयत्वापादनात्पर्णस्थानीयावेदाःयस्तमेवंभूतमश्वत्थंवेद सएववेदार्थवित् संसारप्रपंचवृक्षस्यमूलमीश्वरःश्रीनारा

यणः ब्रह्मादयस्तदंशाः शाखास्थानीयाः सचसंसारवृक्षोविनश्वरःप्रवाहरूपेणनित्यश्च वेदोक्तैः कर्मभिसेव्यतामापादितश्चेत्येतावानेवहिवेदार्थः अतएवविद्वान्वेदवि दितिस्तूयते ॥१॥ किंच अधश्चेति। हिरण्यगर्भादयःकार्योपाधयोजीवाःशाखास्थानीयत्वेनोक्तास्तेषुचयेदुष्कृतिनस्तेऽधःपश्वादियोनिषुप्रसृताःविस्तरंगताःसुकृतिन श्चोर्ध्वंदेवादियोनिषु प्रसृतास्तस्यसंसारवृक्षस्यशाखाः किंच गुणैः सत्त्वादिवृत्तिभिःजलसेचनैरिवयथायथंप्रवृद्धाःवृद्धिंप्राप्ताः किंच विषयाःरूपादयःप्रवालाःपल्ल वस्थानीयाःयासांताः प्रशाखास्थानीयाभिःइंद्रियवृत्तिभिःसंयुक्तत्वात् किंच अधश्च चशब्दादूर्ध्वंचमूलानिअनुसंततानिविरूढानि मुख्यंमूलंईश्वरएकएव इमा नित्ववांतरमूलानितत्तद्भोगवासनालक्षणानि तेषांकार्यमाह मनुष्यलोकेकर्मानुबंधीनिकर्मएवानुबंधि अनंतरभावियेषांतानि ऊर्ध्वाधोलोकेषुयदुपभुक्तंतत्तद्भोग

अधश्चोर्ध्वंप्रसृतास्तस्यशाखागुणप्रवृद्धाविषयप्रवालाः ॥ अधश्चमूलान्यनुसंततानिकर्मानुबंधीनिमनुष्यलोके ॥ २ ॥
नरूपमस्येहत थोपलभ्यतेनांतोनचादिर्नचसंप्रतिष्ठा ॥ अश्वत्थमेनंसुविरूढमूलमसंगशस्त्रेणदृढेनछित्त्वा ॥ ३ ॥

वासनादिभिर्हिकर्मक्षयेणमनुष्यलोकंप्राप्तानांतत्तदनुरूपेषुकर्मसुप्रवृत्तिर्भवति एतस्मिन्नेवहिकर्माधिकारोनान्येषुलोकेषु अतोमनुष्यलोकेइत्युक्तम ॥ २ ॥ किंच नरूपमस्येति। इहसंसारेस्थितैःप्राणिभिःअस्यसंसारवृक्षस्यतथोर्ध्वमूलत्वादिप्रकारेणरूपंनोपलभ्यते नचांतःअवसानम् अपर्यंतत्वात् नचादिरनादित्वात् नचसं प्रतिष्ठास्थितिःकथंतिष्ठतीति नचोपलभ्यते यस्मादेवंभूतोऽयंसंसारवृक्षोदुरुच्छेद्यःअनर्थकरश्च तस्मादेनंदृढेनवैराग्येणशस्त्रेणछित्त्वातत्वज्ञानेयतेतेत्याहअश्व त्थमेनमितिसार्धेन। एनमश्वत्थंसुविरूढमूलमत्यंतंबद्धमूलंसंतम् असंगःसंगराहित्यंअहंममतात्यागस्तेनदृढेनशस्त्रेणसम्यग्विचारेणछित्त्वापृथक्कृत्य ॥ ३ ॥

ततइति । ततस्तस्यमूलभूतंतत्पदंवस्तुवैष्णवंपदंपरिमार्गितव्यंअन्वेष्टव्यम् कीदृशम् यस्मिन्गतायत्पदंप्राप्ताःसंतोभूयोनानिवर्तंति न आवर्ततइत्यर्थःअन्वेषणप्रकार
माह यतएषापुराणीचिरंतनीसंसारप्रवृत्तिः प्रसृताविस्तृता तमेवचाद्यंपुरुषंप्रपद्येशरणंव्रजामीत्येवमेकांतभक्त्याऽन्वेष्टव्यमित्यर्थः ॥ ४ ॥ तत्प्राप्तौसाधनांतराणि
दर्शयन्नाह निर्मानेति । निर्गतौमानमोहौअहंकारमिथ्याभिनिवेशौयेभ्यस्ते जितःपुत्रादिसंगरूपोदोषोयैस्ते अध्यात्मेआत्मज्ञानेनित्याःपरिनिष्ठिताःविशेषेणनिवृ
त्तःकामोयेभ्यस्ते सुखदुःखहेतुत्वात् सुखदुःखसंज्ञानिशीतोष्णादीनिद्वंद्वानितैर्विमुक्ताः अतएवामूढाः निवृत्ताविद्याःसंतस्तदव्ययंपदंवैष्णवंगच्छंति ॥ ५ ॥
तदेवगंतव्यंपदंविशिनष्टि नतादिति । यत्पदंसूर्यादयोनप्रकाशयंति यत्प्राप्यननिवर्ततेयोगिनः तद्धामस्वरूपंपरमंममअनेनसूर्यादिप्रकाशाविषयत्वेनजडत्वशीतो

**ततःपदंतत्परिमार्गितव्यंयस्मिन्गतानानिवर्तंतिभूयः ॥ तमेवचाद्यंपुरुषंप्रपद्येयतःप्रवृत्तिःप्रसृतापुराणी ॥ ४ ॥ निर्मानमोहाजितसंगदो-**
**षाअध्यात्मनित्याविनिवृत्तकामाः ॥ द्वंद्वैर्विमुक्ताःसुखदुःखसंज्ञैर्गच्छंत्यमूढाःपदमव्ययंतत् ॥५॥ नतद्भासयतेसूर्योनशशांकोनपावकः ॥**
**यद्गत्वानिवर्तंतेतद्धामपरमंमम ॥ ६ ॥ ममैवांशोजीवलोकेजीवभूतःसनातनः ॥ मनःषष्ठानींद्रियाणिप्रकृतिस्थानिकर्षति ॥ ७ ॥**

ष्णादिदोषप्रसंगोनिरस्तः ॥६॥ ननुचत्वदीयंधामप्राप्ताःसंतोयदिननिवर्तंते तर्हि "सतिसंपद्यनविदुःसतिसंपद्यामह"इत्यादिश्रुतेःसुषुप्तिप्रलयसमयेत्वत्प्राप्तिःसर्वे
षामस्तीतिकोनामसंसारीस्यादित्याशंक्यसंसारिणंदर्शयति ममेतिपंचभिः ममैवांशोयोऽयमविद्ययाजीवभूतःसनातनःसर्वदासंसारित्वेनप्रसिद्धः असौसुषुप्तिप्रल
ययोः प्रकृतौलीनतयास्थितानिमनःषष्ठंयेषांतानींद्रियाणिपुनर्जीवलोकेसंसारेभोगार्थमाकर्षतिएतच्चकर्मेंद्रियाणांप्राणस्यचोपलक्षणार्थम् अयंभावः—सत्यंसुषुप्तिप्र
लययोरपिमदंशत्वात्सर्वस्यापिजीवमात्रस्यमयिलयादस्त्येवमत्प्राप्तिः तथाप्यविद्ययावृतस्यसानुशयस्यसप्रकृतिकेमयिलयोनतुशुद्धे तदुक्तम्—अव्यक्ताद्व्यक्तयः

सर्वाः प्रभवंतीत्यादिना अतश्च पुनः संसाराय निर्गच्छन्नविद्वान्प्रकृतौलीनतया स्थितानिस्वोपाधिभूतानींद्रियाण्याकर्षति विदुषांतुशुद्धस्वरूपप्राप्तेनावृत्तिरिति ॥७॥
तान्याकृष्यकिंकरोतीत्यत्राह शरीरमिति । यदाशरीरांतरंकर्मवशादवाप्नोति यतश्चशरीरादुत्क्रामति ईश्वरोदेहादीनांस्वामी तदापूर्वस्माच्छरीरादेतानिगृही
त्वातच्छरीरांतरंसम्यग्याति शरीरेसत्यपींद्रियग्रहणेदृष्टांतः आशयात्स्वस्थानात्कुसुमादेःसकाशात्गंधान्गंधवतःसूक्ष्मानंशानगृहीत्वायथावायुर्गच्छति तद्वत्
॥ ८ ॥ तान्येवेंद्रियाणिदर्शयन्यदर्थंगृहीत्वागच्छतितदाह श्रोत्रमिति । श्रोत्रादीनिबाह्येंद्रियाणिमनश्चान्तःकरणमधिष्ठायाश्रित्यशब्दादीन्विषयानयंजी

शरीरंयदवाप्नोतियच्चाप्युत्क्रामतीश्वरः ॥ गृहीत्वैतानिसंयातिवायुर्गंधानिवाशयात् ॥ ८ ॥ श्रोत्रंचक्षुःस्पर्शनंचरसनंघ्राणमेवच ॥ अ
धिष्ठायमनश्चायंविषयानुपसेवते ॥ ९ ॥ उत्क्रामंतंस्थितंवापिभुंजानंवागुणान्वितम् ॥ विमूढानानुपश्यंतिपश्यंतिज्ञानचक्षुषः ॥१०॥
यतंतोयोगिनश्चैनंपश्यंत्यात्मन्यवस्थितम् ॥ यतंतोऽप्यकृतात्मानोनैनंपश्यंत्यचेतसः ॥ ११ ॥

वउपभुंक्ते ॥ ९ ॥ ननुचकार्यकारणसंघातव्यतिरेकेणैवंभूतमात्मानंसर्वेऽपिकिंनपश्यंतितत्राह उत्क्रामंतमिति । उत्क्रामंतंदेहाद्देहांतरंगच्छन्तम् तस्मिन्ने
वदेहेस्थितंवाविषयान्भुंजानंवागुणान्वितमिंद्रियादियुक्तंजीवंविमूढानानुपश्यंति नालोकयंति ज्ञानमेवचक्षुर्येषांतेविवेकिनःपश्यंति ॥ १० ॥ दुर्ज्ञेयश्चायं
यतोविवेकिष्वपिकेचिदेवपश्यंतिकेचिन्नपश्यंतीत्याह यतंतइति । यतंतःध्यानादिभिःप्रयतमानायोगिनःकेचिदेनमात्मानंआत्मनिदेहेऽवस्थितंविविक्तंपश्यंति
शास्त्राभ्यासादिभिःप्रयत्नंकुर्वाणाअपिअकृतात्मानःअविशुद्धचित्ताः अतएवाचेतसोमंदमतयः एनंपश्यंति ॥ ११ ॥

तदेवंनतद्भासयतेसूर्यइत्यादिनापारमेश्वरंपरंधामोक्तं तत्प्राप्तानांचापुनरावृत्तिरुक्ता तत्रचसंसारिणोऽभावमाशंक्यसंसारिस्वरूपंदेहाद्दिव्यतिरिक्तंदर्शितम् इदा नींतदेकवारमेश्वररूपंअनंतशक्तित्वेनानिरूपयति यदेत्यादिचतुर्भिः । आदित्यादिषुस्थितंयदनेकप्रकारंतेजोविश्वंप्रकाशयति तत्सर्वंतेजोमदीयमेवज्ञानीहि ॥१२॥ किंच गामाविश्येति । गांपृथ्वीमोजसाबलेनाधिष्ठायअहमेवचराचराणिभूतानिधारयामि अहमेवरसमयःसोमोभूत्वाव्रीह्याद्यौषधीः सर्वाःसंवर्धयामि॥१३॥ किंच अहमिति । वैश्वानरोजाठरोभूत्वाप्राणिनांदेहस्यांतःप्रविश्यप्राणापानाभ्यांतदुद्दीपकाभ्यांसहितः प्राणिभिर्भुक्तंभक्ष्यंभोज्यंलेह्यंचोष्यंचेतिचतुर्विधमन्नंपचामि

यदादित्यगतंतेजोजगद्भासयतेऽखिलम् ॥ यच्चंद्रमसियच्चाग्नौतत्तेजोविद्धिमामकम् ॥१२॥ गामाविश्यचभूतानिधारयाम्यहमोजसा ॥ पुष्णामिचौषधीःसर्वाःसोमोभूत्वारसात्मकः ॥१३॥ अहंवैश्वानरोभूत्वाप्राणिनांदेहमाश्रितः ॥ प्राणापानसमायुक्तःपचाम्यन्नंचतुर्विधम् ॥ १४ ॥ सर्वस्यचाहंहृदिसन्निविष्टोमत्तःस्मृतिर्ज्ञानमपोहनंच ॥ वेदैश्चसर्वैरहमेववेद्योवेदान्तकृद्वेदविदेवचाहम् ॥ १५ ॥

तत्रयद्दंतैरवखंड्यावखंड्यभक्ष्यतेऽपूपादितद्भक्ष्यम् यत्तुकेवलंजिह्वयाविलोड्यनिगीर्यतेपायसादितद्भोज्यम् यत्तुजिह्वाग्रेनिक्षिप्यरसास्वादेनक्रमशोनिगीर्यतेद्र वीभूतंगुडादितल्लेह्यम् यत्तुदंष्ट्रादिभिःनिष्पीड्यरसांशंनिगीर्यावशिष्टंत्यज्यतइक्षुदंडादितच्चोष्यमितिचतुर्विधभेदः ॥ १४ ॥ किंच सर्वस्येति । सर्वस्यप्राणिजात स्यहृदिसम्यगंतर्यामिरूपेणप्रविष्टोऽहम् अतश्चमत्तएवहेतोः प्राणिमात्रस्यपूर्वानुभूतार्थविषयास्मृतिर्भवति ज्ञानंचविषयेंद्रियसंयोगजंभवति अपोहनंच तयोः प्रमोषोभवति वेदैश्चसर्वैस्तत्तद्देवतादिरूपेणाहमेववेद्यः वेदांतकृत् तत्संप्रदायप्रवर्तकश्चज्ञानदोगुरुरहमित्यर्थः वेदविदेवचवेदार्थविदहमेव ॥ १५ ॥

इदानींतद्धामपरमंममेतियदुक्तंतत्स्वकीयंसर्वोत्तमत्वंदर्शयाति द्वाविमाविति त्रिभिः । क्षरश्चाक्षरश्चेतिद्वाविमौपुरुषौलोकेप्रसिद्धौ तावेवाह तत्रक्षरःपुरुषोना मसर्वाणिभूतानिब्रह्मादिस्थावरांतानिशरीराणि अविवेकिलोकस्यशरीरेष्वेवपुरुषत्वप्रसिद्धेः कूटःशिलाराशिःपर्वतइवदेहेषुनश्यत्स्वपिनिर्विकारतयातिष्ठतीति कूटस्थः चेतनोभोक्ता सतुअक्षरःपुरुषइत्युच्यतेविवेकिभिः ॥ १६ ॥ यदर्थमेतौलक्षितौतमाह उत्तमइति । एताभ्यांक्षराक्षराभ्यामन्योविलक्षणस्तूत्तमः पुरुषः वैलक्षण्यमेवाह परमश्चासावात्मेतिचोदाहृतउक्तःश्रुतिभिः आत्मत्वेनक्षरादचेतनाद्विलक्षणःपरमत्वेनाक्षराच्चेतनाद्भोक्तुःविलक्षणइत्यर्थः परमात्मत्व

द्वाविमौपुरुषौलोकेक्षरश्चाक्षरएवच ॥ क्षरःसर्वाणिभूतानिकूटस्थोऽक्षरउच्यते ॥ १६ ॥ उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः ॥
योलोकत्रयमाविश्यबिभर्त्यव्ययईश्वरः ॥ १७ ॥ यस्मात्क्षरमतीतोऽहमक्षरादपिचोत्तमः ॥ अतोऽस्मिलोकेवेदेचप्रथितःपुरुषो
त्तमः ॥ १८ ॥ योमामेवमसंमूढोजानातिपुरुषोत्तमम् ॥ ससर्वविद्भजतिमांसर्वभावेनभारत ॥ १९ ॥

मेवदर्शयति योलोकत्रयमिति । यईश्वरईशनशीलः अव्ययश्चनिर्विकारएवसन्लोकत्रयंकृत्स्नमाविश्याबिभर्तिपालयाति ॥ १७ ॥ एवंभूतंपुरुषोत्तमत्व- मात्मनोनामानिर्वचनेनदर्शयति यस्मादिति । यस्मात्क्षरंजडवर्गमतिक्रांतोऽहं नित्यमुक्तत्वात् अक्षराच्चेतनवर्गादप्युत्तमश्चानियंतृत्वात् अतोलोकेवेदेचपुरु षोत्तमइतिप्रथितःप्रख्यातोऽस्मि तथाचश्रुतिः—"सवाअयमात्मासर्वस्यवशीसर्वस्येशानःसर्वस्याधिपतिःसर्वमिदंप्रशास्ति"इत्यादिः॥१८॥एवंभूतेश्वरस्याज्ञातुःफल माह योमामिति । एवमुक्तप्रकारेणासंमूढोनिश्चितमतिःसन्योमांपुरुषोत्तमंजानाति ससर्वभावेनसर्वप्रकारेणमामेवभजतिततः सर्ववित्सर्वज्ञोभवाति ॥ १९ ॥

अध्यायार्थमुपसंहरति इतीति । इत्यनेनप्रकारेणगुह्यतमं अतिरहस्यंसंपूर्णंशास्त्रमेवमयोक्तम् नपुनर्विंशतिश्लोकमध्यायमात्रम् हेअनघव्यसनशून्य ! अतएतन्म
दुक्तंशास्त्रं बुद्ध्वा बुद्धिमानसम्यग्ज्ञानी कृतकृत्यश्चस्याद्योऽपिकोऽपि हे भारत ! त्वंकृतकृत्योसीतिकिंवक्तव्यमितिभावः ॥२०॥ 'संसारशाखिनंछित्त्वास्पष्टंपंचद
शेप्रभुः ॥ पुरुषोत्तमयोगाख्येपरंपदमुपादिशत् ॥ १ ॥' इतिसुबोधिन्यांटीकायांपंचदशोऽध्यायः ॥ १५ ॥ ॥ 'आसुरींसंपदंत्यक्त्वादैवीमेवाश्रितानराः ॥ मु
च्यंतइतिनिर्णेतुंतद्विवेकोऽथषोडशे॥१॥'पूर्वाध्यायांतेएतद्बुद्ध्वाबुद्धिमान्स्यात्कृतकृत्यश्चभारतेत्युक्तम् तत्रकएतत्तत्त्वंबुध्यतेकोवानबुद्ध्यतइत्यपेक्षायांतत्वज्ञानेऽ
धिकारिणोऽनधिकारिणश्चविवेकार्थंषोडशाध्यायारंभः निरूपितेहिकार्यार्थेऽधिकारिजिज्ञासाभवति तदुक्तंभट्टैः—'भारोयोयेनवोढव्यःसप्रागांदोलितोयदा । तदाक

इतिगुह्यतमंशास्त्रमिदमुक्तंमयाऽनघ ॥ एतद्बुद्ध्वाबुद्धिमान्स्यात्कृतकृत्यश्चभारत ॥२०॥ इतिश्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्याया
योग पुराणपुरुषोत्तमयोगोनामपंचदशोऽध्यायः ॥ १५ ॥ ॥ श्रीभगवानुवाच ॥ ॥ अभयंसत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ॥
दानंदमश्चयज्ञश्चस्वाध्यायस्तपआर्जवम् ॥१॥ अहिंसासत्यमक्रोधस्त्यागःशांतिरपैशुनम् ॥ दयाभूतेष्वलोलुप्त्वंमार्दवंह्रीरचापलम् ॥२॥

स्तस्यवोढेतिशक्यंकर्तुंनिरूपणम्'इति तत्राधिकारिविशेषणभूतांदैवींसंपदमाह श्रीभगवानुवाच।अभयमितित्रिभिःअभयंभयाभावः । सत्वस्यचित्तस्यसंशुद्धिःसुप्रस
न्नता ज्ञानयोगेआत्मज्ञानोपायेव्यवस्थितिःपरिनिष्ठा दानंस्वभोज्यस्यान्नादेर्यथोचितंसंविभागः दमोबाह्येंद्रियसंयमःयज्ञोयथाधिकारंदर्शपूर्णमासादिः स्वाध्यायो
ब्रह्मयज्ञादिर्जपयज्ञः तपउत्तराध्यायेवक्ष्यमाणंशारीरादि आर्जवमवक्रता ॥ १ ॥ किंच अहिंसेति । अहिंसापरपीडावर्जनम् सत्यंयथार्थभाषणम् अक्रोधस्ता
डितस्यापिचित्तेक्षोभानुत्पत्तिः त्यागऔदार्यम् शांतिश्चित्तोपरतिः पैशुनंपरोक्षेपरदोषप्रकाशनम् तद्वर्जनमपैशुनम् भूतेषुदीनेषुदया अलोलुप्त्वं लोभाभावः

अवर्णलोपआर्षः मार्दवंमृदुत्वमक्रूरता ह्रीः अकार्यप्रवृत्तौलोकलज्जा अचापलंव्यर्थक्रियाराहित्यम् ॥ २ ॥ किंच तेजइति । तेजःप्रागल्भ्यं क्षमापरिभवा दिषूत्पद्यमानेषुक्रोधप्रतिबंधः धृतिर्दुःखादिभिरवसीदतश्चित्तस्यस्थिरीकरणम् शौचंबाह्याभ्यंतरशुद्धिः अद्रोहोजिघांसाराहित्यं अतिमानिताआत्मन्यतिपूज्यत्वा भिमानस्तदभावोनातिमानिता एतान्यभयादीनिषाड्विंशतिप्रकाराणिदैवींसंपदमभिजातस्यभवंति देवयोग्यांसात्विकींसंपदमभिलक्ष्यतदाभिमुख्येनजातस्यभावि कल्याणस्यपुंसोभवंतीत्यर्थः ॥ ३ ॥ आसुरींसंपदमाह दंभइति । दंभोधर्मध्वजित्वम् दर्पोधनविद्यादिनिमित्तश्चित्तस्योत्सेकः अभिमानोव्याख्यातः क्रोधः प्रसिद्धः पारुष्यंनिष्ठुरत्वम् अज्ञानमविवेकः आसुरीमित्युपलक्षणम् असुराणांराक्षसानाचयासंपत् तामासुरीमभिलक्ष्यजातस्यैतानिदंभादीनिभवंतीत्यर्थः ॥ ४ ॥

तेजःक्षमाधृतिःशौचमद्रोहोनातिमानिता ॥ भवंतिसंपदंदैवीमभिजातस्यभारत ॥ ३ ॥ दंभोदर्पोऽभिमानश्चक्रोधःपारुष्यमेवच ॥ अज्ञानंचाभिजातस्यपार्थसंपदमासुरीम् ॥ ४ ॥ दैवीसंपद्विमोक्षायनिबंधायासुरीमता ॥ माशुचःसंपदंदैवीमभिजातोऽसिपांडव ॥ ५ ॥ द्वौभूतसर्गौलोकेऽस्मिन्दैवआसुरएवच ॥ दैवोविस्तरशःप्रोक्तआसुरंपार्थमेशृणु ॥ ६ ॥

एतयोःसंपदोःकार्यंदर्शयन्नाह दैवीसंपदिति । दैवीयासंपत्तयायुक्तोमयोक्तेतत्त्वज्ञानेऽधिकारी आसुर्यासंपदायुक्तस्तुनित्यंसंसारीत्यर्थः एतच्छ्रुत्वा किमहमत्राधिकारी नवेति संदेहव्याकुलचित्तमर्जुनमाश्वासयति हेपांडव ! माशुचः शोकंमाकार्षीः यतस्त्वंदैवींसंपदमभिजातोऽसि ॥ ५ ॥ आसुरीसंपत् सर्वात्मनावर्जयितव्येत्येत दर्थमासुरींसंपदंप्रपंचायितुमाह द्वाविति । द्वौद्विःप्रकारौभूतानांसर्गौ मेमद्वचनाच्छृणु आसुरराक्षसप्रकृत्योरेकीकरणेनद्वावित्युक्तम् अतोराक्षसीमासुरींचैवप्रकृतिं मोहिनींश्रिताइत्यादिनानवमाध्यायोक्तप्रकृतित्रैविध्येनाविरोधः स्पष्टमन्यत ॥ ६ ॥

१९

आसुरींविस्तरतोनिरूपयति प्रवृत्तिंचेत्यादिद्वादशभिः धर्मेप्रवृत्तिंच अधर्मान्निवृत्तिं च आसुरस्वभावाजनानजानंति ,अतःशौचमाचारःसत्यंचतेषुनास्त्येव ॥७॥ ननुवेदोक्तयोर्धर्माधर्मयोःप्रवृत्तिनिवृत्तिंचकथंनविदुः कुतोवाधर्माधर्मयोरनंगीकारे जगतःसुखदुःखादिव्यवस्थास्यात् कथंवाशौचाचारादिविषयामीश्वराज्ञामातिवर्तेरन् ईश्वरानंगीकारेचकुतोजगदुत्पत्तिःस्यादतआह असत्यमिति। नास्तिसत्यंवेदपुराणादिप्रमाणंयस्मिन् तादृशंजगदाहुः वेदादीनांप्रामाण्यंनमन्यंतइत्यर्थः तदुक्तम्-'त्रयोवेदस्यकर्तारोभण्डधूर्तनिशाचरा'इत्यादि अतएवनास्तिधर्माधर्मरूपाप्रतिष्ठाव्यवस्थाहेतुर्यस्यतत् स्वाभाविकंजगद्वैचित्र्यमाहुरित्यर्थः अतएवनास्तीश्वरः

प्रवृत्तिंचनिवृत्तिंचजनानविदुरासुराः ॥ नशौचंनापिचाचारोनसत्यंतेषुविद्यते ॥ ७ ॥ असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरम् ॥ अपरस्परसंभूतंकिमन्यत्कामहैतुकम् ॥ ८ ॥ एतांदृष्टिमवष्टभ्यनष्टात्मानोऽल्पबुद्धयः ॥ प्रभवंत्युग्रकर्माणःक्षयायजगतोहिताः ॥ ९ ॥ काममाश्रित्यदुष्पूरंदंभमानमदान्विताः ॥ मोहाद्गृहीत्वासद्ग्राहान्प्रवर्ततेशुचिव्रताः ॥ १० ॥

कर्ताव्यवस्थापकश्चयस्यतादृशंजगदाहुः तर्हिकुतोऽस्यजगतउत्पत्तिंवदंतीत्यतआह अपरस्परसंभूतमिति। अपरश्चपरश्चेत्यपरस्परं अन्योऽन्यतःस्त्रीपुरुषमिथुनात् संभूतंजगत् किमन्यत्कारणमस्य नास्त्यन्यत्किंचित् किंतुकामहैतुकम् स्त्रीपुरुषयोःकामएवप्रवाहरूपेणहेतुरस्येत्याहुरित्यर्थः ॥ ८ ॥ किंच एतामिति। एतांलोकायतिकानांदृष्टिंदर्शनमाश्रित्यनष्टात्मानोमलिनचित्ताःसंतोऽल्पबुद्धयः दृष्टार्थमात्रमतयः अतएवउग्रंहिंस्रंकर्मयेषांतेऽहितावैरिणोभूत्वाजगतःक्षयायप्रभवंतिउद्भवंतीत्यर्थः॥९॥अपिच काममिति। दुष्पूरंपूरयितुमशक्यंकाममाश्रित्यदंभादिभिर्युक्ताःसंतःक्षुद्रदेवताराधनादौप्रवर्तंते कथम् असद्ग्राहान्गृहीत्वाऽनेन

मंत्रैणैतांदेवतामाराध्यमहाविधीन्साधयिष्यामइत्यादिदुराग्रहान्मोहमात्रेणस्वीकृत्यप्रवर्तंते अशुचिव्रताअशुचीनिमद्यमांसादिविषयाणिव्रतानियेषांते ॥ १० ॥ किंच चिंतामिति । प्रलयोमरणमेवांतोयस्यास्ताम् अपरिमेयांपरिमातुमशक्यांचिंतामाश्रिताः नित्यचिंतापरायणाइत्यर्थः कामोपभोगएवपरमोयेषांते एतावदितिकामोपभोगएवपरमःपुरुषार्थोनान्यदस्तीतिकृतनिश्चयाः अर्थसंचयानीहंतइत्युत्तरेणान्वयः तथाच बार्हस्पत्यंसूत्रम्-"कामएवैकःपुरुषार्थइतिचैतन्यविशिष्टःकामःपुरुषइतिच" ॥ ११ ॥ अतएव आशेति । आशाएवपाशास्तेषांशतानितैर्बद्धाः इतस्ततआकृष्यमाणाः कामक्रोधौपरमयनमाश्रयोयेषांते कामभोगार्थम

चिंतामपरिमेयांचप्रलयांतामुपाश्रिताः ॥ कामोपभोगपरमाएतावदितिनिश्चिताः ॥ ११ ॥ आशापाशशतैर्बद्धाःकामक्रोधपरायणाः ॥ ईहंतेकामभोगार्थमन्यायेनार्थसंचयान् ॥ १२ ॥ इदमद्यमयालब्धमिमंप्राप्स्येमनोरथम् ॥ इदमस्तीदमपिमेभविष्यतिपुनर्धनम् ॥ १३ ॥ असौमयाहतःशत्रुर्हनिष्येचापरानपि ॥ ईश्वरोऽहमहंभोगीसिद्धोऽहंबलवान्सुखी ॥ १४ ॥ आढ्योऽभिजनवानस्मिकोऽन्योऽस्तिसदृशोमया ॥ यक्ष्येदास्यामिमोदिष्यइत्यज्ञानाविमोहिताः ॥ १५ ॥

न्यायेनचौर्यादिनाऽर्थानांसंचयान्राशीनीहंतेइच्छंति ॥ १२ ॥ तेषांमनोराज्यंकथयन्नरकप्राप्तिमाह इदमद्येतिचतुप्राप्स्येः प्राप्स्यामि मनोरथंमनसःप्रियम् शेषस्पष्टम् एषांत्रयाणांश्लोकानामित्यज्ञानविमोहिताःसंतोनरकेपतंतीतिचतुर्थेनान्वयः ॥ १३ ॥ किंच असाविति । सिद्धःकृतकृत्यः स्पष्टमन्यत् ॥ १४ ॥ किंच आढ्यइति । आढ्योधनादिसंपन्नः अभिजनवान्कुलीनः यक्ष्येयागाद्यनुष्ठानेनापिदीक्षितांतरेभ्यःसकाशान्महतींप्रतिष्ठांप्राप्स्यामि दास्यामिस्तावकेभ्यश्चमोदिष्येहर्षंप्राप्स्यामीत्येवमज्ञानेनाविमोहिताः मिथ्याभिनिवेशंप्रापिताः ॥ १५ ॥

एवंभूतायत्प्राप्नुवंतितच्छृणु अनेकेति । अनेकेषुमनोरथेषुप्रवृत्तंचित्तमनेकचित्तंतेनविभ्रांताःविक्षिप्ताः तेनैवमोहमयेनजालेनसमावृताः मत्स्याइवसूत्रमयेनजा लेनयंत्रिताः एवंकामभोगेषुसक्ताःअभिनिविष्टाःसंतोऽशुचौकश्मलेनरकेपतंति ॥ १६ ॥ यक्ष्यइतिचयस्तेषांमनोरथउक्तः सकेवलंदंभाहंकारादिप्रधानएव नतुसात्विकइत्यभिप्रायेणाह आत्मसंभाविताइतिद्वाभ्यां । आत्मनैवसंभाविताःपूज्यतांनीताः नतुसाधुभिःकैश्चित् अतएवस्तब्धाअनम्राः धनेनयोमानोमद श्चताभ्यामन्विताःसंतः नाममात्रेणयेयज्ञास्तेनामयज्ञाः यद्वादीक्षितः सोमयाजीत्येवमादिनानाममात्रप्रसिद्धयेयेयज्ञास्तैर्यजंते कथम् दंभेन नतुश्रद्धया

अनेकचित्तविभ्रांतामोहजालसमावृताः ॥ प्रसक्ताःकामभोगेषुपतंतिनरकेऽशुचौ ॥ १६ ॥ आत्मसंभाविताःस्तब्धाधनमानमदा न्विताः ॥ यजंतेनामयज्ञैस्तेदंभेनाविधिपूर्वकम् ॥ १७ ॥ अहंकारंबलंदर्पंकामंक्रोधंचसंश्रिताः ॥ मामात्मपरदेहेषुप्रद्विषंतोऽभ्य सूयकाः ॥ १८ ॥ तानहंद्विषतःक्रूरान्संसारेषुनराधमान् ॥ क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु ॥ १९ ॥

अविधिपूर्वकंचयथाभवतितथा ॥ १७ ॥ अविधिपूर्वकत्वमेवप्रपंचयति अहंकारमिति । अहंकारादिसंश्रिताःसंतः आत्मपरदेहेषुस्वदेहेषुपरदेहेषुचचिदंशेन स्थितंमांप्रद्विषंतोयजंते दंभयज्ञेषुश्रद्धायाअभावात् आत्मनोवृथैवपीडाभवति तथापश्वादीनामपिअविधिनाहिंसायांचैतन्यद्रोहमात्रमेवावशिष्यतइतिप्रद्विषं तइत्युक्तं अभ्यसूयकाःसन्मार्गवर्तिनांगुणेषुदोषारोपकाः ॥ १८ ॥ तेषांकदाचिदप्यासुरस्वभावप्रच्युतिर्नभवतीत्याह तानितिद्वाभ्यां । तानहंमांद्विषतःक्रूरा न्संसारेषुजन्ममृत्युमार्गेषु तत्रापिआसुरीष्वेव अतिक्रूरासुव्याघ्रादियोनिषु अजस्रमनवरतंक्षिपामि तेषांपापकर्मणांतादृशंफलंददामीत्यर्थः ॥ १९ ॥

किंच आसुरीमिति । तेच मामप्राप्यैवेत्येवकारेणमत्प्राप्तिशंकाकुतस्तेषां मत्प्राप्त्युपायंसन्मार्गमप्यप्राप्यततोऽप्यधमांगतिंकृमिकीटादियोनिंयांतीत्युक्तंशेषंस्पष्टम्
॥ २० ॥ उक्तानामासुरदोषाणांमध्येसकलदोषमूलभूतंदोषत्रयंसर्वथावर्जनीयमित्याह त्रिविधमिति । कामःक्रोधोलोभश्चेतीदंत्रिविधंनरकस्यद्वारम् अतएवात्म
नोनाशनंनीचयोनिप्रापकं तस्मादेतत्त्रयंसर्वात्मनात्यजेत् ॥ २१ ॥ त्यागेचविशिष्टफलमाह एतैरिति । तमसोनरकस्यद्वारभूतैरेतैस्त्रिभिःकामादिभिर्विमुक्तोनरः
आत्मनःश्रेयःसाधनंतपोयोगादिकमाचरति ततश्चमोक्षंप्राप्नोति ॥ २२ ॥ कामादित्यागश्चस्वधर्माचरणंविनानभवतीत्याह यइति । शास्त्रविधिंवेदविहितंधर्ममुत्सृज्य

आसुरींयोनिमापन्नामूढाजन्मनिजन्मनि ॥ मामप्राप्यैवकौंतेयततोयांत्यधमांगतिम् ॥ २० ॥ त्रिविधंनरकस्येदंद्वारंनाशनमात्मनः ॥
कामःक्रोधस्तथालोभस्तस्मादेतत्त्रयंत्यजेत् ॥ २१ ॥ एतैर्विमुक्तःकौंतेयतमोद्वारैस्त्रिभिर्नरः ॥ आचरत्यात्मनःश्रेयस्ततोयातिपरांगति
म् ॥२२॥ यःशास्त्रविधिमुत्सृज्यवर्ततेकामकारतः ॥ नससिद्धिमवाप्नोतिनसुखंनपरांगतिम् ॥२३॥ तस्माच्छास्त्रंप्रमाणंतेकार्याकार्यव्य
वस्थितौ ॥ ज्ञात्वाशास्त्रविधानोक्तंकर्मकर्तुमिहार्हसि ॥ २४ ॥ इतिश्रीम०भ०दैवासुरसंपद्विभागयोगोनाम षोडशोऽध्यायः ॥ १६ ॥

यःकामकारतोयथेच्छंवर्तते ससिद्धिंतत्त्वज्ञानंनप्राप्नोति नचसुखमुपशमं नचपरांगतिंमुक्तिंप्राप्नोति ॥ २३ ॥ फलितमाह तस्मादिति । इदंकार्यमिदमकार्यमि
त्यस्यांव्यवस्थायांतेतवशास्त्रंश्रुतिस्मृतिपुराणादिकमेवप्रमाणं अतःशास्त्रविधानोक्तंकर्मज्ञात्वाइहकर्माधिकारेवर्तमानोयथाऽधिकारंकर्मकर्तुमर्हसि तन्मूलत्वात्स
त्वशुद्धिसम्यग्ज्ञानमुक्तीनामित्यर्थः ॥ २४ ॥ 'देवदैतेयसंपत्तिसंविभागेनषोडशे ॥ तत्त्वज्ञानेऽधिकारस्तुसात्विकस्येतिदर्शितम् ॥ १ ॥' इतिसुबोधिन्यांटीकायां
श्रीधरस्वामिविरचितायांषोडशोऽध्यायः ॥ १६ ॥

'उक्ताधिकांरहेतूनांश्रद्धामुख्यातुसात्त्विकी॥इतिसप्तदशेगौणश्रद्धाभेदस्त्रिधोच्यते ॥१॥' पूर्वाध्यायांते 'यःशास्त्रविधिमुत्सृज्यवर्ततेकामकारतः नससिद्धिमवाप्नो
ति'इत्यनेनशास्त्रोक्तविधिमुत्सृज्यकामकारेणवर्तमानस्यज्ञानेऽधिकारोनास्तीत्युक्तं तत्रशास्त्रविधिमुत्सृज्यकामकारंविनाश्रद्धयावर्तमानानांकिमधिकारोऽस्तिनास्ति
वेतिबुभुत्सया अर्जुनउवाच यइति । अत्रशास्त्रविधिमुत्सृज्ययजंतेइत्यनेनशास्त्रार्थंबुद्ध्वातमुल्लंघ्यवर्तमानाश्चगृह्यंते तेषांश्रद्धयायजनानुपपत्तेः आस्तिक्यबुद्धिर्हिश्र
द्धा नचासौशास्त्रज्ञानवतांशास्त्रविरुद्धेऽर्थेसंभवति तानेवाधिकृत्यत्रिविधाभवतिश्रद्धा यजंतेसात्विकादेवानित्याद्युत्तरानुपपत्तेश्च अतोनात्रशास्त्रातिलंघिनो
गृह्यंते अपितुक्लेशबुद्ध्याआलस्याद्वाशास्त्रार्थज्ञानेप्रयत्नमकृत्वाकेवलमाचारपरंपरावशेनश्रद्धयाक्वचिद्देवताराधनादौप्रवर्तमानागृह्यंते अतोऽयमर्थः येशास्त्रविधि

॥ अर्जुनउवाच ॥ येशास्त्रविधिमुत्सृज्ययजंतेश्रद्धयाऽन्विताः॥ तेषांनिष्ठातुकाकृष्णसत्त्वमाहोरजस्तमः ॥ १ ॥

श्रीभगवानुवाच ॥ त्रिविधाभवतिश्रद्धादेहिनांसास्वभावजा ॥ सात्त्विकीराजसीचैवतामसीचेतितांशृणु ॥२॥

मुत्सृज्यदुःखबुद्ध्याआलस्याद्वाअनादृत्यकेवलमाचारप्रामाण्येनश्रद्धयान्विताःसंतोयजंते तेषांतुकानिष्ठाकास्थितिःकआश्रयः तामेवविशेषणपृच्छति किंसत्त्वं
आहोकिंवारजः अथवातमइति तेषांतादृशीदेवपूजादिप्रवृत्तिःकिंसत्त्वसंश्रितारजःसंश्रितावातमःसंश्रितावेत्यर्थः श्रद्धायाःसात्त्विकत्वात् क्लेशबुद्ध्याआलस्ये
नचशास्त्रानादरस्यचराजसतामसत्वात्त्रेधासंदेहः यदिसत्त्वभावसंश्रितास्तर्हितेषामपिसात्त्विकत्वाद्यथोक्तात्मज्ञानेऽधिकारःस्यात् अन्यथानेतिप्रश्नतात्पर्यार्थः॥१॥
अत्रोत्तरंश्रीभगवानुवाच त्रिविधेति । अयमर्थःशास्त्रतत्त्वज्ञानतःप्रवर्तमानानांपरमेश्वरपूजाविषयासात्त्विकीएकविधैवश्रद्धा लोकाचारमात्रेणतुप्रवर्तमानानांदे
हिनांयाश्रद्धासातुसात्त्विकीराजसीतामसीचेतित्रिविधाभवति–तत्रहेतुः स्वभावजा स्वभावःपूर्वकर्मसंस्कारस्तस्माज्जातास्वभावजा स्वभावमन्यथाकर्तुंसमर्थाहि

शास्त्रोक्तंविवेकज्ञानंतत्तुतेषांनास्ति अतःकेवलंस्वभावेनैवभवतीतिश्रद्धात्रिविधाभवतितामिमांत्रिविधांश्रद्धांशृणु तदुक्तम् व्यवसायात्मिकाबुद्धिरेकेहकुरुनंदने त्यादिना ॥२॥ ननुचश्रद्धासात्त्विक्येवसत्त्वकार्यत्वेनत्वयैवभगवताउद्धवंप्रतिनिर्दिष्टत्वात् यथोक्तम् 'शमोदमस्तितिक्षेज्यातपःसत्यंदयास्मृतिः। तुष्टिस्त्यागोऽस्पृहाश्रद्धाह्रीर्दयानिर्वृतिर्धृतिः' इत्येताःसत्त्वस्यवृत्तयइति अतःकथंतस्यास्त्रैविध्यमुच्यते सत्यम् तथाऽपिरजस्तमोयुक्तपुरुषाश्रयत्वेनरजस्तमोमिश्रत्वेनसत्वस्य त्रैविध्यात् श्रद्धायाअपित्रैविध्यंघटतइत्याह सत्त्वानुरूपेति।सत्त्वानुरूपासत्त्वतारतम्यानुसारिणीसर्वस्यविवेकिनोऽविवेकिनोवालोकस्यश्रद्धाभवति तस्मादयं पुरुषः लौकिकः श्रद्धामयः श्रद्धाविकारः त्रिविधयाश्रद्धयाविक्रियतइत्यर्थः तदेवाह योयच्छ्रद्धः यादृशीश्रद्धायस्यसएवसः तादृश्याश्रद्धयायुक्तएवसःयः

सत्त्वानुरूपासर्वस्यश्रद्धाभवतिभारत ॥ श्रद्धामयोऽयंपुरुषोयोयच्छ्रद्धःसएवसः ॥ ३ ॥
यजंतेसात्त्विकादेवान्यक्षरक्षांसिराजसाः ॥ प्रेतान्भूतगणांश्चान्येयजंतेतामसाजनाः ॥ ४ ॥

पूर्वंसत्त्वोत्कर्षेणसात्त्विकश्रद्धयायुक्तः पुरुषःसपुनस्तादृशसत्त्वसंस्कारेणसात्त्विकश्रद्धयायुक्तएवभवति यस्तुरजसउत्कर्षेणराजसश्रद्धायुक्तः सपुनस्तादृशएव भवति यस्तुतमसउत्कर्षेणतामसश्रद्धयायुक्तःसपुनस्तादृशएवभवति इतिलोकाचारमात्रेणप्रवर्तमानेष्वेवंसात्त्विकराजसतामसश्रद्धाव्यवस्थाशास्त्रजनितविवेक ज्ञानयुक्तानांतुस्वभावविजयेनसात्त्विक्येकैवश्रद्धेतिप्रकरणार्थः ॥ ३ ॥ सात्त्विकादिभेदमेवकार्यभेदेनप्रपंचयति यजंतइति। सात्त्विकाजनाःसत्त्वप्रकृतीन्देवाने वयजंतेपूजयंति राजसास्तुरजःप्रकृतीन्यक्षान्राक्षसांश्चयजंते एतेभ्योऽन्येतुविलक्षणास्तामसाजनास्तामसानेवप्रेतान्भूतगणांश्चयजंते सत्त्वादिप्रकृतीनांतत्तद्दे वतानांतुपूजारुचिभिस्तत्तत्पूजकानांसात्त्विकत्वादिज्ञातव्यमित्यर्थः ॥ ४ ॥

राजसतामसेषुपुनर्विशेषांतरमाह अशास्त्रविहितमितिद्वाभ्यां। शास्त्रविधिमजानंतोऽपिकेचित्प्राचीनपुण्यसंस्कारेणोत्तमाःसात्त्विकाएवभवंति केचित्तुमध्यमाराजसा भवंति अधमास्तुतामसाभवंति येपुनरत्यंतंमंदभाग्याः गतानुगत्यापाखंडसंगेनचतदाचारानुवर्तिनःसंतःअशास्त्रविहितंघोरंभूतभयंकरंतपस्तप्यंतेकुर्वंति तत्रहेत वः—दंभाहंकाराभ्यांसंयुक्ताः तथाकामोऽभिलाषः रागःआसक्तिः बलमाग्रहः एतैरन्विताःसंतः तानासुरनिश्चयान्विद्धीत्युत्तरेणान्वयः ॥ ५ ॥ किंचकर्षयं तइति।शरीरस्थंप्रारंभकत्वेनदेहेस्थितंभूतानांपृथिव्यादीनांग्रामंसमूहंकर्षयंतःवृथैवोपवासादिभिःकृशंकुर्वंतोऽचेतसोऽविवेकिनः मांचअंतर्यामितयाअंतःशरीरस्थं

अशास्त्रविहितंघोरंतप्यंतेयेतपोजनाः ॥ दंभाहंकारसंयुक्ताःकामरागबलान्विताः ॥ ५ ॥ कर्षयंतःशरीरस्थंभूतग्राममचेतसः ॥ मांचैवांतःशरीरस्थंतान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥ आहारस्त्वपिसर्वस्यत्रिविधोभवतिप्रियः ॥ यज्ञस्तपस्तथादानंतेषंभेदमिमंशृणु ॥ ७ ॥ आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ॥ रस्याःस्निग्धाःस्थिराहृद्याआहाराःसात्त्विकप्रियाः ॥ ८ ॥

देहमध्येस्थितं मदाज्ञालंघनेनैवकर्षयंतःसंतएवयेतपश्चरंति तानासुरनिश्चयानासुरोऽतिक्रूरोनिश्चयोयेषांतान्विद्धि ॥ ६ ॥ आहारादिभेदादपिसात्त्विकादिभेदंदर्श यितुमाह आहारस्त्वित्यादित्रयोदशभिः। सर्वस्यापिजनस्ययआहारोन्नादिःसतुयथायथंत्रिविधःप्रियोभवति यथायज्ञतपोदानानिचात्रिविधानिभवंति तेषांचवक्ष्य माणमिमंभेदंशृणु एतच्चराजसतामसाहारयज्ञादिपरित्यागेनसात्त्विकाहारयज्ञादिसेवयासत्त्ववृद्धौयत्नःकर्तव्यइत्येतदर्थंकथ्यते ॥ ७ ॥ तत्राहारत्रैविध्यमाह आयुरितीत्रिभिः। आयुर्जीवितम् सत्त्वमुत्साहः बलंशक्तिः आरोग्यंरोगराहित्यम् सुखंचित्तप्रसादः प्रीतिरभिरुचिः आयुरादीनांविवर्धनाःविशेषेणवृद्धिकरा

स्तेचरस्यारसवंतः स्निग्धाःस्नेहयुक्ताःस्थिरादेहेसारांशेनचिरकालावस्थायिनाहृद्यादृष्टमात्राएवहृदयंगमाः एवंभूताआहाराभक्ष्यभोज्यादयःसात्त्विकप्रियाः ॥ ८ ॥
तथा कट्विति। अतिशब्दःकट्वादिषुसप्तस्वपिसंबध्यते अतिकटुर्निंबादिः अत्यम्लोतिलवणोत्युष्णश्चप्रसिद्धः अतितीक्ष्णोमरीचादिः अतिरूक्षःकंगुकोद्रवादिःअति
विदाहीसर्षपादिः अतिकट्वादयआहाराराजसस्येष्टाःप्रियाः दुःखंतात्कालिकंहृदयसंतापादिः शोकःपश्चाद्भाविदौर्मनस्यं आमयोरोगःएतान्प्रददतिप्रयच्छंतीति
तथा ॥ ९ ॥ तथा यातयाममिति । यातोयामःप्रहरोयस्यपक्कस्योदनादेस्तद्यातयामंशैत्यावस्थांप्राप्तमित्यर्थः गतरसंनिष्पीडितसारम् पूतिदुर्गंधं पर्युषितंदिनांतरप

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ॥ आहाराराजसस्येष्टादुःखशोकामयप्रदाः ॥ ९ ॥ यातयामंगतरसंपूति
पर्युषितंचयत् ॥ उच्छिष्टमपिचामेध्यंभोजनंतामसप्रियम् ॥ १० ॥ अफलाकांक्षिभिर्यज्ञोविधिदृष्टोयइज्यते ॥
यष्टव्यमेवेतिमनःसमाधायससात्त्विकः ॥ ११ ॥ अभिसंधायतुफलंदंभार्थमपिचैवयत् ॥ इज्यतेभरतश्रेष्ठतंयज्ञंवि
द्धिराजसम् ॥ १२ ॥ विधिहीनमसृष्टान्नंमंत्रहीनमदक्षिणम् ॥ श्रद्धाविरहितंयज्ञंतामसंपरिचक्षते ॥ १३ ॥

क्वम् उच्छिष्टं अन्यभुक्तावशिष्टम् अमेध्यमभक्ष्यंकलंजादि एवंभूतंभोजनंभोज्यंतामसस्याप्रियम् ॥१०॥ यज्ञोऽपित्रिविधः तत्रसात्त्विकंयज्ञमाह—अफलाकांक्षि
भिरितित्रिभिः । फलाकांक्षारहितैःपुरुषैर्विधिनादृष्टःआवश्यकतयाविहितोयोयज्ञइज्यतेअनुष्ठीयते ससात्त्विकोयज्ञःकथमिज्यते यष्टव्यमेवेतियज्ञानुष्ठानमेवकार्यंना
न्यत्फलंसाधनीयमित्येवंमनःसमाधायएकाग्रंकृत्वेत्यर्थः ॥ ११ ॥ राजसंयज्ञमाह अभिसंधायेति । फलमभिसंधायउद्दिश्ययस्त्विज्यते यज्ञःक्रियते दंभार्थं
स्वमहत्त्वख्यापनार्थंतंयज्ञंराजसंविद्धि ॥ १२ ॥ तामसंयज्ञमाह विधिहीनमिति । विधिहीनं शास्त्रोक्तविधिशून्यम् असृष्टान्नंब्राह्मणादिभ्योनसृष्टंननिष्पादित

मन्नंयस्मिंस्तम् मंत्रहीनंयथोक्तदक्षिणाराहितंच श्रद्धाशून्यंयज्ञंतामसंपरिचक्षते कथयंतिशिष्टाः ॥ १३ ॥ तपसःसात्त्विकादिभेदंदर्शयितुंप्रथमंतावच्छरी
रादिभेदेनतस्यत्रैविध्यमाह देवद्विजेतित्रिभिः। प्राज्ञागुरुव्यतिरिक्ताः अन्येपितत्त्वविदः देवब्राह्मणादिपूजनंशौचादिकंशारीरंशरीरनिर्वर्त्यंतपउच्यते ॥ १४ ॥
वाचिकंतपआह अनुद्वेगेति। उद्वेगंभयंनकरोतीत्यनुद्वेगकरंवाक्यं सत्यंच श्रोतुःप्रियंच हितंचपरिणामेसुखकरम् स्वाध्यायाभ्यसनंवेदाभ्यासश्चवाङ्मयम् वाचा
निर्वर्त्यंतपः ॥ १५ ॥ मानसंतपआह मनःप्रसादइति । मनसःप्रसादःस्वस्थता सौम्यत्वमक्रूरता मौनंमुनेर्भावः मननमित्यर्थः आत्मनोमनसोविनिग्रहःविष

देवद्विजगुरुप्राज्ञपूजनंशौचमार्जवम् ॥ ब्रह्मचर्यमहिंसाचशारीरंतपउच्यते ॥ १४ ॥ अनुद्वेगकरंवाक्यंसत्यंप्रियहितं
चयत् ॥ स्वाध्यायाभ्यसनंचैववाङ्मयंतपउच्यते ॥ १५ ॥ मनःप्रसादःसौम्यत्वंमौनमात्मविनिग्रहः ॥ भावसंशु
द्धिरित्येतत्तपोमानसमुच्यते ॥ १६ ॥ श्रद्धयापरयातप्तंतपस्तत्रिविधंनरैः ॥ अफलाकांक्षिभिर्युक्तैःसात्त्विकंपरिच
क्षते ॥ १७ ॥ सत्कारमानपूजार्थंतपोदंभेनचैवयत् ॥ क्रियतेतदिहप्रोक्तंराजसंचलमध्रुवम् ॥ १८ ॥

येभ्यःप्रत्याहारः भावसंशुद्धिर्व्यवहारेमायाराहित्यम् इत्येतन्मानसंतपः ॥ १६ ॥ तदेवंशरीरवाङ्मनोभिर्निर्वर्त्यंत्रिविधंतपोदर्शितं त्रिविधस्यापितपसःसात्त्विका
दिभेदेनत्रैविध्यमाह श्रद्धयेतित्रिभिः। त्रिविधमपितपःश्रेष्ठयाश्रद्धयाफलाकांक्षाशून्यैर्युक्तैरेकाग्रचित्तैर्नरैस्तप्तंतत्सात्त्विकंकथयंति ॥ १७ ॥ राजसंतपआह स
त्कारःसाधुकारःसाधुरयमितितापसइत्यादिवाक्पूजा मानःप्रत्युत्थानाभिवादनादिर्दैहिकीपूजाऽर्थलाभादिः एतदर्थंदंभेनचयत्तपःक्रियते अतएवचलंअनियतंअ
ध्रुवंचक्षणिकंयदेवंभूतंतपस्तदिहराजसंप्रोक्तम् ॥ १८ ॥

तामसंतपआह मूढेति । मूढग्राहेणाविवेककृतेनदुराग्रहेणात्मनःपीडयायत्तपःक्रियतेपरस्योत्सादनार्थंवाऽन्यस्यविनाशार्थमाभिचाररूपं तत्तामससमुदाहृतंकथितम्
॥ १९ ॥ पूर्वंप्रतिज्ञातमेवदानस्यत्रैविध्यमाह दातव्यमिति। दातव्यमित्येवंनिश्चयेनयद्दानंदीयते अनुपकारिणेप्रत्युपकारासमर्थाय देशेकुरुक्षेत्रादौ कालेग्रहणादौ
पात्रेचेतिदेशकालादिसाहचर्यात्सप्तमीप्रत्युक्ता पात्रभूतायतपःश्रुतादिसंपन्नाय ब्राह्मणायेत्यर्थः यद्वा पात्रइतिचतुर्थ्येवैषापात्रेइतितृजंतं रक्षकायेत्यर्थः सहिसर्व
स्मादापद्गणाद्दातारंपातीति यदेवंभूतंदानंतत्सात्त्विकम् ॥ २० ॥ राजसंदानमाह यत्त्विति । कालांतरेऽयंमांप्रत्युपकारंकरिष्यतीत्येवमर्थम् फलंवास्वर्गादिकमुद्दि

मूढग्राहेणात्मनोयत्पीडया क्रियतेतपः ॥ परस्योत्सादनार्थंवा तत्तामसमुदाहृतम् ॥ १९ ॥ दातव्यमितियद्दानंदी
यतेऽनुपकारिणे ॥ देशेकालेचपात्रेचतद्दानंसात्त्विकंस्मृतम् ॥ २० ॥ यत्तुप्रत्युपकारार्थंफलमुद्दिश्यवापुनः ॥
दीयतेचपरिक्लिष्टंतद्राजसमुदाहृतम् ॥ २१ ॥ अदेशकालेयद्दानमपात्रेभ्यश्चदीयते ॥ असत्कृतमवज्ञातंतत्ताम
समुदाहृतम् ॥२२॥ ॐतत्सदितिनिर्देशोब्रह्मणस्त्रिविधःस्मृतः ॥ ब्राह्मणास्तेनवेदाश्चयज्ञाश्चविहिताःपुराः ॥२३॥

श्ययत्पुनर्दानंदीयते परिक्लिष्टंचित्तक्लेशयुक्तंयथाभवत्येवंभूतं तद्दानंराजसमुदाहृतंकथितम ॥ २१ ॥ तामसंदानमाह अदेशेति। अदेशेअशुचिस्थाने अका
लेअशौचसमये अपात्रेभ्योविटनटनर्तकादिभ्योयद्दानंदीयते देशकालपात्रसंपत्तावपि असत्कृतंपादप्रक्षालनादिसत्कारशून्यम् अवज्ञातंतिरस्कारयुक्तं एवंभूतं
दानंतामससमुदाहृतम् ॥ २२ ॥ ननुचैवंविचार्यमाणेसर्वमपियज्ञतपोदानादिराजसतामसप्रायमेवेतिव्यर्थोयज्ञादिप्रयासइत्याशंक्यतथाविधस्यापिसात्त्विकत्वापा
दानप्रकारंदर्शयितुमाह ॐमिति । ॐतत्सदित्येवंत्रिविधोब्रह्मणःपरमात्मनोनिर्देशोनामव्यपदेशःस्मृतःशिष्टैः तत्रतावदोमितित्रिवृद्ब्रह्मेत्यादिश्रुतिप्रसिद्धेरोमिति

ब्रह्मणोनामजगत्कारणत्वेनातिप्रसिद्धत्वात् अविदुषापरोक्षत्वाच्चतच्छब्दोऽपिब्रह्मणोनाम परमार्थसत्त्वसाधुत्वप्रशस्तत्वादिभिःसच्छब्दोब्रह्मणोनाम "सदेवसौम्येदमग्रआसीत्"इत्यादिश्रुतेः अयंत्रिविधोऽपिनामानिर्देशोविगुणमपिसगुणीकर्तुंसमर्थइत्याशयेनस्तौति तेनत्रिविधेनब्रह्मणोनिर्देशेनब्राह्मणाश्चवेदाश्चयज्ञाश्चपूर्वंसृष्ट्यादौविहिताःविधात्रानिर्मिताःसगुणीकृतावा यद्वा यस्यायंत्रिविधोनिर्देशस्तेनपरमात्मनाब्राह्मणादयःपवित्रतमाःसृष्टास्तस्मात्तस्यायंत्रिविधोनिर्देशोऽतिप्रशस्तइत्यर्थः ॥ २३ ॥ इदानींप्रत्येकमोंकारादीनांप्राशस्त्यंदर्शयिष्यन्नोंकारस्यतदेवाह तस्मादिति । यस्मादेवंब्रह्मणोनिर्देशस्तस्मादोमित्युदाहृत्यउच्चार्यकृतावेदवादिनांयज्ञाद्याःशास्त्रोक्ताःक्रियाःसततंसर्वदाअंगवैकल्येऽपिप्रकर्षेणवर्तंते सगुणाभवंतीत्यर्थः ॥ २४ ॥ किंच द्वितीयंनामप्रस्तौति तदिति । उदाहृत्येतिपूर्वस्या

तस्मादोमित्युदाहृत्ययज्ञदानतपःक्रियाः ॥ प्रवर्तंतेविधानोक्ताःसततंब्रह्मवादिनाम् ॥ २४ ॥ तदित्यनभिसंधायफलंयज्ञतपःक्रियाः ॥ दानक्रियाश्चविविधाःक्रियंतेमोक्षकांक्षिभिः ॥ २५ ॥ सद्भावेसाधुभावेचसदित्येतत्प्रयुज्यते ॥ प्रशस्तेकर्मणितथा सच्छब्दःपार्थयुज्यते ॥ २६ ॥ यज्ञेतपसिदानेचस्थितिःसदितिचोच्यते ॥ कर्मचैवतदर्थीयंसदित्येवाभिधीयते ॥ २७ ॥

नुषंगः तदित्युदाहृत्यशुद्धचित्तैर्मोक्षकांक्षिभिःपुरुषैःफलाभिसंधिमकृत्वायज्ञाद्याःक्रियाःक्रियंते अतश्चित्तशोधनद्वारेणफलसंकल्पत्याजनेनमुमुक्षुत्वसंपादकत्वात्तच्छब्दनिर्देशःप्रशस्तइत्यर्थः ॥ २५ ॥ सच्छब्दस्यप्राशस्त्यमाह सद्भावइतिद्वाभ्याम् । सद्भावेअस्तित्वे देवदत्तस्यपुत्रादिकमस्तीत्यस्मिन्नर्थे साधुभावेचसाधुत्वेदेवदत्तस्यपुत्रादिश्रेष्ठमित्यस्मिन्नर्थेसदित्येतत्पदंप्रयुज्यते प्रशस्तेमांगलिकेविवाहादिकर्मणिचसदिदंकर्मेतिसच्छब्दोयुज्यतेप्रयुज्यते संगच्छतइतिवा ॥ २६ ॥ किंच यज्ञइति।यज्ञादिषुयास्थितिस्तात्पर्येणावस्थानंतदपिसदित्युच्यते यस्यचेदंनामत्रयंसएवपरमात्माअर्थःफलंयस्यतत्तदर्थंकर्मपूजोपहारगृहांगणपरिमार्जनोपलेप

रंगमांगलिकादिक्रियास्तत्सिद्धयेयदन्यत्कर्मक्रियतेउद्यानशालिक्षेत्रधनार्जनादिविषयं तत्कर्मतदर्थीयं तच्चातिव्यवहितमपिसदित्येवाभिधीयते यस्मादेवमतिप्रश
स्तमेतन्नामत्रयंतस्मादेतत्सर्वकर्मसाद्गुण्यार्थंकीर्तयेदितितात्पर्यार्थः अत्रचार्थवादानुपपत्त्याविधिःकल्प्यते विधेयंस्तूयतेवस्त्वितिन्यायात् अपरेतु प्रवर्ततेविधानो
क्ताः क्रियंतेमोक्षकांक्षिभिरित्यादिवर्तमानोपदेशःसमिधोयजतीत्यादिवद्विधितयापरिणमनीयइत्याहुः तत्तुसद्भावेसाधुभावेचेत्यादिषुप्राप्तार्थत्वान्नसंगच्छतइति
पूर्वोक्तक्रमेणविधिकल्पनैवज्यायसी ॥ २७ ॥ इदानींसर्वकर्मसुश्रद्धयैवप्रवृत्त्यर्थमश्रद्धाकृतंसर्वंनिंदति अश्रद्धयेति । अश्रद्धया हुतंहवनं दत्तंदानं तप्तंनिर्व
र्तितंतपः यच्चान्यदपिकृतंकर्म तत्सर्वमसदित्युच्यते यतस्तत्प्रेत्यलोकांतरेनफलति विगुणत्वान्नोइहनचास्मिन्लोकेफलति अयशस्करत्वात् ॥ २८ ॥

अश्रद्धयाहुतंदत्तंतपस्तप्तंकृतंचयत् ॥ असदित्युच्यतेपार्थनचतत्प्रेत्यनोइह ॥ २८ ॥ इतिश्रीमद्भगव०श्रद्धात्रययोगोनामसप्तदशो
ऽध्यायः ॥ १७ ॥ ॥ अर्जुनउवाच ॥ ॥ संन्यासस्यमहाबाहोतत्त्वमिच्छामिवेदितुम् ॥ त्यागस्यचहृषीकेशपृथक्केशिनिषूदन ॥ १ ॥

'रजस्तमोमयींत्यक्त्वाश्रद्धांसत्त्वमयींश्रितः ॥ तत्त्वज्ञानेऽधिकारीस्यादितिसप्तदशोस्थितम् ॥ १ ॥' इतिसुबोधिन्यांटीकायांसप्तदशोऽध्यायः ॥ १७ ॥ ॥
'न्यासत्यागविभागेनसर्वगीतार्थसंग्रहम् ॥ स्पष्टमष्टादशेप्राहपरमार्थविनिर्णये ॥१॥' अत्रच 'सर्वकर्माणिमनसासंन्यस्यास्तेसुखंवशी । संन्यासयोगयुक्तात्मात्या
दिषुकर्मसंन्यासउपदिष्टः तथा 'त्यक्त्वाकर्मफलासंगंनित्यतृप्तोनिराश्रयः । सर्वकर्मफलत्यागंततःकुरुयतात्मवान्' इत्यादिषुचफलमात्रत्यागेनकर्मानुष्ठानमुपदिष्टम्
नचपरस्परंविरुद्धं सर्वज्ञःपरमकारुणिकोभगवानुपदिशेत् अतःकर्मसंन्यासस्यतदनुष्ठानस्यचाविरोधप्रकारंबुभुत्सुरर्जुनउवाच संन्यासस्येति । भोहृषीकेशसर्वें
द्रियनियामक हेकेशिनिषूदन केशिनाम्नोहिमहतोहयाकृतेर्दैत्यस्ययुद्धेमुखंव्यादायभक्षयितुमागच्छतोऽत्यंतंव्यात्तेमुखेवामबाहुंप्रवेश्य तत्क्षणमेवविवृद्धेन

तेनैवबाहुनाकर्कटिकाफलवत्तांविदार्यनिषूदितवान् अतएव हेमहाबाहो इतिसंबोधनं संन्यासस्यत्यागस्यचतत्त्वंपृथग्विवेकेनवेदितुमिच्छामि ॥ १ ॥
तत्रोत्तरंश्रीभगवानुवाच काम्यानामिति।"पुत्रकामोयजेत स्वर्गकामोयजेत" इत्येवमादिकामोपबंधेनविहितानांकाम्यानांकर्मणांन्यासंपरित्यागंसंन्यासंकवयोविदुः
सम्यक्फलैः सहसर्वकर्मणामपिन्यासंसंन्यासंपंडिताविदुः जानंतीत्यर्थः सर्वेषांकाम्यानांनित्यनैमित्तिकानांचकर्मणांफलमात्रत्यागंप्राहुस्त्यागंविचक्षणानिपुणाः
नतुस्वरूपतःकर्मत्यागम् ननुनित्यनैमित्तिकानांफलाश्रवणादविद्यमानस्यफलस्यकथंत्यागःस्यात् नहिवंध्यायाःपुत्रत्यागःसंभवति उच्यते यद्यपिस्वर्गकामः
पशुकामइत्यादिवत् "अहरहःसंध्यामुपासीत यावज्जीवमग्निहोत्रंजुहोति" इत्यादिषुफलविशेषोनश्रूयतेतथाप्यपुरुषार्थेव्यापारेप्रेक्षावंतंप्रवर्तयितुमशक्नुवन्विधि
र्विश्वजितायजेतेत्यादिष्विवसामान्यतःकिमपिफलमाक्षिपत्येव नचातीवगुरुमतः श्रद्धयास्वासिद्धिरेवंविधेःप्रयोजनमितिमंतव्यं पुरुषप्रवृत्त्यनुपपत्तेर्दुष्परिहरत्वात्

**श्रीभगवानुवाच ॥ ॥ काम्यानांकर्मणांन्यासंसंन्यासंकवयोविदुः ॥ सर्वकर्मफलत्यागंप्राहुस्त्यागंविचक्षणाः ॥ २ ॥**

श्रूयतेचनित्यादिष्वपिफलम् सर्वएतेपुण्यलोकाभवंतीतिकर्मणापितृलोकइतिधर्मेणपापमपनुदतीत्येवमादिषु तस्माद्युक्तमुक्तम् 'सर्वकर्मफलत्यागंप्राहुस्त्यागं
विचक्षणाःइति ननुफलत्यागेनपुनरपिनिष्फलेषुकर्मस्वप्रवृत्तिरेवस्यात्तन्नसर्वेषामपिकर्मणांसंयोगपृथक्त्वेनविविदिषार्थतयाविनियोगात् तथाचश्रुतिः—'तमे
तमात्मानंवेदानुवचनेनब्राह्मणाविविदिषंतियज्ञेनदानेनतपसानाशकेन" इति अतःप्रतिपदोक्तं सर्वंफलंबंधकत्वेनत्यक्त्वाविविदिषार्थंसर्वकर्मानुष्ठानंघटतएव
विविदिषाच नित्यानित्यवस्तुविवेकेननिवृत्तदेहाभिमानतयाबुद्धेः प्रत्यक्प्रवणता तावत्पर्यंतंचसत्त्वशुद्ध्यर्थंज्ञानाविरुद्धंयथोचितमावश्यकंकर्मकुर्वतस्त
त्फलत्यागएवकर्मत्यागोनामनस्वरूपेण तथाचश्रुतिः " कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमाः " इति ततःपरंतुसर्वकर्मनिवृत्तिःस्वतएवभवति तदुक्तं

नैष्कर्म्यसिद्धौ 'प्रत्यक्प्रवणताबुद्धेः कर्माण्युत्पाद्यशुद्धितः । कृतार्थान्यस्तमायांतिप्रावृडंतेघनाइव'इति उक्तंचभगवता 'यस्त्वात्मरतिरेवस्यादात्मतृप्तश्च मानवः । आत्मन्येवचसंतुष्टस्तस्यकार्यंनविद्यते'इति वसिष्ठेनचोक्तं 'नकर्माणित्यजेद्योगीकर्मभिस्त्यज्यतेह्यसौ । कर्मणोमूलभूतस्यसंकल्पस्यैवनाशन' इति ज्ञान निष्ठाविक्षेपकत्वमालक्ष्यत्यजेद्वा तदुक्तंभागवते—'तावत्कर्माणिकुर्वीतननिर्विद्येतयावता।मत्कथाश्रवणादौवाश्रद्धायावन्नजायत ॥ ज्ञाननिष्ठोविरक्तोवामद्भक्तो वानपेक्षकः । सलिंगानाश्रमांस्त्यक्त्वाचरेदविधिगोचर' इत्यादि अलमतिप्रसंगेन प्रकृतमनुसरामः ॥ २ ॥ अविदुषःफलत्यागमात्रमेवत्यागमात्रमेवत्याग शब्दार्थोनकर्मत्यागइत्येतदेवमतांतरानिरासेनदृढीकर्तुंमतभेदंदर्शयति त्याज्यमिति । दोषवद्धिंसादिदोषवत्त्वेनबंधकमितिहेतोःसर्वमपिकर्मत्याज्यमित्येकेसांख्याः

त्याज्यंदोषवदित्येकेकर्मप्राहुर्मनीषिणः ॥ यज्ञदानतपः कर्मनत्याज्यमितिचापरे ॥ ३ ॥

प्राहुर्मनीषिणइत्यस्यायंभावःन हिंस्यात्सर्वभूतानीतिनिषेधःपुरुषस्यानर्थहेतुर्हिंसेत्याह "अग्नीषोमीयंपशुमालभेत" इत्यादिप्राकरणिकोविधिस्तुहिंसायाःक्रतूपका रकत्वमाह अतोभिन्नविषयत्वेनसामान्यविशेषन्यायागोचरत्वाद्द्रव्यसाध्येषुसर्वेष्वपिकर्मसुहिंसादेःसंभवात्सर्वमपिकर्मत्याज्यमेवेति तदुक्तम् दृष्टवदानुश्रविकः सह्यविशुद्धिक्षयातिशययुक्त अस्यार्थः—उपायोज्योतिष्टोमादिःसोऽपिदृष्टोपायवत् गुरुपाठादनुश्रूयतइत्यनुश्रवोवेदस्तद्बोधितः तत्राविशुद्धिर्हिंसातयाक्षयोवि नाशः अग्निहोत्रज्योतिष्टोमादिजन्यस्वर्गेषुतारतम्यंचवर्तते परोत्कर्षस्तुसर्वान् दुःखीकरोति अपरेतुमीमांसका यज्ञादिकंकर्मनत्याज्यमितिप्राहुः अयंभावः— क्रत्वर्थापिसतीयंहिंसापुरुषेणैवकर्तव्यासाचान्योद्देशेनापिकृतापुरुषस्यप्रत्यवायहेतुरेव तथाहिविधिर्विधेयस्यतदुद्देशेनानुष्ठानंविधत्तेतादर्थ्यलक्षणत्वाच्छेषत्वस्य

नत्वेवंनिषेधोनिषेधस्यतादर्थ्यमपेक्षते प्राप्तिमात्रोपेक्षितत्वात् अन्यथाज्ञानप्रमादादिकृतेदोषाभावप्रसंगात् तदेवंसमानविषयत्वेनसामान्यशास्त्रस्यविशेषेणबा
धान्नास्तिदोषवत्त्वमतोनित्यंयज्ञादिकर्मनत्याज्यमिति ॥ ३ ॥ एवंमतभेदमुपन्यस्यस्वमतंकथयितुमाह निश्चयमिति । तत्रैवंविप्रतिपन्नेत्यागेनिश्चयंमेवचनाच्छृ
ण त्यागस्यलोकप्रसिद्धत्वात्किमत्रश्रोतव्यमितिमावमंस्थाइत्याह हेपुरुषव्याघ्रपुरुषश्रेष्ठ त्यागोऽयंदुर्बोधः हियस्मादयंकर्मत्यागस्तत्त्वविद्भिस्तामसादिभेदेनत्रिविधः
सम्यग्विवेकेनप्रकीर्तितः त्रैविध्यंचनियतस्यतुसंन्यासःकर्मणइत्यादिनावक्ष्यति ॥ ४ ॥ प्रथमंतावन्निश्चयमाह यज्ञदानेतिद्वाभ्यां । मनीषिणांविवेकिनांपावनानि
चित्तशुद्धिकराणि॥५॥येनप्रकारेणकृतान्येतानिपावनानिभवंतितंप्रकारंदर्शयन्नाह एतानीति । यानियज्ञादिकर्माणिमयापावनानीत्युक्तम् एतान्येवकर्तव्यानि कथं

निश्चयंशृणुमेतत्रत्यागेभरतसत्तम ॥ त्यागोहिपुरुषव्याघ्रत्रिविधःसंप्रकीर्तितः ॥ ४ ॥ यज्ञदानतपःकर्मनत्याज्यंकार्यमेवतत् ॥
यज्ञोदानंतपश्चैवपावनानिमनीषिणाम् ॥ ५ ॥ एतान्यपितुकर्माणिसंगंत्यक्त्वाफलानिच ॥ कर्तव्यानीतिमेपार्थनिश्चितंमत
मुत्तमम् ॥ ६ ॥ नियतस्यतुसंन्यासःकर्मणोनोपपद्यते ॥ मोहात्तस्यपरित्यागस्तामसःपरिकीर्तितः ॥ ७॥

संगंकर्तृत्वाभिनिवेशंत्यक्त्वाकेवलमीश्वराराधनतयाकर्तव्यानि फलानिचत्यक्त्वाकर्तव्यानीतिचनिश्चितंमेमतम् अतएवोत्तमम् ॥ ६ ॥ प्रतिज्ञातंत्यागस्यत्रै
विध्यमिदानींदर्शयति नियतस्येतित्रिभिः । काम्यस्यकर्मणोबंधकत्वात्संन्यासोयुक्तः नियतस्यतुनित्यस्यपुनःकर्मणःसंन्यासस्त्यागोनोपपद्यते सत्त्वशुद्धिद्वारा
मोक्षहेतुत्वात् अतस्तस्यपरित्यागः उपादेयेऽपित्याज्यमित्येवंलक्षणान्मोहादेवभवेत् सचमोहस्यतामसत्वात्तामसः परिकीर्तितः ॥ ७ ॥

राजसंत्यागमाह दुःखमिति । यःकर्तात्मबोधंविनाकेवलंदुःखमित्येवंज्ञात्वाशरीरायासभयान्नित्यंकर्मत्यजेदितियत्तादृशस्त्यागोराजसःदुःखस्यराजसत्वात् अतस्तं राजसंत्यागंकृत्वा राजसःपुरुषस्त्यागस्यफलंज्ञाननिष्ठालक्षणंनैवलभतइत्यर्थः ॥ ८ ॥ सात्त्विकंत्यागमाह कार्यमिति । कार्यमित्येवंबुद्ध्यानियतमवश्यकर्तव्यतयाविहितंकर्म संगंफलंचत्यक्त्वाक्रियतइतियत् सतादृशस्त्यागःसात्त्विकोमतः ॥ ९ ॥ एवंभूतसात्त्विकत्यागपरिनिष्ठितस्यलक्षणमाह नद्वेष्टीति । सत्त्वसमाविष्टः सत्त्वेनसंव्याप्तः सात्त्विकत्यागीअकुशलंदुःखावहंशिशिरेप्रातःस्नानादिकंकर्मनद्वेष्टि कुशलेचसुखकरेकर्मणिनिदाघेमाध्याह्नस्नानादौमानुषज्जतेप्रीतिंनक

दुःखमित्येवयत्कर्मकायक्लेशभयात्त्यजेत् ॥ सकृत्वाराजसंत्यागंनैवत्यागफलंलभेत् ॥ ८ ॥ कार्यमित्येवयत्कर्मनियतंक्रियतेऽर्जुन ॥
संगंत्यक्त्वाफलंचैवसत्यागःसात्त्विकोमतः ॥ ९ ॥ नद्वेष्ट्यकुशलंकर्मकुशलेनानुषज्जते ॥ त्यागीसत्त्वसमाविष्टोमेधावीच्छिन्नसंशयः ॥ १० ॥ नहिदेहभृताशक्यंत्यक्तुंकर्माण्यशेषतः ॥ यस्तुकर्मफलत्यागीसत्यागीत्यभिधीयते ॥ ११ ॥ अनिष्टमिष्टंमिश्रंचत्रिविधं कर्मणःफलम् ॥ भवत्यत्यागिनांप्रेत्यनतुसंन्यासिनांक्वचित् ॥ १२ ॥

रोति तत्रहेतुः—मेधावीस्थिरबुद्धिः यत्रपरपरिभवादिमहदपिदुःखंसह्यते स्वर्गादिसुखंचत्यज्यते तत्रकियदेतत्तात्कालिकंसुखंदुःखंचेत्येवमनुसंधानवानित्यर्थः अत एवछिन्नःसंशयोमिथ्याज्ञानंदैहिकंसुखदुःखयोरुपादित्सापरिजिहीर्षालक्षणंयस्यसः ॥ १० ॥ नन्वेवंभूतात्कर्मफलत्यागाद्वरंसर्वकर्मत्यागस्तथासतिकर्मविक्षेपाभावे नज्ञाननिष्ठासुखंसंपद्यतेतत्राह नेति । देहभृतादेहात्माभिमानवता निःशेषेणसर्वाणिकर्माणित्यक्तुंनहिशक्यं तदुक्तं—'नहिकश्चित्क्षणमपिजातुतिष्ठत्यकर्मकृदि' त्यादिना तस्माद्यस्तुकर्माणिकुर्वन्नेवकर्मफलत्यागीसएवमुख्यत्यागीत्यभिधीयते ॥ ११ ॥ एवंभूतस्यकर्मफलत्यागस्यफलमाह अनिष्टमिति । अनिष्टंनारकित्वं

इष्टंदेवत्वं मिश्रंमनुष्यत्वं एवंत्रिविधं पापस्यपुण्यस्यचोभयमिश्रस्यचकर्मणोयत्फलंप्रसिद्धंतत्सर्वमत्यागिनांसकामानामेवप्रेत्यपरत्रभवति तेषांत्रिविधकर्मसंभवत्वात् नतुसंन्यासिनांक्वचिदपिभवति संन्यासिशब्देनात्रफलत्यागसाम्यात्प्रकृताःकर्मफलत्यागिनोऽपिगृह्यंते 'अनाश्रितःकर्मफलंकार्यंकर्मकरोतियः । ससंन्यासीचयोगीचे'त्येवमादौकर्मफलत्यागिषुसंन्यासिशब्दप्रयोगदर्शनात्तेषांसात्विकानांपापासंभवात् ईश्वरार्पणेनचपुण्यफलस्यत्यक्तत्वात् त्रिविधमपिकर्मफलंनभवतीत्यर्थः ॥१२॥ ननुकर्मकुर्वतःकर्मफलंकथंनभवेदित्याशंक्यसंगत्यागिनोनिरहंकारस्यसतःकर्मफलेनलेपोनास्तीत्युपपादयितुमाह पंचैतानीतिपंचभिः । सर्वकर्मणांसिद्धयेनिष्पत्तयेइमांनिवक्ष्यमाणानिपंचकारणानिमेवचनान्निबोधजानीहि आत्मनःकर्तृत्वाभिमाननिवृत्त्यर्थमवश्यमेतानिज्ञातव्यानीत्येवंतेषांस्तुत्यर्थमाह सांख्य

पंचैतानिमहाबाहोकारणानिनिबोधमे ॥ सांख्येकृतांतेप्रोक्तानिसिद्धयेसर्वकर्मणाम् ॥ १३ ॥
अधिष्ठानंतथाकर्ताकरणंचपृथग्विधम् ॥ विविधाश्चपृथक्चेष्टादैवंचैवात्रपंचमम् ॥ १४ ॥

इति । सम्यक्ख्यायतेज्ञायतेपरमात्माऽनेनेतिसांख्यंतत्त्वज्ञानंतस्मिन् कृतंकर्मतस्यांतःसमाप्तिरस्मिन्निति कृतांतस्तस्मिन्वेदांतासिद्धांतइत्यर्थः यद्वा संख्यायंतेगण्यंतेतत्त्वानियस्मिन्निति सांख्यं कृतःअंतोनिर्णयोयस्मिन्निति कृतांतंसांख्यशास्त्रमेवतस्मिन्प्रोक्तानि अतःसम्यङ्निबोधेत्यर्थः ॥ १३ ॥ तान्येवाह अधिष्ठानमिति । अधिष्ठानंशरीरं कर्ताचिज्जडग्रंथिरहंकारः पृथग्विधमनेकप्रकारंकरणंचक्षुःश्रोत्रादि विविधाः कार्यतःस्वरूपतश्चपृथग्भूताश्चेष्टाःप्राणापानादीनांव्यापाराःअत्रचैतेष्वेवपंचमंदैवंचकारकं चक्षुराद्यनुग्राहकमादित्यादिसर्वप्रेरकोंऽतर्यामीवा ॥ १४ ॥

एतेषामेवसर्वकर्महेतुत्वमाह शरीरेति। यथोक्तैः पंचभिः प्रारभ्यमाणंकर्मत्रिष्वेवांतर्भाव्यम् शरीरवाङ्मनोभिरित्युक्तंशारीरंवाचिकंमानसंचत्रिविधंकर्मेतिप्रसिद्धेः शरीरादिभिर्यद्यत्कर्मधर्म्यंवाऽधर्म्यंवाकरोतिनरस्तस्यसर्वस्यकर्मणएतेपंचहेतवः ॥ १५ ॥ ततः किमतआह तत्रेति । तत्रसर्वस्मिन्कर्मणिएतेपंचहेतवइत्येवंसतिकेवलंनिरुपाधिकमसंगमात्मानंतुयःकर्तारंपश्यति शास्त्राचार्योपदेशत्यागेनासंस्कृतबुद्धित्वाद्दुर्मतिरसौसम्यङ्नपश्यति ॥ १६ ॥ कस्तर्हिसुमतिः यस्यकर्मलेपोनास्तीत्युक्तमित्युपेक्षायामाह यस्येति । अहमितिकृतोऽहंकर्तेत्येवंभूतोभावोऽभिप्रायोयस्यनास्ति यद्वाअहंकृतोऽहंकारस्यभावःकर्तृत्वाभिनिवेशोयस्यनास्ति शरीरादीनामेवकर्मकर्तृत्वालोचनादित्यर्थः अतएवयस्यबुद्धिर्नलिप्यते इष्टानिष्टबुद्ध्याकर्मसुनसज्जते सएवंभूतोदेहादिव्यतिरिक्तात्मदर्शीइमांल्लोकान्सर्वानपिप्राणिनोलोक

शरीरवाङ्मनोभिर्यत्कर्मप्रारभतेनरः ॥ न्याय्यंवाविपरीतंवापंचैतेतस्यहेतवः ॥ १५ ॥ तत्रैवंसतिकर्तारमात्मानंकेवलंतुयः ॥ पश्यत्यकृतबुद्धित्वान्नसपश्यतिदुर्मतिः ॥ १६ ॥ यस्यनाहंकृतोभावोबुद्धिर्यस्यलिप्यते ॥ हत्वापिसइमांल्लोकान्नहंतिननिबद्ध्यते ॥ १७ ॥ ज्ञानंज्ञेयंपरिज्ञाताात्रिविधाकर्मचोदना ॥ करणंकर्मकर्तेतित्रिविधःकर्मसंग्रहः ॥ १८ ॥

दृष्ट्याहत्वापिविविक्ततयास्वदृष्ट्यानहंति नचतत्फलैर्निबद्ध्यतेबंधनंनप्राप्नोति किंपुनःसत्त्वशुद्धिद्वारापरोक्षज्ञानोत्पत्तिहेतुभिःकर्मभिस्तस्यबंधशंकेत्यर्थः तदुक्तम्—'ब्रह्मण्याधायकर्माणिसंगंत्यक्त्वाकरोतियः । लिप्यतेनसपापेन'इति॥१७॥हत्वापिनहंतिननिबद्ध्यतइत्येतदेवोपपादयितुंकर्मचोदनायाः कर्माश्रयस्यचकर्मफलादीनांचत्रिगुणात्मकत्वान्निर्गुणस्यात्मनस्ततसंबंधोनास्तीत्यभिप्रायेणकर्मचोदनांकर्माश्रयंचाह ज्ञानमिति । ज्ञानमिष्टसाधनमेतदितिबोधः ज्ञेयमिष्टसाधनंकर्म परिज्ञाताएवंभूतज्ञानाश्रयः एवंत्रिविधाकर्मचोदना चोद्यतेप्रवर्त्यतेयेनेतिचोदना ज्ञानादित्रितयंकर्मप्रवृत्तिहेतुरित्यर्थः यद्वा चोदनेतिविधिरुच्यते तदुक्तंभट्टैः—

‘चोदनाचोपदेशश्चविधिश्चैकार्थवाचिन’इति ततश्चायमर्थः—उक्तलक्षणंत्रिगुणात्मकंज्ञानादित्रयमवलंब्यकर्मविधिःप्रवर्ततइति तदुक्तम्—‘त्रैगुण्यविषयावेदा’इति तथाचकरणंसाधकतमं कर्मचकर्तुरीप्सिततमम् कर्ताक्रियानिर्वर्तकः कर्मसंगृह्यतेऽस्मिन्निितिकर्मसंग्रहः करणादित्रिविधंकारकंक्रियाश्रयइत्यर्थः संप्रदानादिकार कत्रयंतुपरंपरयाक्रियानिर्वर्तकमेवकेवलं न तुसाक्षात्क्रियायाआश्रयः अतःकरणादित्रितयमेवक्रियाश्रयइत्युक्तम् ॥ १८ ॥ ततःकिमतआह ज्ञानमिति । गुणाः सम्यक्कार्यभेदेनख्यायंतेप्रतिपाद्यंतेऽस्मिन्निितिगुणसंख्यानंसांख्यशास्त्रं तस्मिन् ज्ञानंच कर्मच कर्ताच प्रत्येकंसत्त्वादिगुणभेदेनत्रिधैवोच्यते तान्यपिज्ञानादीनिवक्ष्य

ज्ञानंकर्मचकर्ताचत्रिधैवगुणभेदतः ॥ प्रोच्यतेगुणसंख्यानेयथावच्छृणुतान्यपि ॥ १९ ॥
सर्वभूतेषुयेनैकंभावमव्ययमीक्षते ॥ अविभक्तंविभक्तेषुतज्ज्ञानंविद्धिसात्त्विकम् ॥ २० ॥

माणानियथावच्छृणुत्रिधैवेत्येवकारोगुणत्रयोपाधिव्यतिरेकेणात्मनःस्वतःकर्तृत्वादिप्रतिषेधार्थः चतुर्दशेऽध्यायेतत्रसत्त्वंनिर्मलत्वादित्यादिनागुणानांबंधकत्वप्रकारो निरूपितःसप्तदशेध्याये यजंतेसात्त्विकादेवानित्यादिनागुणकृतत्रिविधस्वभावनिरूपणेनरजस्तमःस्वभावंपरित्यज्यसात्त्विकाहारादिसेवयासात्त्विकस्वभावःसंपाद नीयइत्युक्तमइहतु क्रियाकारकफलादीनामात्मसंबंधोनास्तीतिदर्शयितुंसर्वेषांत्रिगुणात्मकत्वमुच्यतइतिविशेषोज्ञातव्यः॥१९॥तत्रज्ञानस्यसात्त्विकादित्रैविध्यमाह सर्वभूतेष्विितित्रिभिः । सर्वेषुभूतेषुब्रह्मादिस्थावरांतेषुविभक्तेषुपरस्परंव्यावृत्तेषुअविभक्तमनुस्यूतंएकमव्ययंनिर्विकारंभावंपरमात्मतत्त्वंयेनज्ञानेनेक्षतेआलोचयतित ज्ज्ञानंसात्त्विकंविद्धि ॥ २० ॥

राजसंज्ञानमाह पृथक्त्वेनेति । पृथक्त्वेनतुयज्ज्ञानं इत्यस्यैवविवरणं सर्वेषुभूतेषुदेहेषुनानाभावान्वस्तुतएवानेकान्क्षेत्रज्ञान्पृथग्विधान्सुखीदुःखीत्यादिरूपेण विलक्षणान्येनज्ञानेनवेत्तितज्ज्ञानंराजसंविद्धि ॥ २१ ॥ तामसंज्ञानमाह यत्त्विति । एकस्मिन्कार्येदेहे प्रतिमादौवा कृत्स्नवत्परिपूर्णवत्सक्तमेतावानेवात्माई श्वरोवेत्यभिनिवेशयुक्तम् अहैतुकं निरुपपत्तिकम् अतत्त्वार्थवत् परमार्थावलंबनशून्यम् अतएवाल्पंतुच्छम् अल्पविषयत्वादल्पफलत्वाच्चयदेवंभूतंज्ञानंतत्ता मससमुदाहृतम् ॥ २२ ॥ इदानींत्रिविधंकर्माह नियतमितित्रिभिः । नियतंनित्यतयाविहितं संगरहितमभिनिवेशशून्यं अरागद्वेषतःपुत्रादिप्रीत्यावाशत्रुद्वेषे

**पृथक्त्वेनतुयज्ज्ञानंनानाभावान्पृथग्विधान् ॥ वेत्तिसर्वेषुभूतेषुतज्ज्ञानंविद्धिराजसम् ॥ २१ ॥ यत्तुकृत्स्नवदेकस्मिन्कार्येसक्तमहैतु कम् ॥ अतत्त्वार्थवदल्पंचतत्तामसमुदाहृतम् ॥ २२ ॥ नियतंसंगरहितमरागद्वेषतःकृतम् ॥ अफलप्रेप्सुनाकर्मयत्तत्सात्त्विकमुच्य ते ॥ २३ ॥ यत्तुकामेप्सुनाकर्मसाहंकारेणवापुनः ॥ क्रियतेबहुलायासंतद्राजसमुदाहृतम् ॥ २४ ॥ अनुबंधंक्षयंहिंसामनपेक्ष्यच पौरुषम् ॥ मोहादारभ्यतेकर्मयत्तत्तामसमुच्यते ॥ २५ ॥**

णवा यत्कृतंनभवति फलंप्राप्तुमिच्छतीतिफलप्रेप्सुस्तद्विलक्षणेननिष्कामेणकर्त्रायत्कृतंकर्मतत्सात्त्विकमुच्यते ॥ २३ ॥ राजसंकर्माह यत्त्विति । यत्तुकर्म कामेप्सुनाफलंप्राप्तुमिच्छता साहंकारेणवा मत्समःकोऽन्यःश्रोत्रियोऽस्तीत्येवंनिरूढाहंकारयुक्तेनचक्रियते यच्चपुनर्बहुलायासमतिक्लेशयुक्तं तत्कर्मराजसमुदा हृतम् ॥ २४ ॥ तामसंकर्माह अनुबंधमिति । अनुबध्यतेइत्यनुबंधःपश्चाद्भाविशुभाशुभम् क्षयंवित्तव्ययं हिंसांपरपीडांच पौरुषंस्वसामर्थ्यंवा अनवेक्ष्यअपर्या लोच्य केवलंमोहादेवयत्कर्मारभ्यतेतत्तामसमुच्यते ॥ २५ ॥

कर्तारंत्रिविधमाह मुक्तसंगइतित्रिभिः । मुक्तसंगस्त्यक्ताभिनिवेशः अनहंवादीगर्वोक्तिरहितः धृतिर्धैर्यम् उत्साहउद्यमः ताभ्यांसमन्वितोयुक्तः आरब्धस्य कर्मणःसिद्धावसिद्धौचनिर्विकारोहर्षविषादशून्यः एवंभूतःकर्तासात्त्विकउच्यते ॥ २६ ॥ राजसंकर्तारमाह रागीति । रागीपुत्रादिप्रीतिमान्कर्मफलप्रेप्सुः कर्मफलकामी लुब्धःपरस्वाभिलाषी हिंसात्मकोमारकस्वभावः अशुचिर्विहितशौचशून्यःलाभालाभयोर्हर्षशोकाभ्यामन्वितःकर्ताराजसः ॥ २७ ॥ तामसंकर्तारमाह अयुक्तइति । अयुक्तोऽनवहितः प्राकृतोविवेकशून्यः स्तब्धोऽनम्रः शठःशक्तिगूहनकारी नैष्कृतिकःपरावमानी अलसोऽनुद्यमशीलः विषादीशोकशीलः

मुक्तसंगोऽनहंवादीधृत्युत्साहसमन्वितः ॥ सिद्ध्यसिद्ध्योर्निर्विकारःकर्तासात्विकउच्यते ॥ २६ ॥ रागीकर्मफलप्रेप्सुर्लुब्धोहिंसात्मकोऽशुचिः ॥ हर्षशोकान्वितःकर्ताराजसःपरिकीर्तितः ॥ २७ ॥ अयुक्तःप्राकृतःस्तब्धःशठोनैष्कृतिकोऽलसः ॥ विषादीदीर्घसूत्रीचकर्तातामसउच्यते ॥ २८ ॥ बुद्धेर्भेदंधृतेश्चैवगुणतस्त्रिविधंशृणु ॥ प्रोच्यमानमशेषेणपृथक्त्वेनधनंजय ॥ २९ ॥ प्रवृत्तिंचनिवृत्तिंचकार्याकार्येभयाभये ॥ बंधंमोक्षंचयावेत्तिबुद्धिःसापार्थसात्विकी ॥ ३० ॥

यदद्यवाश्वोवाकार्यंतन्मासेनापिनसंपादयातियःसदीर्घसूत्री एवंभूतःकर्तातामसः कर्तृत्रैविध्येनैवज्ञातुरपित्रैविध्यमुक्तमकर्मत्रैविध्येनचज्ञेयस्यापित्रैविध्यमुक्तंवेदितव्यं बुद्धेस्त्रैविध्येनकरणस्याप्युक्तंभविष्यति ॥ २८ ॥ इदानींबुद्धेर्धृतेश्चापित्रैविध्यंप्रतिजानीते बुद्धेरिति । स्पष्टार्थः ॥ २९ ॥ तत्रबुद्धेस्त्रैविध्यमाह प्रवृत्तिंचेतित्रिभिः । प्रवृत्तिंचधर्मेनिवृत्तिंचाधर्मे यस्मिन्देशेकालेचयत्कार्यमकार्यंच भयाभयेकार्याकार्यनिमित्तावर्थानर्थौ कथंबंधःकथंवामोक्षइतियाबुद्धिरंतःकरणंवेत्तिसासात्त्विकी ययापुमान्वेत्तीतिवक्तव्येकरणेकर्तृत्वोपचारःकाष्ठानिपचंतीतिवत् ॥ ३० ॥

राजसींबुद्धिमाह ययेति । अयथावत्संदेहास्पदत्वेनेत्यर्थः स्पष्टमन्यत् ॥३१॥ तामसींबुद्धिमाह अधर्ममिति । विपरीतग्राहिणीबुद्धिस्तामसीत्यर्थः बुद्धिरंतःकरणं पूर्वोक्तम् ज्ञानंतुतद्वृत्तिः धृतिरपितद्वृत्तिरेव यद्वा अंतःकरणस्यधर्मिणोबुद्धिरप्यध्यवसायलक्षणाद्वृत्तिरेव इच्छाद्वेषादीनांतद्वृत्तीनांबहुत्वेऽपिधर्माधर्मभयाभयसाधनत्वेन प्राधान्यादेतासांत्रैविध्यमुक्तं उपलक्षणंचैतदन्यासाम् ॥ ३२ ॥ इदानींधृतेस्त्रैविध्यमाह धृत्येतित्रिभिः । योगेनाचित्तैकाग्र्येणहेतुनाव्यभिचारिण्याविषयांतरमधारयंत्याययाधृत्या मनसःप्राणस्येंद्रियाणांचक्रियाधारयतेनियच्छति साधृतिःसात्त्विकी ॥ ३३ ॥ राजसींधृतिमाह ययात्विति । ययातुधृत्याधर्मार्थ

**ययाधर्ममधर्मंचकार्यंचाकार्यमेवच ॥ अयथावत्प्रजानातिबुद्धिःसापार्थराजसी ॥ ३१ ॥ अधर्मंधर्ममितियामन्यतेतमसावृता ॥ सर्वार्थान्विपरीतांश्चबुद्धिःसापार्थतामसी ॥ ३२ ॥ धृत्याययाधारयतेमनःप्राणेंद्रियक्रियाः ॥ योगेनाव्यभिचारिण्याधृतिःसापार्थसात्त्विकी ॥३३॥ ययातुधर्मकामार्थान्धृत्याधारयतेऽर्जुन ॥ प्रसंगेनफलाकांक्षीधृतिःसापार्थराजसी ॥३४॥ ययास्वप्नंभयंशोकंविषादंमदमेवच॥ नविमुंचतिदुर्मेधाधृतिःसापार्थतामसी ॥ ३५ ॥ सुखंत्विदानींत्रिविधंशृणुमेभरतर्षभ ॥ अभ्यासाद्रमतेयत्रदुःखांतंचनिगच्छति ॥ ३६ ॥**

कामान्प्राधान्येनधारयते नविमुंचति तत्प्रसंगेनफलाकांक्षीचभवति साराजसीधृतिः ॥ ३४ ॥ तामसींधृतिमाह ययेति । दुष्टाअविवेकबहुलामेधायस्यसः दुर्मेधाःपुरुषःययाधृत्यास्वप्नादीन्नविमुंचति पुनःपुनरावर्तयतिस्वप्नोऽत्रनिद्रासाधृतिस्तामसी ॥ ३५ ॥ सुखस्यत्रैविध्यंप्रतिजानीतेअर्धेन सुखमिति । स्पष्टार्थः तत्रसात्त्विकंसुखमाह अभ्यासादितिसार्धेन । यत्रयस्मिन्सुखेअभ्यासादतिपरिचयाद्रमते नतुविषयसुखइवसहसारतिंप्राप्नोति यस्मिन्रममाणश्चदुःखस्यांतमवसानंनितरांगच्छतिप्राप्नोति ॥ ३६ ॥

कीदृशंतत् यत्तदिति । यत्तत्किमपि अग्रेप्रथमंविषमिवमनःसंयमाधीनत्वाद्दुःखावहमिवभवति परिणामेत्वमृतसदृशं आत्मविषयाबुद्धिरात्मबुद्धिस्तस्याः प्रसा
देनरजस्तमोमलत्यागेनस्वच्छतयाऽवस्थानंततोजातंयत्सुखंतत्सात्त्विकंप्रोक्तंयोगिभिः ॥ ३७ ॥ राजसंसुखमाह विषयेंद्रियेति । विषयाणामिंद्रियाणांचसंयो
गाद्यत्तत्प्रसिद्धंस्त्रीसंगादिसुखं अमृतमुपमायस्यतादृशंभवत्यग्रेप्रथमं परिणामेतुविषतुल्यं इहामुत्रचदुःखहेतुत्वात् तत्सुखंराजसंस्मृतम् ॥ ३८ ॥ तामसं
सुखमाह यदिति अग्रेप्रथमक्षणे अनुबंधेचपश्चादपि यत्सुखमात्मनोमोहकरम् तदेवाह निद्राचालस्यंचप्रमादश्चकर्तव्यार्थावधानराहित्येनमनोराज्यमेतेभ्य

यत्तदग्रेविषमिवपरिणामेऽमृतोपमम् ॥ तत्सुखंसात्त्विकंप्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥ विषयेंद्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ॥
परिणामेविषमिवतत्सुखंराजसंस्मृतम् ॥ ३८ ॥ यदग्रेचानुबंधेचसुखंमोहनमात्मनः ॥ निद्रालस्यप्रमादोत्थंतत्तामसमुदाहृतम्
॥ ३९ ॥ नतदस्तिपृथिव्यांवादिविदेवेषुवापुनः ॥ सत्त्वंप्रकृतिजैर्मुक्तंयदेभिःस्यात्त्रिभिर्गुणैः ॥ ४० ॥ ब्राह्मणक्षत्रियविशांशूद्राणां
चपरंतप ॥ कर्माणिप्रविभक्तानिस्वभावप्रभवैर्गुणैः ॥ ४१ ॥

उत्तिष्ठतियत्सुखंतत्तामसमुदाहृतम ॥ ३९ ॥ अनुक्तमपिसंगृह्णन्प्रकरणार्थमुपसंहरति नतदस्तीति । एभिःप्रकृतिसंभवैः सत्त्वादिभिर्गुणैर्मुक्तंहीनंस
त्त्वंप्राणिजातमन्यद्वायत्स्यात्तत्पृथिव्यांमनुष्यलोकादिषुदिविदेवेषुचक्वापिनास्तीत्यर्थः ॥ ४० ॥ ननुचयद्येवंसर्वमपिक्रियाकारकफलादिकंप्राणिजातंच
त्रिगुणात्मकमेव कथंतर्हिअस्यमोक्षइत्यपेक्षायां स्वस्वाधिकारविहितैः कर्मभिःपरमेश्वराराधनात्तत्प्रसादलब्धज्ञानेनेत्येवंसर्वगीतार्थसारंसंगृह्यप्रदर्शयितुंप्रक
णांतरमारभते ब्राह्मणेत्यादियावदध्यायसमाप्ति । हेपरंतप शत्रुतापन ! ब्राह्मणानांक्षत्रियाणांविशांचशूद्राणांचकर्माणिप्रविभक्तानिप्रकर्षेणविभागतोविहितानि

शूद्राणांस्वभावात्पृथक्करणंद्विजत्वाभावेनवैलक्षण्यात् विभागोपलक्षणमाह स्वभावःसात्त्विकादिःप्रभवतिप्रादुर्भवतियेभ्यस्तैर्गुणैरुपलक्षणभूतैः यद्वा स्वभावः पूर्वजन्मसंस्कारस्तस्मात्प्रादुर्भूतैरित्यर्थः तत्रसत्त्वप्रधानाब्राह्मणाः सत्वोपसर्जनरजःप्रधानाःक्षत्रियाः तमउपसर्जनरजःप्रधानावैश्याः रजउपसर्जनतमःप्रधानाः शूद्राः ॥ ४१ ॥ तत्रब्राह्मणस्यस्वाभाविकानिकर्माण्याह शमइति। शमश्चित्तोपरमः दमोबाह्येंद्रियोपरमः तपःपूर्वोक्तंशारीरादि शौचंबाह्याभ्यंतरं क्षांतिःक्षमा आर्जवमवक्रता ज्ञानंशाब्दीयम् विज्ञानमनुभवः आस्तिक्यमस्तिपरलोकइतिनिश्चयः एतच्छमादिब्राह्मणस्यस्वभावाज्जातंकर्म ॥ ४२ ॥ क्षत्रियस्यस्वाभाविकानिकर्माण्याह शौर्यमिति। शौर्यंपराक्रमः तेजःप्रागल्भ्यम् धृतिर्धैर्यम् दाक्ष्यंकौशलम् युद्धेचाप्यपलायनमपराङ्मुखता दानमौदार्यम् ईश्वरभावोनियमनशक्तिः

**शमोदमस्तपःशौचंक्षांतिरार्जवमेवच ॥ ज्ञानंविज्ञानमास्तिक्यंब्रह्मकर्मस्वभावजम् ॥ ४२ ॥ शौर्यंतेजोधृतिर्दाक्ष्यंयुद्धेचाप्यपलायनम् ॥ दानमीश्वरभावश्चक्षात्रंकर्मस्वभावजम् ॥ ४३ ॥ कृषिगोरक्ष्यवाणिज्यंवैश्यकर्मस्वभावजम् ॥ परिचर्यात्मकंकर्मशूद्रस्यापिस्वभावजम् ॥ ४४ ॥ स्वेस्वेकर्मण्यभिरतःसंसिद्धिंलभतेनरः ॥ स्वकर्मनिरतःसिद्धिंयथाविंदतितच्छृणु ॥ ४५ ॥**

एतत्क्षत्रियस्यस्वभावजंकर्म ॥ ४३ ॥ वैश्यशूद्रयोःकर्माह कृषीति । कृषिःकर्षणम्गाःरक्षतीति गोरक्षस्तस्यभावो गोरक्ष्यम् पाशुपाल्यमित्यर्थः वाणिज्यंक्रयविक्रयादि एतद्वैश्यस्यस्वभावजंकर्मत्रैवर्णिकपरिचर्यात्मकंशूद्रस्यापिस्वभावजंकर्म ॥ ४४ ॥ एवंभूतस्यब्राह्मणादिकर्मणोज्ञानहेतुत्वमाह स्वेस्वइति। स्वस्वाधिकारविहितेकर्मणिआभिरतःपरिनिष्ठितोनरःसंसिद्धिंज्ञानयोग्यतांलभतेकर्मणांज्ञानप्राप्तिप्रकारमाह स्वकर्मेतिसार्धेन । स्वकर्मपरिनिष्ठितोयथायेनप्रकारेणतत्त्वज्ञानंलभते तंप्रकारंशृणु ॥ ४५ ॥

तमेवाह यतइति । यतोऽतर्यामिणःपरमेश्वराद्भूतानांप्राणिनांप्रवृत्तिश्चेष्टाभवति येनप्रकारेणात्मनासर्वमिदंविश्वंततंव्याप्तंतमीश्वरंस्वकर्मणाऽभ्यर्च्यपूजयित्वा सिद्धिंलभतेमनुष्यः ॥ ४६ ॥ स्वकर्मणेतिविशेषणस्यफलमाह श्रेयानिति । विगुणोऽपिस्वधर्मःसम्यगनुष्ठितादपिपरधर्माच्छ्रेष्ठःनचबंधुवधादि युक्ताद्युद्धादेः स्वधर्माद्भिक्षाटनादिपरधर्मःश्रेष्ठइतिमन्तव्यम् यतःस्वभावेनपूर्वोक्तेननियतंनियमेनोक्तंकर्मकुर्वन्किल्बिषंनाप्नोति॥४७॥यदिपुनःसांख्यदृष्ट्यास्वधर्मेहिंसालक्षणं दोषंमत्वापरधर्मंश्रेष्ठंमन्यसे तर्हि सदोषत्वंपरधर्मेऽपितुल्यमित्याशयेनाह सहजमिति । सहजंस्वभावविहितंकर्मसदोषमपिनत्यजेत् हियस्मात्सर्वेऽप्यारंभाद्द ष्टादृष्टार्थानिसर्वाण्यपिकर्माणिदोषेणकेनाचिदावृताव्याप्ताएव यथासहजेनधूमेनाग्निरावृतस्तद्वत् अतोयथाग्नेर्धूमरूपं दोषमपाकृत्यप्रतापएवतमःशीतादिनिवृत्तये

यतःप्रवृत्तिर्भूतानांयेनसर्वमिदंततम् ॥ स्वकर्मणातमभ्यर्च्यसिद्धिंविंदतिमानवः ॥ ४६ ॥ श्रेयान्स्वधर्मोविगुणःपरधर्मात्स्वनुष्ठि तात् ॥ स्वभावनियतंकर्मकुर्वन्नाप्नोतिकिल्बिषम् ॥ ४७ ॥ सहजंकर्मकौंतेयसदोषमपिनत्यजेत् ॥ सर्वारंभाहिदोषेणधूमेनाग्निरि वावृताः ॥ ४८ ॥ असक्तबुद्धिःसर्वत्रजितात्माविगतस्पृहः ॥ नैष्कर्म्यसिद्धिंपरमांसंन्यासेनाधिगच्छति ॥ ४९ ॥

सेव्यते तथाकर्मणोऽपिदोषांशंविहायगुणांशएवसत्त्वशुद्धयेसेव्यतइत्यर्थः ॥ ४८ ॥ ननुकथंकर्मणिक्रियमाणेदोषांशप्रहाणेनगुणांशएवसंपत्स्यतइत्यपेक्षायामाह असक्तेति। असक्तासंगशून्याबुद्धिर्यस्य जितात्मानिरहंकारः विगतास्पृहाफलविषयेच्छायस्मात्सएवंभूतेनसत्यागःसात्त्विकोमतइत्येवंपूर्वोक्तेनकर्मासक्तितत्फल- योस्त्यागलक्षणेनसंन्यासेननैष्कर्म्यसिद्धिंसर्वकर्मनिवृत्तिलक्षणांसत्त्वशुद्धिमाधिगच्छति यद्यपिसंगफलयोस्त्यागेनकर्मानुष्ठानमपिनैष्कर्म्यमेव कर्तृत्वाभिनिवेशा भावात् तदुक्तम्—'नैवकिंचित्करोमीतियुक्तोमन्येततत्त्ववित्'इत्यादिश्लोकचतुष्टयेनतथाप्यनेनोक्तलक्षणेनसंन्यासेनपरमांनैष्कर्म्यसिद्धिम् सर्वकर्माणिमनसासंन्य

स्यास्तेसुखंवशीत्येवंलक्षणांपारमहंस्यांचर्यांप्राप्नोति ॥ ४९ ॥ एवंभूतस्यपरमहंसस्यज्ञाननिष्ठयाब्रह्मभावप्रकारमाह सिद्धिंप्राप्तइतिषड्भिः । नैष्कर्म्यसिद्धिंप्राप्तः सन्यथायेनप्रकारेणब्रह्मप्राप्नोति तथातंप्रकारंसंक्षेपेणैवमेवचनान्निबोध॥५०॥तदेवाह बुद्ध्येति । उक्तेनप्रकारेणविशुद्धा पूर्वोक्तयासात्त्विकबुद्ध्यायुक्तः धृत्यासा-त्त्विक्याआत्मानंकार्यकारणसंघातंतामेवबुद्धिंनियम्यनिश्चलांकृत्वाशब्दादीन्विषयांस्त्यक्त्वातद्विषयौरागद्वेषौचव्युदस्य बुद्ध्याविशुद्धयायुक्तइत्यादीनां ब्रह्मभूयायकल्पतइतितृतीयेनान्वयः ॥ ५१ ॥ किंच विविक्तेति । विविक्तसेवीशुद्धदेशावस्थायी लघ्वाशीमितभोजी एतैरुपायैर्यतवाक्कायमानसःसंयतवाग्देहचित्तोभूत्वा

**सिद्धिंप्राप्तोयथाब्रह्मतथाप्नोतिनिबोधमे ॥ समासेनैवकौंतेयनिष्ठाज्ञानस्ययापरा ॥५०॥ बुद्ध्याविशुद्धयायुक्तोधृत्यात्मानंनियम्यच ॥ शब्दादीन्विषयांस्त्यक्त्वारागद्वेषौव्युदस्यच ॥ ५१ ॥ विविक्तसेवीलघ्वाशीयतवाक्कायमानसः ॥ ध्यानयोगपरोनित्यंवैराग्यंसमुपाश्रितः ॥ ५२ ॥ अहंकारंबलंदर्पंकामंक्रोधंपरिग्रहम् ॥ विमुच्यनिर्ममःशांतोब्रह्मभूयायकल्पते ॥ ५३ ॥ ब्रह्मभूतःप्रसन्नात्मानशोचतिनकांक्षति ॥ समःसर्वेषुभूतेषुमद्भक्तिंलभतेपराम् ॥ ५४ ॥**

नित्यंसर्वदाध्यानेनयोगोब्रह्मसंस्पर्शस्तत्परःसन् ध्यानाविच्छेदार्थंपुनःपुनर्दृढंवैराग्यंसम्यगुपाश्रितोभूत्वा ॥ ५२ ॥ किंच अहंकारमिति । ततश्चविरक्तोऽहमित्याद्यहंकारं बलंदुराग्रहंदर्पंयोगबलादुन्मार्गप्रवृत्तिलक्षणम् प्रारब्धवशात्प्राप्यमाणेष्वपिविषयेषुकामंक्रोधंपरिग्रहंचविमुच्याविशेषेणत्यक्त्वा बलादापन्नेषुनिर्ममःसन् शांतःपरामुपशांतिंप्राप्तोब्रह्मभूयायब्रह्माहमितिनैश्चल्येनावस्थानायकल्पते योग्योभवति॥५३॥ब्रह्माहमित्येवनैश्चल्येनावस्थानस्यफलमाह ब्रह्मभूतइति।ब्रह्मभूतो

ब्रह्मण्यवस्थितः प्रसन्नचित्तो नष्टंनशोचति नचाप्राप्तंकांक्षति देहाद्यभिमानाभावात् अतएवसर्वेष्वपिभूतेषुसमःसन् रागद्वेषादिकृतविक्षेपाभावात्सर्वभूतेषु मद्भावनालक्षणांपरांमद्भक्तिंलभते ॥५४॥ ततश्चभक्त्यामामिति । तयाचपरयाभक्त्यातत्त्वतोमामाभिजानाति कथंभूतम् यावान्सर्वव्यापीयश्चास्मिसच्चिदानंदघनस्तथाभूतं ततश्चमामेवंतत्त्वतोज्ञात्वातदनंतरंतस्यज्ञानस्याप्युपरमेसति मांविशते परमानंदरूपोभवतीत्यर्थः ॥ ५५ ॥ स्वकर्मभिः परमेश्वराराधनादुक्तंमोक्षप्रकारमुपसंहरति सर्वकर्माणीति । सर्वकर्माणिनित्यनैमित्तिकानिचकर्माणिपूर्वोक्तक्रमेणसर्वदाकुर्वाणःसन् मद्व्यपाश्रयः अहमेवव्यपाश्रयआश्रयणीयोनतुस्व

भक्त्यामामभिजानातियावान्यश्चास्मितत्त्वतः ॥ ततोमांतत्त्वतोज्ञात्वाविशतेतदनंतरम् ॥ ५५ ॥ सर्वकर्माण्यपिसदाकुर्वाणोमद्व्यपाश्रयः ॥ मत्प्रसादादवाप्नोतिशाश्वतंपदमव्ययम् ॥ ५६ ॥ चेतसासर्वकर्माणिमयिसंन्यस्यमत्परः ॥ बुद्धियोगमुपाश्रित्यमच्चित्तः सततंभव ॥ ५७ ॥ मच्चित्तःसर्वदुर्गाणिमत्प्रसादात्तरिष्यसि ॥ अथचेत्वमहंकारान्नश्रोष्यसिविनंक्ष्यसि ॥ ५८ ॥

र्गादिफलंयस्यसः ममप्रसादाच्छाश्वतमनादि अव्ययंनित्यंसर्वोत्कृष्टंपदंप्राप्नोति ॥ ५६ ॥ यस्मादेवं तस्मात् चेतसेति । सर्वकर्माणिचेतसामयिसंन्यस्यसमर्प्य मत्परःअहमेवपरःप्राप्यःपुरुषार्थोयस्यसः व्यवसायात्मिकयाबुद्ध्यायोगमाश्रित्यसततंकर्मानुष्ठानकालेऽपिब्रह्मार्पणंब्रह्महविरितिन्यायेनमय्येवचित्तंयस्यसः तथाभूतोभव ॥ ५७ ॥ ततोयद्भविष्यतितच्छृणु मच्चित्तइति । मच्चित्तःसन्मत्प्रसादात्सर्वाण्यपिदुर्गाणिदुस्तराणिसांसारिकाणिदुःखानितरिष्यसि विपक्षेदोषमाह अथ चेद्यदिपुनस्त्वमहंकाराज्ज्ञातृत्वाभिमानान्मदुक्तमेतन्नश्रोष्यसि तर्हि विनंक्ष्यसिपुरुषार्थाद्भ्रश्यसि ॥ ५८ ॥

कामंविनंक्ष्यामिनतुबंधुभिर्युद्धंकरिष्यामीतिचेत्तत्राह यदिति । मदुक्तमनादृत्यकेवलमहंकारमवलंब्ययुद्धंनकरिष्यामीतित्वंयन्मन्यसे अध्यवस्यसि एष तेव्यवसायोमिथ्यैव अस्वतंत्रत्वात्तव तदेवाह प्रकृतिस्त्वांरजोगुणरूपेणपरिणतासतीनियोक्ष्यतियुद्धेप्रवर्तयिष्यत्येव ॥ ५९ ॥ किंच स्वभावेति । स्व भावःक्षात्रियत्वेहेतुःपूर्वकर्मसंस्कारस्तस्माज्जातेनस्वकीयेनकर्मणाशौर्यादिनापूर्वोक्तेनानिबद्धोयंत्रितस्त्वंमोहाद्यत्कर्मयुद्धलक्षणंकर्तुंनेच्छसि अवशोऽपितत्कर्मकरि ष्यस्येव ॥ ६० ॥ तदेवंश्लोकद्वयेनसांख्यादिमतेनप्रकृतिपारतंत्र्यंस्वभावपारतन्त्र्यंकर्मपारतंत्र्यंचोक्तं इदानींस्वमतमाह ईश्वरइतिद्वाभ्यां । सर्वभूतानां हृदयमध्येईश्वरोंऽतर्यामीतिष्ठति किंकुर्वन् सर्वाणिभूतानिमाययानिजशक्त्याभ्रामयन्तत्तत्कर्मसुप्रवर्तयन् यथादारुयंत्रमारूढानिकृत्रिमाणिभूतानिसूत्रधारोलोके

**यदहंकारमाश्रित्यनयोत्स्यइतिमन्यसे ॥ मिथ्यैषव्यवसायस्तेप्रकृतिस्त्वांनियोक्ष्यति ॥ ५९ ॥ स्वभावजेनकौंतेयनिबद्धःस्वेनकर्म णा ॥ कर्तुंनेच्छसियन्मोहात्करिष्यस्यवशोऽपितत् ॥ ६० ॥ ईश्वरःसर्वभूतानांहृद्देशेऽर्जुनतिष्ठति ॥ भ्रामयन्सर्वभूतानियंत्रारूढा निमायया ॥ ६१ ॥ तमेवशरणंगच्छसर्वभावेनभारत ॥ तत्प्रसादात्परांशांतिंस्थानंप्राप्स्यसिशाश्वतम् ॥ ६२ ॥**

भ्रामयतितद्वत् यद्वायंत्राणिशरीराणि आरूढानिभूतानिदेहाभिमानिनोजीवान्भ्रामयन्नित्यर्थः तथाचश्वेताश्वतराणांमन्त्रः "एकोदेवः सर्वभूतेषुगूढःसर्वव्या पीसर्वभूतान्तरात्मा । कर्माध्यक्षःसर्वभूताधिवासःसाक्षीचेताकेवलोनिर्गुणश्च" इति अंतर्यामिब्राह्मणंच "यआत्मानितिष्ठन्नात्मानमंतरोयमयति यमात्मानंवेद यस्या- त्माशरीरं एषतेंऽतर्याम्यमृत" इत्यादि ॥ ६१ ॥ तमिति । यस्मादेवंसर्वेजीवाःपरमेश्वरपरतंत्रास्तस्मादहंकारंपरित्यज्यसर्वभावेनसर्वात्मनातमीश्वरमेवशरणंगच्छ तत स्तस्यैवप्रसादात्परमामुपशांतिंस्थानंचपारमेश्वरंशाश्वतंनित्यंप्राप्स्यसि ॥ ६२ ॥

सर्वगीतार्थमुपसंहरन्नाह इतीति । इतिअनेनप्रकारेणतेतुभ्यं सर्वज्ञेनपरमकारुणिकेनमयाज्ञानमाख्यातमुपदिष्टम् कथंभूतं गुह्यात्गोप्याद्रहस्यमंत्रयोगादिज्ञाना-
दपिगुह्यतरंएतन्मयोपदिष्टंगीताशास्त्रमशेषतोविमृश्यपर्यालोच्यपश्चाद्यथेच्छसितथाकुरु एतस्मिन्पर्यालोचितेसतितवमोहोनिवर्तिष्यतइति भावः ॥ ६३ ॥
अतिगंभीरंगीताशास्त्रमशेषतःपर्यालोचयितुमशक्नुवतःकृपयास्वयमेवतस्यसारंसंगृह्यकथयति सर्वगुह्यतममितित्रिभि ः। सर्वेभ्योऽपिगुह्येभ्योगुह्यतमंमेवचः तत्र
तत्रोक्तमपिभूयःपुनरपिवक्ष्यमाणंशृणु पुनःपुनःकथनेहेतुमाह दृढमत्यंतंमेममत्वमिष्टःप्रियोऽसीतिमत्वा ततएवंहेतोस्तेहितंवक्ष्यामि यद्वा त्वंममेष्टोऽसि मया

**इतितेज्ञानमाख्यातंगुह्याद्गुह्यतरंमया ॥ विमृश्यैतदशेषेणयथेच्छसितथाकुरु ॥ ६३ ॥ सर्वगुह्यतमंभूयःशृणुमेपरमंवचः ॥ इष्टोऽसि मेदृढमितिततोवक्ष्यामितेहितम् ॥ ६४ ॥ मन्मनाभवमद्भक्तोमद्याजीमांनमस्कुरु ॥ मामेवैष्यसिसत्यंतेप्रतिजानेप्रियोऽसिमे ॥ ६५ ॥ सर्वधर्मान्परित्यज्यमामेकंशरणंव्रज ॥ अहंत्वासर्वपापेभ्योमोक्षयिष्यामिमाशुचः ॥ ६६ ॥**

वक्ष्यमाणंचदृढंसर्वप्रमाणोपेतमितिनिश्चित्यततस्तेवक्ष्यामीत्यर्थः दृढमतिरिरितिकेचित्पठंति ॥ ६४ ॥ तदेवाह मन्मनाइति । मन्मनाभव मच्चित्तोभव ममैवभक्तो-
भव मद्यजनशीलोभव मामेवनमस्कुरु एवंवर्तमानस्त्वंमत्प्रसादाल्लब्धज्ञानेनमामेवैष्यसि प्राप्स्यासिअत्रचसंशयंमाकार्षीः त्वंहिमेप्रियोऽसि अतःसत्यंयथाभव-
त्येवंतुभ्यमहंप्रतिजानेप्रतिज्ञांकरोमि ॥ ६५ ॥ ततोऽपिगुह्यतममाह सर्वेति । मद्भक्त्यैवसर्वंभविष्यतीतिदृढविश्वासेनविधिकैंकर्यंत्यक्त्वामदेकशरणोभव एवंवर्त
मानःकर्मत्यागनिमित्तंपापंस्यादितिमाशुचःशोकंमाकार्षीः यतस्त्वांमदेकशरणंसर्वपापेभ्योऽहंमोचयिष्यामि ॥ ६६ ॥

एवंगीतार्थतत्त्वमुपदिश्यतत्संप्रदायप्रवर्तनेनियममाह इदमिति । इदंगीतार्थतत्त्वंतेत्वयाऽतपस्कायस्वधर्मानुष्ठानहीनायनवाच्यं नचाभक्तायगुरौईश्वरेचभाक्तिशू-
न्यायकदाचिदपिनवाच्यं नचाशुश्रूषवेपरिचर्यामकुर्वतेवाच्यं मांपरमेश्वरंयोऽभ्यसूयतिमनुष्यदृष्ट्यादोषारोपेणनिन्दतितस्मैनवाच्यम् ॥६७॥ एतैर्दोषैर्विरहितेभ्यो
गीताशास्त्रोपदेष्टुःफलमाह यइति। मद्भक्तेष्वभिधास्यतिमद्भक्तेभ्योयोवक्ष्यतिसमयिपरांभक्तिंकरोतिततोनिःसंशयःसन्मामेवप्राप्नोतीत्यर्थः ॥ ६८ ॥ किंच नचेति ।
तस्मान्मद्भक्तेभ्योगीताशास्त्रव्याख्यातुःसकाशादन्योमनुष्येषुमध्येकश्चिदपिममप्रियकृत्तमोऽत्यंतंपरितोषकर्तानास्ति नच कालान्तरेभविताभविष्याति ममापितस्मा

**इदंतेनातपस्कायनाभक्तायकदाचन ॥ नचाशुश्रूषवेवाच्यंनचमांयोऽभ्यसूयति ॥ ६७ ॥ यइदंपरमंगुह्यंमद्भक्तेष्वभिधास्यति ॥**
**भक्तिंमयिपरांकृत्वामामेवैष्यत्यसंशयः ॥ ६८ ॥ नचतस्मान्मनुष्येषुकश्चिन्मेप्रियकृत्तमः ॥ भवितानचमेतस्मादन्यःप्रियतरोभुवि**
**॥ ६९ ॥ अध्येष्यतेचयइमंधर्म्यंसंवादमावयोः ॥ ज्ञानयज्ञेनतेनाहमिष्टःस्यामितिमेमतिः ॥ ७० ॥**

दन्यःप्रियतरोऽधुनाभुवितावन्नास्ति नचकालांतरेऽपिभविष्यतीत्यर्थः ॥ ६९ ॥ पठतःफलमाह अध्येष्यतइति । आवयोःकृष्णार्जुनयोः इमं[illegible]धर्म्यंधर्मादनपेतं
संवादंयोऽध्येष्यतेजपरूपेणपठिष्यति तेनपुंसासर्वयज्ञेभ्यःश्रेष्ठेन ज्ञानयज्ञेनाहमिष्टःस्यांभवेयमितिमेमतिःयदप्यसौगीतार्थमबुद्ध्यमानएवकेवलंजपति तथापिमम
तच्छृण्वतोमामेवासौप्रकाशयतीति बुद्धिर्भवति यथालोकेयदृच्छयाऽपिकश्चित्कदाचित्कस्यचिन्नाम गृह्णाति तदासौमामेवायमाह्वयतीतिमत्वातत्पार्श्वमागच्छति
तथाहमपितस्यसन्निहितोभवेयं अतएवअजामिलक्षत्रबंधुप्रमुखानांकथंचिन्नामोच्चारणमात्रेणप्रसन्नोऽस्मि तथैवास्यापिप्रसन्नोभवेयमित्यर्थः ॥ ७० ॥

अन्यस्यजपतोयोऽन्यः कश्चिच्छृणोतितस्यापिफलमाह श्रद्धावानिति । योनरः श्रद्धायुक्तः केवलंशृणुयादपिश्रद्धावानपि कश्चित्किमर्थमुच्चैर्जपतिअबद्धंजपतीतिवा
दोषदृष्टिंकरोतितद्व्यावृत्त्यर्थमाह अनसूयश्चअसूयारहितोयः शृणुयात् सोऽपिसर्वैः पापैर्मुक्तः सन् अश्वमेधादिपुण्यकृताँल्लोकान्प्राप्नुयात ॥ ७१ ॥ सम्यग्बोधानुत्प
त्तौपुनरुपदेक्ष्यामीत्याशयेनाह कच्चिदिति । कच्चिदितिप्रश्नार्थः अज्ञानसंमोहः तत्त्वज्ञानकृतोविपर्ययः स्पष्टमन्यत ॥ ७२ ॥ कृतार्थः सन्नर्जुनउवाच नष्टइति ।
आत्मविषयोमोहोनष्टः यतोऽयमहमस्मीतिस्वरूपानुसंधानरूपास्मृतिस्त्वत्प्रसादान्मयालब्धा अतः स्थितोऽस्मि युद्धायोपस्थितोऽस्मि गतो[illegible]र्मविषयः संदेहो

श्रद्धावाननसूयश्चशृणुयादपियोनरः ॥ सोऽपिमुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१ ॥ कच्चिदेतच्छ्रुतंपार्थत्वयैकाग्रेणचेत
सा ॥ कच्चिदज्ञानसंमोहः प्रनष्टस्तेधनंजय ॥ ७२ ॥ ॥ अर्जुनउवाच ॥ नष्टोमोहः स्मृतिर्लब्धात्वत्प्रसादान्मयाऽच्युत ॥ स्थितोऽस्मिगत
संदेहः करिष्येवचनंतव ॥ ७३ ॥ संजयउवाच ॥ ॥ इत्यहंवासुदेवस्यपार्थस्यचमहात्मनः ॥ संवादमिममश्रौषमद्भुतंरोमहर्षणम्
॥ ७४ ॥ व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहंपरम् ॥ योगंयोगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥

यस्यसोऽहंतवाज्ञांकरिष्यइति ॥ ७३ ॥ तदेवंधृतराष्ट्रंप्रति श्रीकृष्णार्जुनसंवादंकथयित्वा प्रस्तुतांकथामनुसंदधानः संजय उवाच इतीति । रोमहर्षणंरोमांचकरं
संवादमश्रौषंश्रुतवानहं स्पष्टमन्यत् ॥ ७४ ॥ आत्मनस्तच्छ्रवणेसंभावनामाह व्यासप्रसादादिति । भगवताव्यासेनादिव्यंचक्षुःश्रोत्रादिमह्यंदत्तम् । अतोव्यास
स्यप्रसादादेतदहंश्रुतवानस्मि किंतदतआह परंयोगम् परत्वमाविष्करोति योगेश्वराच्छ्रीकृष्णात्स्वयमेवसाक्षात्कथयतः श्रुतवानिति ॥ ७५ ॥

किंच राजन्निति । हृष्यामिरोमांचितोभवामि हर्षप्राप्नोमीतिवा स्पष्टमन्यत् ॥ ७६ ॥ किंच तच्चेति । विश्वरूपंनिर्दिशति स्पष्टमन्यत् ॥७७॥ अतस्त्वंपुत्राणां राज्यादिशंकांपरित्यजेत्याशयेनाह यत्रेति । यत्रयेषांपांडवानांपक्षेयोगेश्वरः श्रीकृष्णोवर्तते यत्रचपार्थोगांडीवधनुर्धरः तत्रैवश्रीराज्यलक्ष्मीः तत्रैवविजयः तत्रैवच भूतिरुत्तरोत्तराभिवृद्धिश्च तत्रैवनीतिर्नयोऽपि ध्रुवानिश्चितेतिसर्वत्रसंबध्यते इतिममतिर्निश्चयः अतइदानीमपितावत्सपुत्रस्त्वंश्रीकृष्णंशरणमुपेत्यपांडवान्प्रसा द्यसर्वस्वंचतेभ्योनिवेद्यपुत्रप्राणरक्षणंकुर्वितिभावः ॥७८॥ 'भगवद्भक्तियुक्तस्यतत्प्रसादात्मबोधतः । सुखं बंधविमुक्तिः स्यादितिगीतार्थसंग्रहः ॥१॥' तथाहि 'पुरुषःसपरःपार्थभक्त्यालभ्यस्त्वनन्यया।भक्त्यात्वनन्ययाशक्यअहमेवंविधोऽर्जुन' इत्यादौभगवद्भक्तेर्मोक्षंप्रतिसाधकतमत्वश्रवणात् तदेकांतभक्तिरेवतत्प्रसादो

राजन्संस्मृत्यसंस्मृत्यसंवादमिममद्भुतम् ॥ केशवार्जुनयोःपुण्यंहृष्यामिचमुहुर्मुहुः ॥ ७६ ॥ तच्चसंस्मृत्यसंस्मृत्यरूपमत्यद्भुतंहरेः ॥ विस्मयोमेमहान्राजन्हृष्यामिचपुनःपुनः ॥ ७७ ॥ यत्रयोगेश्वरःकृष्णोयत्रपार्थोधनुर्धरः ॥ तत्रश्रीर्विजयोभूतिर्ध्रुवानीतिर्मतिर्मम ॥ ७८ ॥ इतिश्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायायोगशास्त्रेश्रीकृष्णार्जुनसंवादेमोक्षसंन्यासयोगोनामाष्टादशोऽध्यायः ॥ १८ ॥

स्तथज्ञानावांतरव्यापारमात्रयुक्तामोक्षहेतुरितिस्फुटंप्रतीयते ज्ञानस्यभक्त्यावांतरव्यापारत्वमेवयुक्तम् 'तेषांसततयुक्तानांभजतांप्रीतिपूर्वकम्।[illegible]भबुद्धियोगंतंयेनमा मुपयांतिते।मद्भक्तएतद्विज्ञायमद्भावायोपपद्यत'इत्यादिवचनात् तत्त्वज्ञानमेवभक्तिरित्युक्तम्'समःसर्वेषुभूतेषुमद्भक्तिंलभतेपराम्।भक्त्यामामभिजानातियावान्य श्चास्मितत्त्वत' इत्यादौभेदेननिर्देशात् नचैवंसति"तमेवविदित्वातिमृत्युमेतिनान्यःपंथाविद्यतेऽयनाय"इत्यादिश्रुतिविरोधः शंकनीयः भक्त्यवांतरव्यापारत्वाज्ज्ञा नस्यनहिकाष्ठैःपचतीत्युक्तेज्वालानामसाधनत्वमुक्तंभवति किंच "यस्य देवेपराभक्तिर्यथादेवेतथागुरौ । तस्यैतेकथिताह्यर्थाः प्रकाशंतेमहात्मनाम् । देहांतेदेवः

परंब्रह्मतारकंव्याचष्टे । यमेवैषवृणुतेतेनलभ्य” इत्यादिश्रुतिस्मृतिपुराणवचनान्येवंसतिसमंजसानिभवंति तस्माद्भक्तिरेवमोक्षहेतुरितिसिद्धम् ‘तेनैवदत्तयामत्या तद्गीताविवृतिःकृता । सएवपरमानंदस्तयाप्रीणातुमाधवः ॥ २ ॥ परमानंदपादाब्जरजःश्रीधारिणाऽधुना । श्रीधरस्वामियतिनाकृतागीतासुबोधिनी ॥ ३ ॥ स्वप्रागल्भ्यबलाद्विलोड्यभगवद्गीतातदंतर्गतंतत्त्वंप्रेप्सुरुपैतिकिंगुरुकृपापीयुषदृष्टिंविना । अंबुस्वांजलिनानिरस्यजलधेरादित्सुरंतर्मणीनावर्तेषुनकिंनिमज्जति जनःसत्कर्णधारंविना ॥ ४ ॥’ इतिश्रीमन्महाभारतेशतसाहस्र्यांसंहितायांवैयासिक्यांभीष्मपर्वणिश्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायां [illegible]शास्त्रेश्रीकृष्णार्जुन संवादे योगशास्त्रनिर्णयसंन्यासादितत्त्वनिर्णयेसुबोधिन्यांटीकायांश्रीधरस्वामिकृतौमोक्षयोगोनामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ समाप्तोऽयंग्रंथः ॥

इयं सुबोधिनीटीकासमेता श्रीमद्भगवद्गीता मुंबापुर्यां भगीरथात्मजेन हरिप्रसादेन ‘ज्योतिर्विदित्युपाह्वढण्ढिराजात्मज विठ्ठलशास्त्रिद्वारा’ संशोधयित्वा “गुजराती” मुद्राणालये मुद्रापिता।

शकाब्दाः १८२९, संवदब्दाः १९६४.

श्रीगणेशायनमः ॥ श्रीनारायणजगद्गुरवेनमः ॥ श्रीकृष्णायनमः ॥ शेषाशेषमुखव्याख्याचातुर्यंत्वेकवक्रतः ॥ दधानमद्भुतंवंदेपरमानं
दमाधवम् ॥ १ ॥ श्रीमाधवंप्रणम्योमाधवंविश्वेशमादरात् ॥ तद्भक्तियंत्रितःकुर्वेगीताव्याख्यांसुबोधिनीम् ॥ २ ॥ भाष्यकारमतंसम्यक्तत
द्व्याख्यातृगिरस्तथा ॥ यथामतिसमालोड्यगीताव्याख्यांसमारभे ॥ ३ ॥ गीताव्याख्यायतेयस्याःपाठमात्रादयत्नतः ॥ सेयंसुबोधिनी
टीकासदाध्येयामनीषिभिः ॥ ४ ॥ इहखलुसकललोकहितावतारःसकलवंदितचरणःपरमकारुणिकोभगवान्देवकीनंदनस्तत्त्वाज्ञानवि
जृंभितशोकमोहविभ्रंशिताविवेकतयानिजधर्मत्यागपरधर्माभिसंधिपरमर्जुनं धर्मज्ञानरहस्योपदेशप्लवेनतस्माच्छोकमोहसागरादुद्दधार

॥ धृतराष्ट्रउवाच ॥ ॥ धर्मक्षेत्रेकुरुक्षेत्रेसमवेतायुयुत्सवः ॥ मामकाःपांडवाश्चैवकिमकुर्वतसंजय ॥ १ ॥
॥ संजयउवाच ॥ दृष्ट्वातुपांडवानीकंव्यूढंदुर्योधनस्तदा ॥ आचार्यमुपसंगम्यराजावचनमब्रवीत् ॥ २ ॥

तमेवभगवदुपदिष्टमर्थंकृष्णद्वैपायनःसप्तभिःश्लोकशतैरुपनिबबंध तत्रचप्रायशःश्रीकृष्णमुखनिःसृतानेवश्लोकानलिखत् कांश्चित्तत्सं
गतयेस्वयंव्यरचयत् यथोक्तंगीतामाहात्म्ये गीतासुगीताकर्तव्याकिमन्यैःशास्त्रविस्तरैः यास्वयंपद्मनाभस्यमुखपद्माद्विनिःसृतेति तत्र
तावद्धर्मक्षेत्रइत्यादिनाविषीदन्निदमब्रवीदित्यंतेनग्रंथेनश्रीकृष्णार्जुनसंवादप्रस्तावायकथानिरूप्यते धर्मक्षेत्रइति भोसंजय धर्मभूमौ
कुरुक्षेत्रे मत्पुत्राःपांडुपुत्राश्च युयुत्सवःयोद्धुमिच्छंतः समवेताः मिलिताः संतः किंकृतवंतः ॥ १ ॥ दृष्ट्वेति पांडवानामनीकंसैन्यंव्यूढंव्यू
हरचनयाव्यवस्थितंदृष्ट्वाद्रोणाचार्यसमीपंगत्वाराजादुर्योधनोवक्ष्यमाणवाक्यमुवाच ॥ २ ॥ ॥ ७ ॥ ॥ ७ ॥

तदेववाक्यमाह पश्यैतामित्यादिनवभिःश्लोकैः भोआचार्य पांडवानांवितताचमूंसेनांपश्य द्रुपदपुत्रेणधृष्टद्युम्नेनव्यूढांव्यूहरचनयाअधि
ष्ठिताम् ॥ ३ ॥ अत्रशूराइति अत्रास्यांचम्वांइषवोबाणाअस्यंतेक्षिप्यंतेएभिरितिइष्वासाः धनूंषि महांतइष्वासायेषांतेतथा भीमार्जुनौ
तावदत्रातिप्रसिद्धौयोद्धारौ ताभ्यांसमाःशूराः शौर्येणक्षात्रधर्मेणउपेताःसंति तानेवनामभिर्निर्दिशति युयुधानः सात्यकिः ॥४॥ किंच धृ
ष्टकेतुरिति चेकितानोनामएकोराजा नरपुंगवःनरश्रेष्ठःशैब्यः ॥५॥ युधामन्युश्चेति विक्रांतोयुधामन्युर्नामैकः सौभद्रोऽभिमन्युः द्रौपदेयाः

पश्यैतांपांडुपुत्राणामाचार्यमहतींचमूम् ॥ व्यूढांद्रुपदपुत्रेणतवशिष्येणधीमता ॥ ३ ॥ अत्रशूरामहेष्वासाभीमा
र्जुनसमायुधि ॥ युयुधानोविराटश्चद्रुपदश्चमहारथः ॥ ४ ॥ धृष्टकेतुश्चेकितानःकाशीराजश्चवीर्यवान् ॥ पुरुजि
त्कुंतिभोजश्चशैब्यश्चनरपुंगवः ॥ ५ ॥ युधामन्युश्चविक्रांतउत्तमौजाश्चवीर्यवान् ॥ सौभद्रोद्रौपदेयाश्चसर्वएव
महारथाः ॥ ६ ॥ अस्माकंतुविशिष्टायेतान्निबोधद्विजोत्तम ॥ नायकाममसैन्यस्यसंज्ञार्थंतान्ब्रवीमिते ॥ ७ ॥
भवान्भीष्मश्चकर्णश्चकृपश्चसमितिंजयः ॥ अश्वत्थामाविकर्णश्चसौमदत्तिस्तथैवच ॥ ८ ॥ ॥ ॥

द्रौपद्यांपंचभ्योयुधिष्ठिरादिभ्योजाताःप्रतिविंध्यादयःपंच महारथादीनांलक्षणम् एकोदशसहस्राणियोधयेद्यस्तुधन्विनाम् शस्त्रशास्त्रप्रवी
णश्चमहारथइतिस्मृतः अमितान्योधयेद्यस्तुसंप्रोक्तोऽतिरथस्तुसः रथीत्वेकेनयोयुध्येत्तन्न्यूनोऽर्धरथोमतइति ॥ ६ ॥ अस्माकमिति नि
बोधबुद्ध्यस्व नायकाः नेतारः संज्ञार्थंसम्यग्ज्ञानार्थमित्यर्थः॥७॥तानेवाह भवानितिद्वाभ्याम् भवान्द्रोणः समितिंसंग्रामंजयतीतितथा

सौमदत्तिः सोमदत्तस्यपुत्रोभूरिश्रवाः ॥ ८ ॥ अन्येचेति मदर्थंमत्प्रयोजनार्थंजीवितंत्यक्तुमध्यवसिताइत्यर्थः नानाअनेकानिशस्त्राणिप्र
हरणसाधनानियेषांते युद्धेविशारदानिपुणाइत्यर्थः ॥ ९ ॥ ततःकिमित्यतआह अपर्याप्तमिति तत्तथाभूतैर्वीरैः युक्तमपिभीष्मेणाभि
रक्षितमप्यस्माकंबलंसैन्यमपर्याप्तं तैःसहयोद्धुमसमर्थंभाति इदंतुएतेषांपांडवानांबलंभीमेनाभिरक्षितंसत्पर्याप्तंसमर्थंभाति भीष्मस्यो
भयपक्षपातित्वादस्मद्बलंपांडवसैन्यंप्रत्यसमर्थम् भीमस्यैकपक्षपातित्वात् ॥ १० ॥ तस्मात्भवद्भिरेवंवर्त्तितव्यमित्याह अयनेष्विति अ

अन्येचबहवःशूरामदर्थेत्यक्तजीविताः ॥ नानाशस्त्रप्रहरणाःसर्वेयुद्धविशारदाः ॥ ९ ॥ अपर्याप्तंतदस्माकंबलं
भीष्माभिरक्षितम् ॥ पर्याप्तंत्विदमेतेषांबलंभीमाभिरक्षितम् ॥ १० ॥ अयनेषुचसर्वेषुयथाभागमवस्थिताः ॥ भी
ष्ममेवाभिरक्षंतुभवंतः सर्वएवहि ॥ ११ ॥ तस्यसंजनयन्हर्षंकुरुवृद्धःपितामहः ॥ सिंहनादंविनद्योच्चैःशंखंदध्मौ
प्रतापवान् ॥ १२ ॥ ततःशंखाश्चभेर्यश्चपणवानकगोमुखाः ॥ सहसैवाभ्यहन्यंतसशब्दस्तुमुलोऽभवत् ॥ १३ ॥

यनेषुव्यूहप्रवेशमार्गेषुयथाभागंविभक्तांस्वांस्वांरणभूमिमपरित्यज्यावस्थिताः संतः सर्वेभीष्ममेवाभितोरक्षंतु यथान्यैर्युध्यमानःपृष्ठतःकै
श्चिन्नहन्येततथारक्षंतु भीष्मबलेनैवास्माकंजीवितमितिभावः ॥११॥ तदेवंबहुमानयुक्तंराज्ञोदुर्योधनस्यवाक्यंश्रुत्वाभीष्मःकिंकृतवांस्त
दाह तस्येति तस्यराज्ञःहर्षंसंजनयन्कुर्वन्पितामहोभीष्मउच्चैःमहांतंसिंहनादंकृत्वाशंखंदध्मौ वादितवान् ॥१२॥तदेवंसेनापतेःभीष्यस्म
युद्धोत्सवमालक्ष्यसर्वतोयुद्धोत्सवःप्रवृत्तइत्याह ततइति पणवाः आनकाः गोमुखाश्चवाद्यविशेषाः सहसैवतत्क्षणमेवाभ्यहन्यंतवादिताः

सचशंखादिशब्दस्तुमुलोमहानभवत् ॥ १३ ॥ ततःपांडवसैन्येप्रवृत्तंयुद्धोत्सवमाह ततइतिपंचभिः ततःकौरवसैन्यवाद्यकोलाहलानंतरम् स्यंदनेरथेस्थितौसंतौकृष्णार्जुनौदिव्यौशंखौप्रकर्षेणदध्मतुः वादयामासतुः ॥ १४ ॥ तदेवविभागेनदर्शयन्नाह पांचजन्यमिति पांचजन्यादीनिश्रीकृष्णादिशंखानांनामानि भीमंघोरंकर्मयस्यसः वृकवदुदरंयस्यसवृकोदरोमहाशंखंपौंड्रं दध्माविति ॥ १५ ॥ अनंतविजयमिति

ततःश्वेतैर्हयैर्युक्तेमहतिस्यंदनेस्थितौ ॥ माधवःपांडवश्चैवदिव्यौशंखौप्रदध्मतुः ॥ १४ ॥ पांचजन्यंहृषीकेशोदेवदत्तंधनंजयः ॥ पौंड्रंदध्मौमहाशंखंभीमकर्मावृकोदरः ॥ १५ ॥ अनंतविजयंराजाकुंतीपुत्रोयुधिष्ठिरः ॥ नकुलःसहदेवश्चसुघोषमणिपुष्पकौ ॥ १६ ॥ काश्यश्चपरमेष्वासःशिखंडीचमहारथः ॥ धृष्टद्युम्नोविराटश्चसात्यकिश्चापराजितः ॥ १७ ॥ द्रुपदोद्रौपदेयाश्चसर्वशःपृथिवीपते ॥ सौभद्रश्चमहाबाहुःशंखान्दध्मुःपृथक्पृथक् ॥ १८ ॥ सघोषोधार्त्तराष्ट्राणांहृदयानिव्यदारयत् ॥ नभश्चपृथिवींचैवतुमुलोव्यनुनादयन् ॥ १९ ॥ अथव्यवस्थितान्दृष्ट्वाधार्त्तराष्ट्रान्कपिध्वजः ॥ प्रवृत्तेशस्त्रसंपातेधनुरुद्यम्यपांडवः ॥ २० ॥ ॥ ॥ ॥

नकुलःसुघोषंनामशंखंदध्मौ सहदेवोमणिपुष्पकंनाम ॥ १६ ॥ काश्यश्चेति काश्यःकाशीराजः कथंभूतः परमःश्रेष्ठःइष्वासोधनुर्यस्यसः ॥ १७ ॥ द्रुपदइति हेपृथिवीपतेहेधृतराष्ट्र ॥ १८ ॥ सचशंखानांनादस्त्वदीयानांमहाभयंजनयामासेत्याह सघोषइति धार्त्तराष्ट्राणांत्वदीयानांहृदयानिविदारितवान किंकुर्वन् नभश्चपृथिवींचैवतुमुलोव्यनुनादयन् ॥ १९ ॥ तस्मिन्समयेश्रीकृष्णमर्जुनोविज्ञापयामासेत्त्या

ह अथेतिचतुर्भिः व्यवस्थितान्युद्धोद्योगेनास्थितान् कपिध्वजःअर्जुनः ॥ २० ॥ हृषीकेशमिति तदेववाक्यमाह सेनयोरिति ॥ २१ ॥ या वदेतानिति ननुत्वंयोद्धानतुयुद्धप्रेक्षकस्तत्राह कैःसहमयायोद्धव्यम् ॥ २२ ॥ योत्स्यमानानिति धार्त्तराष्ट्रस्यदुर्योधनस्यप्रियंकर्तुमिच्छंतो यइहसमागतास्तान्यावद्द्रक्ष्यामितावदुभयोःसेनयोर्मध्येमेरथंस्थापयेत्यन्वयः ॥ २३ ॥ ततःकिंप्रवृत्तमित्यपेक्षायांसंजयउवाच एवमि

हृषीकेशंतदावाक्यमिदमाहमहीपते ॥ सेनयोरुभयोर्मध्येरथंस्थापयमेऽच्युत ॥ २१ ॥ यावदेतान्निरीक्षेऽहंयो द्धुकामानवस्थितान् ॥ कैर्मयासहयोद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥ योत्स्यमानानवेक्षेऽहंयएतेऽत्रसमाग ताः ॥ धार्तराष्ट्रस्यदुर्बुद्धेर्युद्धेप्रियचिकीर्षवः ॥ २३ ॥ संजयउवाच ॥ एवमुक्तोहृषीकेशोगुडाकेशेनभारत ॥ सेनयोरुभयोर्मध्येस्थापयित्वारथोत्तमम् ॥ २४ ॥ भीष्मद्रोणप्रमुखतःसर्वेषांचमहीक्षिताम् ॥ उवाचपार्थपश्यै तान्समवेतान्कुरूनिति ॥ २५ ॥ तत्रापश्यत्स्थितान्पार्थःपितॄनथपितामहान् ॥ आचार्यान्मातुलान्भ्रातॄन्पु त्रान्पौत्रान्सखींस्तथा ॥ श्वशुरान्सुहृदश्चैवसेनयोरुभयोरपि ॥ २६ ॥ ॥ ॥ ॥ ॥

ति गुडाकानिद्रातस्याईशेनजितनिद्रेणार्जुनेनैवमुक्तःसन् हेभारतधृतराष्ट्र सेनयोर्मध्येरथानामुत्तमंरथंहृषीकेशःस्थापितवान् ॥ २४ ॥ भी ष्मद्रोणइति महीक्षितांपितामहद्रोणराज्ञांचप्रमुखतःसंमुखेरथंस्थापयित्वा हेपार्थ एतान्कुरून्पश्येत्युवाच ॥ २५ ॥ ततःकिंप्रवृत्तमित्यतआ हपितॄन्पितृव्यादीनित्यर्थः पुत्रान्पौत्रानिति दुर्योधनादीनांयेपुत्राः पौत्राश्चतानित्यर्थः सखीन्मित्राणि सुहृदःकृतोपकारांश्चापश्यत् ॥ २६

ततःकिंकृतवानित्यतआह तानिति आविष्टोव्याप्तःयुक्तःविषीदन्विशेषेणसीदन् अवसादंग्लानिंलभमानः ॥ २७ ॥ किमब्रवीदित्यपेक्षा यामाह दृष्ट्वेममित्यादियावदध्यायसमाप्ति हेकृष्ण योद्धुमिच्छंतंपुरतःसम्यगवस्थितंइमंबंधुजनंदृष्ट्वामदीयानिगात्राणिकरचरणादीनि सीदंतिविशीर्यंते किंच मुखंपरिसमंतात्शुष्यति निर्द्रवीभवति ॥ २८ ॥ किंच वेपथुश्चेति वेपथुःकंपः रोमांचः स्रंसतेनिपतति परिदह्य

तान्समीक्ष्यसकौंतेयःसर्वान्बंधूनवस्थितान् ॥ कृपयापरयाविष्टोविषीदन्निदमब्रवीत् ॥ २७ ॥ अर्जुनउवाच ॥ दृष्ट्वेमंस्वजनंकृष्णयुयुत्सुंसमुपस्थितम् ॥ सीदंतिममगात्राणिमुखंचपरिशुष्यति ॥ २८ ॥ वेपथुश्चशरीरेमेरोमहर्षश्चजायते ॥ गांडीवंस्रंसतेहस्तात्त्वक्चैवपरिदह्यते ॥ २९ ॥ नचशक्नोम्यवस्थातुंभ्रमतीवचमेमनः ॥ निमित्तानिचपश्यामिविपरीतानिकेशव ॥ ३० ॥ नचश्रेयोऽनुपश्यामिहत्वास्वजनमाहवे ॥ नकांक्षेविजयंकृष्णनचराज्यंसुखानिच ॥ ३१ किंनोराज्येनगोविंदकिंभोगैर्जीवितेनवा ॥ येषामर्थेकांक्षितंनोराज्यंभोगाःसुखानिच ॥ ॥ ३२ ॥ तइमेवस्थितायुद्धेप्राणांस्त्यक्त्वाधनानिच ॥ आचार्याःपितरःपुत्रास्तथैवचपितामहाः ॥ ३३ ॥

तेसर्वतः संतप्यते ॥ २९ ॥ अन्यच्च नचेति विपरीतानिनिमित्तानिअनिष्टसूचकानिशकुनानिपश्यामि ॥३०॥ किंच नचेति स्वजनंआहवेयुद्धेहत्वाश्रेयःफलंनपश्यामि विजयादिकंफलंकिंनपश्यसीतिचेत्तत्राह नकांक्षइति॥३१॥ एतदेवप्रपंचयति किंनइतिसार्धाभ्याम् यदर्थमस्माकंराज्यादिकमपेक्षितंतएतेप्राणधनानित्यक्त्वात्यागमंगीकृत्ययुद्धार्थमवस्थिताः अतःकिमस्माकंराज्यादिभिःकृत्यमित्यर्थः ॥३२३३

ननुयदिकृपयात्वमेतान्नहंसितर्हित्वामेतेराज्यलोभेनहनिष्यंत्येव अतस्त्वमेवैतान्हत्वाराज्यंभुंक्ष्वतत्राह एतानितिसार्द्धेन घ्नतोप्यस्मा
न्घातयतोपिएतान्त्रैलोक्यराज्यस्यापिहेतोस्तत्प्राप्त्यर्थमप्यहंहंतुंनेच्छामि किंपुनर्महीमात्रप्राप्त्यर्थमित्यर्थः ॥ ३४ ॥ ३५ ॥ ननुचअग्निदो
गरदश्चैवशस्त्रपाणिर्धनापहः क्षेत्रदारापहर्त्ताचषडेतेआततायिनइतिस्मरणात् अग्निदइत्यादिभिःषड्भिरपिहेतुभिरेतेतावदाततायिनः
आततायिनांचवधोयुक्तएव आततायिनमायांतंहन्यादेवाविचारयन् नाततायिवधेदोषोहंतुर्भवतिकश्चनेतिवचनात्तत्राहसार्द्धेन पापमि

मातुलाःश्वशुराःपौत्राःश्यालाःसंबंधिनस्तथा ॥ एतान्नहंतुमिच्छामिघ्नतोऽपिमधुसूदन ॥ ३४ ॥ अपित्रैलोक्यरा
ज्यस्यहेतोःकिंनुमहीकृते ॥ निहत्यधार्त्तराष्ट्रान्नःकाप्रीतिः स्याज्जनार्दन ॥ ३५ ॥ पापमेवाश्रयेदस्मान्हत्वैतानातता
यिनः ॥ तस्मान्नार्हावयंहंतुंधार्त्तराष्ट्रान्स्वबांधवान् ॥ स्वजनंहिकथंहत्वासुखिनः स्याममाधव ॥ ३६ ॥ यद्यप्येतेनप
श्यंतिलोभोपहतचेतसः ॥ कुलक्षयकृतंदोषंमित्रद्रोहेचपातकम् ॥ ३७ ॥ कथंनज्ञेयमस्माभिः पापादस्मान्निवर्ति
तुम् ॥ कुलक्षयकृतंदोषंप्रपश्यद्भिर्जनार्दन ॥ ३८ ॥ ॥ ॥ ॥ ॥

ति आततायिनमायांतमित्यादिकमर्थशास्त्राद्दुर्बलम् यथोक्तंयाज्ञवल्क्येन स्मृत्योर्विरोधेन्यायस्तुबलवान्व्यवहारतः अर्थशास्त्राच्चबल
वद्धर्मशास्त्रमितिस्थितिः तस्मादाततायिनामप्येतेषामाचार्यादीनांवधेऽस्माकंपापमेवभवेत् अन्याय्यत्वादधर्मत्वाच्चैतद्वधस्य ॥ ३६ ॥ ३७ ॥
नचेहसुखंस्यादित्याह स्वजनंहीति ननुतवैतेषामपिबंधुवधदोषेसमानेसतियथैवैतेबंधुवधदोषमंगीकृत्ययुद्धेप्रवर्त्तंते तथैवभवानपिप्रवर्त्त

तांकिमनेनविषादेनेत्यतआह यद्यपीतिद्वाभ्याम् राज्यलोभेनोपहतंभ्रष्टविवेकंचेतोयेषांतेएतेदुर्योधनादयोयद्यपिदोषंनपश्यंति तथाप्य स्माभिर्दोषंप्रपश्यद्भिरस्मात्पापान्निवर्तितुंकथंनज्ञेयम् निवृत्तावेवबुद्धिःकर्त्तव्येत्यर्थः॥ ३८ ॥तमेवदोषंदर्शयति कुलक्षयइति सनातनाःपरं पराप्राप्ताः उतअपिअवशिष्टंकुलंधर्मोऽभिभवति व्याप्नोति॥ ३९ ॥ ततश्चअधर्माभिभवादिति॥ ४०॥एवंसतिसंकरइति एषांकुलघ्नानांपित रःपतंति हियस्मात् लुप्ताःपिंडोदकक्रियायेषांते॥ ४१ ॥उक्तंदोषमुपसंहरति दोषैरितिद्वाभ्याम् उत्साद्यंतेलुप्यंतेजातिधर्माःवर्णधर्माःकुलध

कुलक्षयेप्रणश्यंतिकुलधर्माःसनातनाः॥ धर्मेनष्टेकुलंकृत्स्नमधर्मोऽभिभवत्युत ॥ ३९ ॥ अधर्माभिभवात्कृष्णप्रदु ष्यंतिकुलस्त्रियः॥ स्त्रीषुदुष्टासुवार्ष्णेयजायतेवर्णसंकरः ॥ ४० ॥ संकरोनरकायैवकुलघ्नानांकुलस्यच ॥ पतंतिपि तरोह्येषांलुप्तपिंडोदकक्रियाः ॥ ४१ ॥ दोषैरेतैःकुलघ्नानांवर्णसंकरकारकैः ॥ उत्साद्यंतेजातिधर्माःकुलधर्माश्चशा श्वताः ॥ ४२ ॥ उत्सन्नकुलधर्माणांमनुष्याणांजनार्दन॥ नरकेनियतंवासोभवतीत्यनुशुश्रुम ॥ ४३ ॥ अहोबतम हत्पापंकर्तुंव्यवसितावयम् ॥ यद्राज्यसुखलोभेनहंतुंस्वजनमुद्यताः॥ ४४ ॥ ॥ ॥ ॥

र्माश्च चकारादाश्रमधर्मादयोऽपिगृह्यंते॥ ४२॥ उत्सन्नेति उत्सन्नाःकुलधर्मायेषामितिउत्सन्नजातिधर्मादीनामप्युपलक्षणम् अनुशुश्रुम श्रुतवंतोवयम् प्रायश्चित्तमकुर्वाणाःपापेषुनिरतानराःअपश्चात्तापिनःकष्टान्निरयान्यांतिदारुणानित्यादिवचनेभ्यः ॥ ४३ ॥ बंधुवधाध्यवसा येनसंतप्यमानअह अहोइति स्वजनंहंतुमुद्यताइति यतएतन्महत्पातकंकर्त्तुमध्यवसायंकृतवंतोवयम् अहोबतकष्टमित्यर्थः॥ ४४ ॥

एवंसंतप्तःसन्मृत्युमेवाशासानआह्वयदीति अकृतप्रतीकारंतूष्णीमुपविष्टंमांयदिहनिष्यंतितार्हितद्धननंममक्षेमतरमत्यंतंहितंभवेत् पा
पानिष्पत्तेः ॥ ४५ ॥ ततःकिंवृत्तमित्यपेक्षायांसंजयउवाच एवमिति संख्येसंग्रामे रथोपस्थेरथस्योपरिउपाविशत् उपविवेश शोकेन
संविग्नंप्रकंपितंमानसंचित्तंयस्यसः ॥ ४६ ॥ इतिश्रीसुबोधिन्यांटीकायांश्रीधरस्वामिविरचितायांप्रथमोऽध्यायः ॥ १ ॥ ततःकिंवृत्तमि
त्यपेक्षायांसंजयउवाच तंतथेति अश्रुभिःपूर्णेआकुलेईक्षणेयस्यतम् तथोक्तप्रकारेणविषीदंतमर्जुनंप्रतिमधुसूदनइदंवाक्यमुवाच ॥१॥

यदिमामप्रतीकारमशस्त्रंशस्त्रपाणयः ॥ धार्त्तराष्ट्रारणेहन्युस्तन्मेक्षेमतरंभवेत् ॥४५॥ संजयउवाच ॥ एवमुक्त्वार्जु
नःसंख्येरथोपस्थउपाविशत् ॥ विसृज्यसशरंचापंशोकसंविग्नमानसः ॥ ४६ ॥ इति श्रीमद्भ०सूपनि०ब्रह्म०अर्जु
नविषादयोगोनामप्रथमोऽध्यायः ॥ १ ॥ ॥ संजयउवाच ॥ तंतथाकृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ॥ विषीदंतमि
दंवाक्यमुवाचमधुसूदनः ॥ १ ॥ ॥ श्रीभगवानुवाच ॥ कुतस्त्वाकश्मलमिदंविषमेसमुपस्थितम् ॥ अनार्यजुष्टमस्व
र्ग्यमकीर्तिकरमर्जुन ॥ २ ॥ क्लैब्यंमास्मगमः पार्थनैतत्त्वय्युपपद्यते ॥ क्षुद्रंहृदयदौर्बल्यंत्यक्त्वोत्तिष्ठपरंतप ॥ ३ ॥

तदेववाक्यमाह श्रीभगवानुवाच कुतइति कुतोहेतोः त्वाइतित्वाम् विषमेसंकटेइदंकश्मलंसमुपस्थितम् अयंमोहःप्राप्तः यतआर्यैर
सेवितम् अस्वर्ग्यमधर्म्यम् अयशस्करंच ॥ २ ॥ तस्मात् क्लैब्यमिति हेपार्थक्लैब्यंकातर्यंमास्मगमः नप्राप्नुहि यतस्त्वय्येतन्नोपपद्यते
योग्यंनभवति क्षुद्रंतुच्छम् हृदयदौर्बल्यंकातर्यंत्यक्त्वायुद्धायोत्तिष्ठ हेपरंतपशत्रुतापन ॥ ३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

नाहंकातर्यैणयुद्धादुपरतोऽस्मिकिंतुयुद्धस्यान्याय्यत्वादित्यर्जुनउवाच कथमिति भीष्मद्रोणौपूजायामर्हौयोग्यौतौप्रतिकथमहंयोत्स्या
मि तत्रापिइषुभिः यत्रवाचापियोत्स्यामीतिवक्तुमनुचितं तत्रबाणैःकथंयोत्स्यामीत्यर्थः हेअरिसूदनशत्रुसूदन ॥ ४ ॥ तर्हितवदेहइया
त्रापिनस्यादितिचेत्तत्राह गुरूनिति गुरून्द्रोणादीनहत्वापरलोकविरुद्धोगुरुवधस्तमकृत्वाइहलोकेभिक्षान्नमपिभोक्तुं श्रेयः उचितम् वि
पक्षेतु नकेवलं परत्रदुःखम् इहैवतुनरकदुःखमनुभवेयामित्याह हत्वेति गुरुन्हत्वाइहैवतुरुधिरेणप्रादिग्धान्प्रकर्षेणलिप्तान् अर्थकामात्म
कान्भोगानहंभुंजीयअश्नीयाम् यद्वा अर्थकामानितिगुरूणांविशेषणम् अर्थतृष्णाकुलत्वादेतेतावद्युद्धान्ननिवर्त्तेरन् तस्मादेतद्वधःप्रसज्ये

अर्जुनउवाच ॥ ॥ कथंभीष्ममहंसंख्येद्रोणंचमधुसूदन ॥ इषुभिः प्रतियोत्स्यामिपूजार्हावरिसूदन ॥ ४ ॥ गुरूनहत्वा
हिमहानुभावान् श्रेयोभोक्तुंभैक्ष्यमपीहलोके ॥ हत्वाऽर्थकामांस्तुगुरूनिहैवभुंजीयभोगान्रुधिरप्रदिग्धान् ॥ ५ ॥ न
चैतद्विद्मःकतरन्नोगरीयोयद्वाजयेमयदिवानोजयेयुः ॥ यानेवहत्वानजिजीविषामस्तेऽवस्थिताःप्रमुखेधार्तराष्ट्राः ॥ ६ ॥

तैवेत्यर्थः तथाचयुधिष्ठिरंप्रतिभीष्मेणोक्तम् अर्थस्यपुरुषोदासोदासस्त्वर्थोनकस्यचित् इतिसत्यंमहाराजबद्धोऽस्म्यर्थेनकौरवैरिति ॥ ५ ॥
किंच यद्यपिअधर्ममंगीकरिष्यामस्तथाऽपिकिमस्माकंजयःपराजयोवाभवेदितिनज्ञायतइत्याह नचेति एतद्द्वयोर्मध्येनोऽस्माकंकतरत्
किंनामगरीयोऽधिकतरंभविष्यतीतिनविद्मः तदेवद्वयंदर्शयति यद्वा एतान्वयंजयेमजेष्यामः यदिवानोऽस्मानेतेजयेयुः जेष्यंतीति
किंचास्माकंवाजयोऽपिफलतःपराजयएवेत्याह यानेवहत्वाजीवितुंनेच्छामस्तएवैतेसंमुखेअवस्थिताः ॥ ६ ॥ ॥ ॥ ॥ ॥

कार्पण्येति तस्मात्कार्पण्यदोषोपहतस्वभावः एतान्हत्वाकथंजीविष्यामइतिकार्पण्यं दोषश्चस्वकुलक्षयकृतस्ताभ्यामुपहतोऽभिभूतः स्व
भावःशौर्यादिलक्षणोयस्यसोऽहंत्वांपृच्छामि तथाधर्मेसंमूढंचेतोयस्यसःयुद्धंत्यक्त्वाभिक्षाटनमपिक्षत्रियस्यधर्मोवाऽधर्मोवेतिसंदिग्धचि
त्तःसन्नित्यर्थः अतोमेयन्निश्चितंश्रेयोयुक्तंस्यात्तद्ब्रूहि किंच तेऽहंशिष्यःशासनार्हः अतस्त्वांप्रपन्नंशरणागतंमांशाधि शिक्षय ॥७॥ त्वमेववि
चार्ययद्युक्तंतत्कुर्वितिचेत्तत्राह नहीति इंद्रियाणामुच्छोषणमतिशोषणकरंमदीयंशोकंयत्कर्मापनुद्यादपनयेत्तदहंनप्रपश्यामि यद्यपिभू

कार्पण्येदोषोपहतस्वभावःपृच्छामित्वांधर्मसंमूढचेताः ॥ यच्छ्रेयःस्यान्निश्चितंब्रूहितन्मेशिष्यस्तेऽहंशाधिमांत्वां
प्रपन्नम् ॥ ७ ॥ नहिप्रपश्यामिममापनुद्याद्यच्छोकमुच्छोषणमिंद्रियाणाम् ॥ अवाप्यभूमावसपत्नमृद्धं राज्यंसुरा
णामपिचाधिपत्यम् ॥ ८ ॥ ॥ संजयउवाच ॥ ॥ एवमुक्त्वाहृषीकेशंगुडाकेशःपरंतप ॥ नयोत्स्यइतिगोविंद
मुक्त्वातूष्णींबभूवह ॥ ९ ॥ तमुवाचहृषीकेशःप्रहसन्निवभारत ॥ सेनयोरुभयोर्मध्येविषीदंतमिदंवचः ॥ १० ॥
श्रीभगवानुवाच ॥ अशोच्यानन्वशोचस्त्वंप्रज्ञावादांश्चभाषसे ॥ गतासूनगतासूंश्चनानुशोचंतिपंडिताः ॥ ११ ॥

मौनिष्कंटकंसमृद्धंराज्यंप्राप्स्यामि तथासुरेंद्रत्वमपियदिप्राप्स्यामि एवमभीष्टंतत्सर्वमवाप्यापिशोकापनोदनोपायंनप्रपश्यामीत्यन्व
यः॥८॥ एवमुक्त्वार्जुनःकिंकृतवानित्यपेक्षायांसंजयउवाच एवमिति स्पष्टार्थः॥९॥ततःकिंवृत्तमित्यपेक्षायामाह तमुवाचेति प्रहसन्निवप्र
सन्नमुखःसन्नित्यर्थः ॥ १० ॥ देहात्मनोरविवेकादस्यैवंशोकोभवतीतितद्विवेकप्रदर्शनार्थं श्रीभगवानुवाच अशोच्यानितिशोकस्याविषय

भूतानेववंधूंस्त्वमन्वशोचः अनुशोचितवानसि दृष्ट्वेमंस्वजनंकृष्ण युयुत्सुंसमुपस्थितमित्यादिनातत्रकुतस्त्वाकश्मलमिदंविषमेसमुपस्थि
तमित्यादिनामयाबोधितोपि पुनश्चप्रज्ञावतांपंडितानांवादान्शब्दान्कथंभीष्ममहंसंख्यइत्यादीन्केवलंभाषसे नतुपंडितोऽसियतःगता
सून् गतप्राणान्बंधूनगतासूंश्चजीवतोपिबंधुहीनाएतेकथंजीविष्यंतीतिनानुशोचंति ॥ ११ ॥ अशोच्यत्वेहेतुमाह नत्वेवेतियथाऽहंपरमेश्वरो
जातुकदाचित्लीलाविग्रहस्याविर्भावेतिरोभावेपिनासमितिनैव अपितुआसमेव अनादित्वात् नचत्वंनासीः नाभूःअपित्वासीरेव इमेच
जनाधिपाः नृपाःनासन्नितिन अपितुआसन्नेव मदंशत्वात् तथाऽतःपरंइतउपर्यपिनभविष्यामोनस्थास्यामइतिचनैव अपितुस्थास्याम

नत्वेवाहंजातुनासंनत्वंनेमेजनाधिपाः ॥ नचैवनभविष्यामःसर्वेवयमतःपरम् ॥ १२ ॥
देहिनोऽस्मिन्यथादेहेकौमारंयौवनंजरा ॥ तथादेहांतरप्राप्तिर्धीरस्तत्रनमुह्यति ॥ १३ ॥

एव जन्ममरणशून्यत्वादशोच्याइत्यर्थः ॥ १२ ॥ नन्वीश्वरस्यतवजन्मादिशून्यत्वंसत्यमेव जीवानांतुजन्ममरणेप्रसिद्धेतत्राह देहिनइति दे
हिनो देहाभिमानिनोजीवस्ययथाऽस्मिन्स्थूलदेहेकौमाराद्यवस्थादेहनिबंधनाएवनतुस्वतः पूर्वावस्थानाशेऽवस्थांतरोत्पत्तावपिसएवाह
मितिप्रत्यभिज्ञानात्तथैवैतद्देहनाशेदेहांतरप्राप्तिरपिलिंगदेहनिबंधना नतुतावतात्मनोनाशः जातमात्रस्यपूर्वसंस्कारेणस्तन्यपानादौप्रवृ
त्तिदर्शनात् अतोधीरः धीमांस्तत्रतयोर्देहनाशोत्पत्त्योर्नमुह्यति आत्मैवमृतोजातश्चेतिनमन्यते ॥ १३ ॥ ॥ ॥ ॥ ॥

ननुगतानागतानहंनशोचामि किंतुतद्वियोगादिदुःखभाजमात्मानमेवेतिचेत्तत्राह मात्रास्पर्शाइति मीयंतेज्ञायंतेविषयाआभिरितिमा
त्राइंद्रियवृत्तयःतासांस्पर्शाःविषयैःसंबंधाः तेशीतोष्णादिप्रदाभवंति तेत्वागमापायित्वादनित्याअस्थिराः अतस्तांस्तितिक्षस्वसहस्व
यथाजलातपादिसंपर्कास्तत्तत्कालकृताःस्वभावतःशीतोष्णादिप्रयच्छंति एवमिष्टसंयोगवियोगाअपिसुखदुःखादिप्रयच्छंतितेषांचास्थि
रत्वात्सहनंतवधीरस्योचितं नतुतन्निमित्तहर्षविषादपारवश्यमित्यर्थः ॥ १४॥ तत्प्रतीकारप्रयत्नादपितत्सहनमेवोचितंमहाफलत्वादित्या

मात्रास्पर्शास्तुकौंतेयशीतोष्णसुखदुःखदाः ॥ आगमापायिनोनित्यास्तांस्तितिक्षस्वभारत ॥ १४ ॥ यंहिनव्यथ
यंत्येतेपुरुषंपुरुषर्षभ ॥ समदुःखसुखंधीरंसोऽमृतत्वायकल्पते ॥ १५ ॥ नासतोविद्यते भावोनाभावोविद्यतेसतः॥
उभयोरपिदृष्टोंऽतस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥

ह यमिति एतेमात्रास्पर्शाःयंपुरुषंनव्यथयंति नाभिभवंति समेसुखदुःखेयस्यतम् सतैरविक्षिप्यमाणोधर्मज्ञानद्वाराअमृतत्वायमोक्षाय
कल्पतेयोग्योभवति॥ १ ५॥ ननुतथाऽपिशीतोष्णादिकमातिदुःसहंकथंसोढव्यम् अत्यंतंतत्सहनेचकदाचिद्देहनाशस्यापिसंभवादित्याशं
क्यतत्त्वविचारतःसर्वंसोढुंशक्यमित्याशयेनाह नेति असतःअनात्मधर्मत्वादविद्यमानस्यशीतोष्णादेरात्मनिभावःसत्तानविद्यतेतथास
तः सत्स्वभावस्यात्मनोऽभावोविनाशोनविद्यते एवमुभयोःसदसतोरंतोनिर्णयोदृष्टः कैस्तत्त्वदर्शिभिर्वस्तुयाथात्म्यविद्भिः एवंभूतविवे

केनसहस्वेत्यर्थः॥ १६॥तत्रसत्स्वभावमविनाशिवस्तुसामान्येनोक्तंविशेषतोदर्शयति अविनाशीति येनसर्वमिदमागमापायधर्मकंदेहादिकं
ततं तत्साक्षित्वेनव्याप्तम् तत्तुआत्मस्वरूपंअविनाशि विनाशशून्यंविद्धि जानीहि तत्रहेतुमाह विनाशमिति ॥ १७॥आगमापायधर्मकं
संदर्शयति अंतवंतइति अंतोविनाशोविद्यतेयेषांतेअंतवंतः नित्यस्यसर्वदैकरूपस्यशरीरिणःशरीरवतः अतएवअनाशिनःविनाशरहि
तस्याप्रमेयस्यापरिच्छिन्नस्यात्मनइमेसुखदुःखादिधर्मकादेहाउक्तास्तत्त्वदर्शिभिः यस्मादेवमात्मनोनविनाशः नचसुखदुःखादिसंबंधः

अविनाशितुतद्विद्धियेनसर्वमिदंततम् ॥ विनाशमव्ययस्यास्यनकश्चित्कर्तुमर्हति ॥ १७॥ अंतवंतइमेदेहानित्य
स्योक्ताःशरीरिणः॥ अनाशिनोऽप्रमेयस्यतस्माद्युध्यस्वभारत ॥ १८॥ यएनंवेत्तिहंतारंयश्चैनंमन्यतेहतम् ॥ उ
भौतौनविजानीतोनायंहंतिनहन्यते ॥ १९॥ नजायतेम्रियतेवाकदाचिन्नायंभूत्वाभविताव्वानभूयः ॥ अजोनि
त्यःशाश्वतोऽयंपुराणोनहन्यतेहन्यमानेशरीरे ॥२०॥तस्मान्मोहजंशोकंत्यक्त्वायुध्यस्वधर्ममात्याक्षीरित्यर्थः ॥१८॥तदेवंभी

ष्मादिमृत्युनिमित्तःशोकोनिवारितःयच्चात्मनोहंतृत्वनिमित्तंदुःखमुक्तम् एतान्नहंतुमिच्छामीत्यादिना तदपितद्वदेवनिर्निमित्तमित्याह
यएनमिति एनमात्मानं आत्मनोहननक्रियायांकर्मत्ववत्कर्तृत्वमपिनास्तीत्यर्थः तत्रहेतुः नायमिति ॥ १९ ॥ नहन्यतइत्येतदेवष
ड्भावविकारशून्यत्वेनद्रढयति नेति नजायतइतिजन्मप्रतिषेधः नम्रियेतेचतिविनाशप्रतिषेधः वाशब्दौचार्थौ नचायंभूत्वाउत्पद्यभ
विताभवतिअस्तित्वंभजते किंतुप्रागेवस्वतःसद्रूपइतिजन्मानंतरास्तित्वलक्षणद्वितीयविकारप्रतिषेधः तत्रहेतुः यस्मादजः योहिजाय

तेसजन्मांतरमास्तित्वंभजते नतुयःस्वयमेवास्तिसभूयोऽप्यन्यदस्तित्वंभजतइत्यर्थः नित्यःसर्वदैकरूपइतिवृद्धिप्रतिषेधः शाश्वतःशश्वद्भ
वइत्यपक्षयप्रतिषेधः पुराणइतिविपरिणामप्रतिषेधः पुराऽपिनवएव नतुपरिणामतोरूपांतरंप्राप्यनवोभवतीत्यर्थः यद्वा नभवितेत्यस्या
नुषंगंकृत्वाभूयोऽधिकंयथाभवतितथानभवतीतिवृद्धिप्रतिषेधः अजोनित्यइतिचोभयवृद्ध्यभावेहेतुरित्यपौनरुक्त्यम् तदेव जायतेअस्ति
वर्धतेविपरिणमतेअपक्षीयतेविनश्यतीत्येवंयास्कादिभिर्वेदवादिभिरुक्ताःषड्भावविकारानिरस्ताः यदर्थमेतेविकारानिरस्तास्तंप्रस्तुतंविना
शाभावमुपसंहरति नहन्यतेहन्यमानेशरीरइति॥२०॥अतएवहंतृत्वाभावोऽपिपूर्वोक्तःप्रसिद्धइत्याह वेदेति नित्यंवृद्धिशून्यमव्ययमपक्षय

वेदाविनाशिनंनित्यंयएनमजमव्ययम् ॥ कथंसपुरुषःपार्थकंघातयतिहंतिकम् ॥ २१ ॥ वासांसिजीर्णानियथावि
हायनवानिगृह्णातिनरोऽपराणि ॥ तथाशरीराणिविहायजीर्णान्यन्यानिसंयातिनवानिदेही ॥ २२ ॥ नैनंछिंदंति
शस्त्राणिनैनंदहतिपावकः ॥ नचैनंक्लेदयंत्यापोनशोषयतिमारुतः ॥ २३ ॥ ॥ ॥ ॥ ॥

शून्यम् अजमविनाशिनंचयोवेद सपुरुषःकंहंति कथंवाहंति एवंभूतस्यवधेसाधनाभावात् तथास्वयंप्रयोजकोभूत्वाऽन्येनकंघातयति नकं
चिदपिकथंचिदपीत्यर्थः अनेनमय्यपिप्रयोजकत्वाददोषदृष्टिंमाकार्षीः इत्युक्तंभवति॥२१॥नन्वात्मनोऽविनाशित्वेपितदीयशरीरनाशंप
र्यालोच्यशोचामीतिचेत्तत्राह वासांसीति कर्मनिबंधनभूतानांदेहानामवश्यंभावित्वान्नजीर्णदेहनाशेशोकावकाशइत्यर्थः ॥२२॥ कथंहं
तीत्यनेनोक्तंवधसाधनाभावंदर्शयन्नविनाशित्वमात्मनःस्फुटीकरोति नैनमिति आपोनैनंक्लेदयंति मृदुकरणेनशिथिलंनकुर्वंति ॥ २३ ॥

तत्रहेतूनाह अच्छेद्यइतिसार्द्धेन निरवयवत्वादच्छेद्योऽयमक्लेद्यश्चअमूर्त्तत्वात् अदाह्यो द्रवत्वाभावादशोष्यइतिभावः इतश्चछेदादियोग्यो
नभवति यतोनित्यः अविनाशीसर्वत्रगतः स्थाणुः स्थिरस्वभावःरूपांतरापत्तिशून्यः अचलःपूर्वरूपापरित्यागी सनातनःअनादिः ॥२४॥
किंच अव्यक्तश्चक्षुराद्यविषयः अचिंत्योमनसोऽप्यविषयः अविकार्यः कर्मेंद्रियाणामप्यगोचरइत्यर्थः उच्यतइतिनित्यत्वादावभियुक्तो
क्तिंप्रमाणयति उपसंहरतितस्मादिति ॥२५॥ तदेवमात्मनोजन्मविनाशाभावान्नशोकःकार्यइत्युक्तम् इदानींदेहेनसहात्मनोजन्मतद्विना

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्यएवच ॥नित्यःसर्वगतःस्थाणुरचलोऽयंसनातनः॥ २४ ॥ अव्यक्तोऽयमचिं
त्योऽयमविकार्योऽयमुच्यते ॥ तस्मादेवंविदित्वैनंनानुशोचितुमर्हसि ॥ २५॥ अथचैनंनित्यजातंनित्यंवामन्यसेमृ
तम् ॥ तथाऽपित्वंमहाबाहोनैवंशोचितुमर्हसि ॥ २६ ॥ जातस्यहिध्रुवोमृत्युर्ध्रुवंजन्ममृतस्यच ॥ तस्मादपरिहार्ये
ऽर्थेनत्वंशोचितुमर्हसि॥ २७॥अव्यक्तादीनिभूतानिव्यक्तमध्यानिभारत॥अव्यक्तनिधनान्येवतत्रकापरिदेवना॥२८॥

शेनचविनाशमंगीकृत्यापिशोकोनकार्यइत्याह अथचेति अथचयद्यप्येनमात्मानंनित्यंसर्वदातत्तद्देहेजातेजातंमन्यसे तथातत्तद्देहेमृतेमृ
तंमन्यसे पुण्यपापयोस्तत्फलभूतयोर्जन्ममरणयोरात्मगामित्वात् तथापित्वंशोचितुंनार्हसि ॥२६॥ कुतइत्यतआह जातस्येति हियस्मा
त्जातस्यस्वारंभककर्मक्षयेमृत्युर्ध्रुवोनिश्चितः मृतस्यतत्तद्देहकृतेनकर्मणाजन्मापिध्रुवमेव तत्तस्मादेवमपरिहार्येर्थेऽवश्यंभाविनिजन्मम
रणलक्षणेऽर्थेत्वंविद्वान्शोचितुंनार्हसि योग्योनभवसीत्यर्थः ॥२७॥ किंच देहादीनांचस्वभावंपर्यालोच्यतदुपाधिकेआत्मनोजन्ममरणेच

शोकोनकार्यइत्याह अव्यक्तादीनीति अव्यक्तंप्रधानंतदेवआदिःपूर्वरूपंयेषांतान्यव्यक्तादीनि भूतानिशरीराणिकारणात्मनाऽवस्थिता
नामेवोत्पत्तेः तथाव्यक्तंअभिव्यक्तंमध्यंजन्ममरणांतरालस्थितिलक्षणंयेषाम् अव्यक्तेनिधनंलयोयेषांतानीमान्येवंभूतान्येवतत्रतेषुकाप
रिदेवना कःशोकनिमित्तोविलापः प्रतिबुद्धस्यस्वप्नदृष्टवस्तुष्विवशोकोनयुज्यतइत्यर्थः॥२८॥ कुतस्तर्हिविद्वांसोऽपिलोकेशोचंति आत्मा
ज्ञानादेवेत्याशयेनात्मनोदुर्विज्ञेयतामाह आश्चर्यवदिति कश्चिदेनमात्मानंशास्त्राचार्योपदेशाभ्यांपश्यन्आश्चर्यवत्पश्यति सर्वगतस्यनि
त्यज्ञानानंदस्वभावस्यात्मनोऽलौकिकत्वादैंद्रजालिकवदघटमानंपश्यन्निवविस्मयेनपश्यति असंभावनाभिभूतत्वात् तथाआश्चर्यवदन्यो

आश्चर्यवत्पश्यतिकश्चिदेनमाश्चर्यवद्वदतितथैवचान्यः ॥ आश्चर्यवच्चैनमन्यःशृणोतिश्रुत्वाप्येनंवेदन
चैवकश्चित् ॥ २९ ॥ देहीनित्यमवध्योऽयंदेहेसर्वस्यभारत ॥ तस्मात्सर्वाणिभूतानिनत्वंशोचितुमर्ह
सि ॥ ३० ॥ स्वधर्ममपिचावेक्ष्यनविकंपितुमर्हसि ॥ धर्म्याद्धियुद्धाच्छ्रेयोऽन्यत्क्षत्रियस्यनविद्यते ॥ ३१ ॥

वदतिचशृणोतिचान्यः कश्चित्पुनःविपरीतभावनाभिभूतः श्रुत्वापिनैववेद चशब्दादुक्त्वापिनसम्यग्वेदेतिद्रष्टव्यम् ॥ २९ ॥ तदेवंदुर्बोधमा
त्मतत्त्वंसंक्षेपेणोपदिशन्अशोच्यत्वमुपसंहरति देहीति ॥ ३० ॥ यच्चोक्तमर्जुनेन वेपथुश्चशरीरेमेरोमहर्षश्चजायतइतितदप्ययुक्तमित्याह
स्वधर्ममिति आत्मनोनाशाभावादेवतेषांहननेऽपिविकंपितुंनार्हसि किंच स्वधर्ममपिअवेक्ष्यविकंपितुंनार्हसीतिसंबंधः यच्चोक्तम् नचश्रे
योऽनुपश्यामिहत्वास्वजनमाहवइत्यादितत्राह धर्म्यादिति धर्मादनपेतान्न्याय्याद्युद्धादन्यत् ॥ ३१ ॥ ॥

किंच महतिश्रेयसिस्वयमेवोपगतेसतिकुतोविकंपसइत्याह यदृच्छयेति यदृच्छयाप्रार्थितमेवोपपन्नंप्राप्तमीदृशंयुद्धंसुखिनःसभाग्या
एवलभंते यतोनिरावरणंस्वर्गद्वारमेवैतत् यद्वा यएवंविधंयुद्धंलभंतेतएवसुखिनइत्यर्थः एतेनस्वजनंहिकथंहत्वासुखिनः स्यामेतियदुक्तंत
न्निरस्तंभवति ३२विपक्षेदोषमाह अथचेत्त्वमिति३३किंच अकीर्तिमिति अव्ययांशाश्वतीं संभावितस्यबहुमानितस्याकीर्तिर्मरणादतिरि

यदृच्छयाचोपपन्नंस्वर्गद्वारमपावृतम् ॥ सुखिनःक्षत्रियाःपार्थलभंतेयुद्धमीदृशम्॥३२॥अथचेत्त्वमिमंधर्म्यंसंग्रामं
नकरिष्यसि ॥ ततःस्वधर्मंकीर्तिंचहित्वापापमवाप्स्यसि॥३३॥अकीर्तिंचापिभूतानिकथयिष्यंतितेऽव्ययाम् ॥ सं
भावितस्यचाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥ भयाद्रणादुपरतंमंस्यंतेत्वांमहारथाः ॥ येषांचत्वंबहुमतोभूत्वाया
स्यसिलाघवम् ॥ ३५ ॥ अवाच्यवादांश्चबहून्वदिष्यंतितवाहिताः ॥ निंदंतस्तवसामर्थ्यंततोदुःखतरंनुकिम् ॥
३६ ॥ हतोवाप्राप्स्यसिस्वर्गंजित्वावाभोक्ष्यसेमहीम् ॥ तस्मादुत्तिष्ठकौंतेययुद्धायकृतनिश्चयः ॥ ३७ ॥ सुखदुः
खेसमेकृत्वालाभालाभौजयाजयौ ॥ ततोयुद्धाययुज्यस्वनैवंपापमवाप्स्यसि ॥ ३८॥ ॥ ॥ ॥

च्यते अधिकतराभवति ॥ ३४॥ किंच भयादिति येषांबहुगुणत्वेनत्वंपूर्वंसंगतोऽभूस्तएवभयेनसंग्रामात्त्वांनिवृत्तंमन्येरन्ततश्चपूर्वंबहुमतोभू
त्वालाघवंयास्यासि॥३५ ॥ किंच अवाच्येति अवाच्यान्वादान्वचनानर्हान्शब्दांस्तवाहितास्त्वच्छत्रवोवदिष्यंति॥३६॥यच्चोक्तंनचैतद्विद्मः
करतन्नोगरीयोयद्वाजयेमयदिवानोजयेयुरितितत्राह हतोवेति पक्षद्वयेऽपितवलाभएवेत्यर्थः ॥३७ ॥ यदाप्युक्तंपापमेवाश्रयेदस्मानितित

त्राह सुखदुःखइति सुखदुःखेसमेकृत्वातथातयोःकारणभूतौयौलाभालाभावपितयोरपिकारणभूतौजयाजयावपिसमौकृत्वाएतेषांसम
त्वेकारणंहर्षविषादराहित्यं युज्यस्वसन्नद्धोभव सुखाद्यभिलाषंहित्वास्वधर्मबुद्ध्यायुध्यमानःपापंनप्राप्स्यसीत्यर्थः॥ ३८॥ उपदिष्टंज्ञान
योग मुपसंहरंस्तत्साधनंकर्मयोगंप्रस्तौति एषातइति सम्यक्ख्यायतेप्रकाश्यतेवस्तुतत्त्वमनयेतिसंख्यासम्यक् ज्ञानंतस्मिन् प्रकाशमान
मात्मतत्त्वंसांख्यंतस्मिन्करणीयाबुद्धिरेषातवाभिहिता एवमभिहितायामपिसांख्यबुद्धौतवचेदात्मतत्त्वमपरोक्षंनसंभवतितर्ह्यंतःकरण
शुद्धिद्वारात्मतत्त्वापरोक्षार्थंकर्मयोगेत्विमांबुद्धिंशृणु ययाबुद्ध्यायुक्तःपरमेश्वरार्पितकर्मयोगेनशुद्धांतःकरणःसन् तत्प्रसादप्राप्तापरोक्षज्ञाने

एषातेऽभिहितासांख्येबुद्धिर्योगेत्विमांशृणु ॥ बुद्ध्यायुक्तोययापार्थकर्मबंधंप्रहास्यसि ॥ ३९ ॥
नेहाभिक्रमनाशोस्तिप्रत्यवायोनविद्यते ॥ स्वल्पमप्यस्यधर्मस्यत्रायतेमहतोभयात् ॥ ४० ॥
व्यवसायात्मिकाबुद्धिरेकेहकुरुनंदन ॥ बहुशाखाह्यनंताश्चबुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥

नकर्मात्मकंबंधंप्रकर्षेणप्रहास्यसि त्यक्ष्यसि॥ ३९॥ ननुकृष्यादिवत्कर्मणांकदाचिद्विघ्नबाहुल्येनफलेऽव्यभिचारान्मंत्राद्यंगवैगुण्येनचप्रत्यवा
यसंभवात्कुतःकर्मयोगेनकर्मबंधप्रहरणंतत्राह नेहेति इहनिष्कामकर्मयोगेअभिक्रमस्यप्रारंभस्यनाशोनिष्फलत्वंनास्ति प्रत्यवायश्चनवि
द्यतेईश्वरोद्देशेनैवविघ्नवैगुण्याद्यसंभवात् किंच अस्यधर्मस्यस्वल्पमपिउपक्रममात्रमपिकृतंमहतोभयात्संसारात्त्रायतेरक्षाति नतुकाम्य
कर्मवत्किंचिदंगवैगुण्यादिनानैष्फल्यमस्येत्यर्थः॥ ४० ॥ कुतइत्यपेक्षायामुभयोर्वैषम्यमाह व्यवसायेति इहईश्वराराधनलक्षणेकर्मयोगे

व्यवसायात्मिकापरमेश्वरभक्त्यैवध्रुवंतरिष्यामीतिनिश्चयात्मिकाएकैवैकनिष्ठैवबुद्धिर्भवति ॥ अव्यवसायिनांतुवहिर्मुखानांकामिनांका
मानामानंत्यादनंताः तत्रापिकर्मगुणफलादिभेदात्बहुशाखश्चबुद्धयोभवंति ॥ ईश्वराराधनार्थंहिनित्यनैमित्तिकंकर्मकिंचिदंगवैगुण्येनापि
ननश्यति यथाशक्नुयात्तथाकुर्यादितिहितद्विधीयते नचवैगुण्यम् ईश्वरोद्देशेनैववैगुण्योपरमात् नतुतथाकाम्यंकर्म अग्निहोत्रंजुहुयात्स्व
र्गकामः दध्नेंद्रियकामोजुहुयात् अतोमहद्वैषम्यमितिभावः॥ ४१ ॥ ननुकामिनोऽपिकष्टान्कामान्विहायव्यवसायात्मिकामेवबुद्धिंकिंनकुर्वं
तितत्राह यामिति पुष्पितांविषलतावदापातरमणीयांप्रकृष्टांपरमार्थफलपरामेववदंतिवाचंस्वर्गादिफलश्रुतिंयेतेषांतयावाचाऽपहृतचे

यामिमांपुष्पितांवाचंप्रवदंत्यविपश्चितः॥ वेदवादरताःपार्थनान्यदस्तीतिवादिनः ॥ ४२ ॥
कामात्मानःस्वर्गपराजन्मकर्मफलप्रदाम् ॥ क्रियाविशेषबहुलांभोगैश्वर्यगतिंप्रति ॥ ४३ ॥
भोगैश्वर्यप्रसक्तानांतयामहृतचेतसाम् ॥ व्यवसायात्मिकाबुद्धिःसमाधौनविधीयते ॥ ४४ ॥

तसांव्यवसायात्मिकाबुद्धिर्नविधीयतइतितृतीयेनान्वयः किमितितथावदंति यतोऽविपश्चितोमूढाः तत्रहेतुः वेदयेवादाः अर्थवादाः अक्ष
य्यंहवैचातुर्मास्ययाजिनःसुकृतंभवति आपामसोमममृताअभूमेत्याद्याः तेष्वेवरताःप्रीताः अतएव अतःपरमन्यदीश्वरतत्त्वंप्राप्यंनास्ती
तिवचनशीलाः॥४२॥अतएवकामात्मानइति कामात्मानः कामाकुलचित्ताः अतः स्वर्गएवपरः पुरुषार्थोयेषांते जन्मचतत्रकर्माणिचतत्फ
लानिचप्रददातीतितथाताम्भोगैश्वर्ययोर्गतिंप्राप्तिंप्रतिसाधनभूतायेक्रियाविशेषाः तेबहुलायस्यांतांप्रवदंतीत्यनुषंगः ४३ ततश्च भोगैश्वर्य

प्रसक्तानामितिभोगैश्वर्ययोः प्रसक्तानांअभिनिविष्टानां तयापुष्पितयावाचापहृतंआकृष्टंचेतोयेषांतेषां समाधिःचित्तैकाग्र्यं परमेश्वरैका
ग्र्याभिमुखत्वंतस्मिन्निश्चयात्मिकाबुद्धिर्नविधीयते कर्मकर्तरिप्रयोगोनोत्पद्यतइत्यर्थः ॥ ४४ ॥ ननुचयदिस्वर्गादिकंपरमंफलंनभवति
तर्हिकिमितिवेदैस्तत्साधनतयाकर्माणिविधीयंतेतत्राह त्रैगुण्यविषयाइति त्रिगुणात्मकाः सकामायेऽधिकारिणःतद्विषयास्तेषांकर्मफ
लसंबंधप्रतिपादकावेदाः त्वंतुनिस्त्रैगुण्योनिष्कामोभव तत्रोपायमाह निर्द्वंद्वःसुखदुःखशीतोष्णादियुगुलानिद्वंद्वानितद्रहितोभव तानि
सहस्वेत्यर्थः कथमित्यत्राह नित्यसत्वस्थःसन्धैर्यमवलंब्येत्यर्थः तथानिर्योगक्षेमः अप्राप्तस्वीकारोयोगःप्राप्तपरिपालनंक्षेमंतद्रहितः आ

त्रैगुण्यविषयावेदानिस्त्रैगुण्योभवार्जुन ॥ निर्द्वंद्वोनित्यसत्त्वस्थोनिर्योगक्षेमआत्मवान् ॥ ४५ ॥
यावानर्थउदपानेसर्वतःसंप्लुतोदके ॥ तावान्सर्वेषुवेदेषुब्राह्मणस्यविजानतः ॥ ४६ ॥

त्मवान्अप्रमत्तः नहिद्वंद्वाकुलस्ययोगक्षेमव्यापृतस्यचप्रमादिनःत्रैगुण्यातिक्रमःसंभवतीति ॥ ४५ ॥ ननुवेदोक्तनानाफलपरित्यागेनानि
ष्कामतयाईश्वराराधनविषयाव्यवसायात्मिकाबुद्धिस्तुकुबुद्धिरेवेत्याशंक्याह यावानिति उदकंपीयतेऽस्मिन्नित्युदपानंवापीकूपतडागा
दितस्मिन्स्वल्पोदकेएकत्रकृत्स्नस्यार्थस्याभावात् तत्रतत्रपरिभ्रमणेनविभागशोयावान्स्नानपानादिरर्थःप्रयोजनंभवति तावान्सर्वोप्य
र्थःसर्वतःसंप्लुतोदकेमहाह्रदेएकत्रैवयथाभवति एवंयावान्सर्वेषुवेदेषुतत्तत्कर्मफलरूपोऽर्थः तावान्सर्वोऽपिविजानतोव्यवसायात्मिकाबु
द्धियुक्तस्यब्राह्मणस्यब्रह्मनिष्ठस्यभवत्येव ब्रह्मानंदेक्षुद्रानंदानामंतर्भूतत्वात् एतस्यैवानंदस्यान्यानिभूतानिमात्रामुपजीवंतीतिश्रुतेः त

स्मादियमेवबुद्धिःसुबुद्धिरित्यर्थः ॥ ४६॥ तर्हिंसर्वंकर्मफलानिपरमेश्वराराधनादेवभविष्यंतीत्यभिसंधायप्रवर्तेतार्किंकर्मणेत्याशंक्यतद्वारय न्नाह कर्मण्येवेति तेतवतत्त्वज्ञानार्थिनःकर्मण्येवाधिकारः तत्फलेषुबंधहेतुष्वधिकारःकामोमास्तु ननुकर्मणिकृतेतत्फलंस्यादेवभोजनेकृ तेतृप्तिवदित्याशंक्याह माकर्मफलहेतुर्भूः कर्मफलंप्रवृत्तिहेतुर्यस्यतथाभूतोमाभूः कामितस्यैवस्वर्गादेर्नियोज्यविशेषणत्वेनफलत्वादका मितंफलंनस्यादितिभावःअतएवफलंबंधकंभविष्यतीतिभयादकर्मणिकर्माऽकरणेपितवसंगोनिष्ठामास्तु ॥ ४७ ॥ किंतर्हियोगस्थइति योगःपरमेश्वरैकपरता तत्रस्थितः कर्माणिकुरु तथासंगंकर्तृत्वाभिनिवेशंत्यक्त्वाकेवलमीश्वराश्रयेणैवकुरु तत्फलस्यज्ञानस्यापिसिद्ध्य

कर्मण्येवाधिकारस्तेमाफलेषुकदाचन ॥ माकर्मफलहेतुर्भूर्मातेसंगोऽस्त्वकर्मणि ॥ ४७ ॥
योगस्थःकुरुकर्माणिसंगंत्यक्त्वाधनंजय ॥ सिद्ध्यसिद्ध्योःसमोभूत्वासमत्वंयोगउच्यते ॥ ४८ ॥
दूरेणह्यवरंकर्मबुद्धियोगाद्धनंजय ॥ बुद्धौशरणमन्विच्छकृपणाःफलहेतवः ॥ ४९ ॥

सिद्ध्योःसमोभूत्वाकेवलमीश्वरार्पणेनैवकुरु यतएवंभूतंसमत्वमेवयोगउच्यतेसाद्भिःचित्तसमाधानरूपत्वात् ॥ ४८ ॥ काम्यंतुकर्मातिनि कृष्टमित्याह दूरेणेति बुद्ध्याव्यवसायात्मिकयाकृतःकर्मयोगोबुद्धियोगः बुद्धिसाधनभूतोवातस्मात्सकाशात्अन्यत्काम्यंकर्मदूरेणावर मृअत्यंतमपकृष्टम् हियस्मादेवंतस्माद्बुद्धौज्ञानेशरणमाश्रयंकर्मयोगमन्विच्छअनुतिष्ठ यद्वा बुद्धौशरणंत्रातारमीश्वरमाश्रयेत्यर्थःफलहे तवस्तुसकामानराः कृपणाःदीनाः योवाएतदक्षरमाविदित्वागार्ग्यस्माल्लोकात्प्रैतिसकृपणइतिश्रुतेः ॥ ४९ ॥ ॥ ॥

बुद्धियोगयुक्तस्तु श्रेष्ठ इत्याह बुद्धीति सुकृतंस्वर्गादिप्रापकं दुष्कृतंनिरयादिप्रापकं तेउभेइहैवजन्मनिपरमेश्वरप्रसादेनजहातित्यजति त स्माद्योगायतदर्थायकर्मयोगाययुज्यस्वघटस्व यतः कर्मसुयत्कौशलंबंधकानामपितेषांईश्वराराधनेनमोक्षपरत्वसंपादनचातुर्यंसएवयोगः ॥५०॥ कर्मणांमोक्षसाधनत्वप्रकारमाह कर्मेति कर्मजंफलंत्यक्त्वाकेवलमीश्वराराधनार्थमेवकर्मकुर्वाणामनीषिणोज्ञानिनोभूत्वाजन्मरू पेणबंधेनविनिर्मुक्ताःसंतोऽनामयंसर्वोपद्रवरहितंविष्णोःपदंमोक्षाख्यंगच्छंति॥५१॥कदातत्पदमहंप्राप्स्यामीत्यपेक्षायामाह यदेतिद्वाभ्यां

बुद्धियुक्तोजहातीहउभेसुकृतदुष्कृते ॥ तस्माद्योगाययुज्यस्वयोगःकर्मसुकौशलम् ॥ ५० ॥ कर्मजंबुद्धियुक्ता हिफलंत्यक्त्वामनीषिणः ॥ जन्मबंधविनिर्मुक्ताःपदंगच्छंत्यनामयम् ॥ ५१ ॥ यदातेमोहकलिलंबुद्धिर्व्यतित रिष्यति ॥ तदागंतासिनिर्वेदंश्रोतव्यस्यश्रुतस्यच ॥ ५२ ॥ श्रुतिविप्रतिपन्नातेयदास्थास्यतिनिश्चला ॥ समाधावचलाबुद्धिस्तदायोगमवाप्स्यसि ॥ ५३ ॥

मोहोदेहादिष्वात्मबुद्धिःतदेवकलिलं कलिलंगहनंविदुरित्यभिधानकोशस्मृतेः ततश्चायमर्थः एवंपरमेश्वराराधनेक्रियमाणेयदातत्प्रसा देनतवबुद्धिःदेहाभिमानलक्षणंमोहमयंगहनंदुर्गंविशेषेणाऽतितरिष्यति तदाश्रोतव्यस्यश्रुतस्यार्थस्यचनिर्वेदंवैराग्यंगंतासिप्राप्स्यसित योरनुपादेयत्वेनजिज्ञासांनकरिष्यसीत्यर्थः ॥५२॥ततश्च श्रुतीति श्रुतिभिःनानालौकिकवैदिकार्थश्रवणैःविप्रतिपन्नाइतःपूर्वंविक्षिप्तासतीत वबुद्धिर्यदासमाधौस्थास्यतीति समाधीयतेचित्तमस्मिन्निति समाधिः परमेश्वरः तस्मिन्निश्चलाविक्षेपव्याप्तिविषयांतरैरनाकृष्टातएवा

चलाअभ्यासपटुत्वेनतत्रैवस्थिरालयव्याप्तिःसती तदायोगंयोगफलंतत्त्वज्ञानमवाप्स्यसि ॥ ५३ ॥ पूर्वश्लोकोक्तस्यात्मतत्त्वज्ञस्यलक्षणं
जिज्ञासुःअर्जुनउवाच स्थितप्रज्ञस्येति स्वाभाविकेसमाधौस्थितस्यातएवास्थितानिश्चलाप्रज्ञाबुद्धिर्यस्यतस्यकाभाषा भाष्यतेऽनयेति
भाषा लक्षणमितियावत् केनलक्षणेनस्थितप्रज्ञउच्यतइत्यर्थः तथास्थितधीः किंकथंभाषणमासनंव्रजनंचकुर्यादित्यर्थः ॥५४॥अत्रचया
निसाधकस्यज्ञानसाधनानितान्येवस्वाभाविकानिसिद्धस्यलक्षणानि अतः सिद्धस्यलक्षणानिकथयन्नेवांतरंगाणिज्ञानसाधनान्याह याव

अर्जुनउवाच ॥ स्थितप्रज्ञस्यकाभाषासमाधिस्तस्यकेशव ॥ स्थितधीःकिंप्रभाषेतकिमासीतव्रजेतकिम् ॥५४॥
श्रीभगवानुवाच ॥ प्रजहातियदाकामान्सर्वान्पार्थमनोगतान् ॥ आत्मन्येवात्मनातुष्टःस्थितप्रज्ञस्तदोच्यते ॥
५५ ॥ दुःखेष्वनुद्विग्नमनाःसुखेषुविगतस्पृहः ॥ वीतरागभयक्रोधःस्थितधीर्मुनिरुच्यते ॥ ५६ ॥ यःसर्वत्रान
भिस्नेहस्तत्तत्प्राप्यशुभाशुभम् ॥ नाभिनंदतिनद्वेष्टितस्यप्रज्ञाप्रतिष्ठिता ॥ ५७ ॥ ॥ ॥ ॥ ॥

दध्यायसमाप्ति तत्रप्रथमप्रश्नोत्तरमाह प्रजहातीतिद्वाभ्यां श्रीभगवानुवाच मनसिस्थितान्कामान्यदाप्रकर्षेणजहाति त्यागेहेतुः आत्म
न्येवस्वस्मिन्नेवपरमानंदरूपेआत्मनास्वयमेवतुष्टइति आत्मारामः सन्यदाक्षुद्रविषयाभिलाषांस्त्यजति तदातेनलक्षदानमुनिः स्थित
प्रज्ञउच्यतइत्यर्थः ॥ ५५ ॥ किंच दुःखेष्विति दुःखेषुप्राप्तेष्वपि अनुद्विग्नमक्षुभितंमनोयस्यसः सुखेषुविगतास्पृहायस्यसःतत्रहेतुः वीता
अपगतारागभयक्रोधायस्मात् तत्ररागः प्रीतिः समुनिःस्थितधीःस्थितप्रज्ञइत्युच्यते ॥ ५६ ॥ कथंभाषेतेत्यस्योत्तरमाह यइति यःस

वंत्रपुत्रादिष्वपिअनभिस्नेहः स्नेहशून्यः अतएववा।धितानुवृत्त्यातत्तच्छुभमनुकूलंप्राप्यनाभिनंदति नप्रशंसति अशुभंप्रतिकूलंप्राप्यनद्वे
ष्टिनर्निंदति किंतुकेवलमुदासीनएवभाषते तस्यप्रज्ञाप्रतिष्ठितेत्यर्थः ॥ ५७॥ किंच यदेति यदाचायंयोगीइंद्रियार्थेभ्यःसकाशात्इंद्रियाणि
संहरते प्रत्याहरति अनायासेनसंहारेदृष्टांतः अंगानिकरचरणादीनिकूर्मोयथास्वभावेनैवआकर्षति तद्वत्॥५८॥ ननुनेंद्रियाणांविषयेष्वप्र
वृत्तिः स्थितप्रज्ञस्यलक्षणंभवितुमर्हति जडानामातुराणामुपवासपराणांचविषयेष्वप्रवृत्तेरविशेषात्तत्राह विषयाइति इंद्रियैर्विषयाणा
माहरणंग्रहणमाहारः निराहारस्येंद्रियैर्विषयग्रहणमकुर्वतोदेहिनोदेहाभिमानिनोऽज्ञस्यविषयाविनिवर्त्तंते तदनुभवोनिवर्त्ततइत्यर्थः

यदासंहरतेचायंकूर्मोऽगानीवसर्वशः ॥ इंद्रियाणींद्रियार्थेभ्यस्तस्यप्रज्ञाप्रतिष्ठिता ॥ ५८॥
विषयाविनिवर्त्तंतेनिराहारस्यदेहिनः ॥ रसवर्जंरसोऽप्यस्यपरंदृष्ट्वानिवर्त्तते ॥ ५९ ॥
यततोह्यपिकौन्तेयपुरुषस्यविपश्चितः ॥ इन्द्रियाणिप्रमाथीनिहरंतिप्रसभंमनः ॥ ६० ॥

किंतु रसोरागोऽभिलाषस्तद्वर्जम् अभिलाषस्तुननिवर्त्ततइत्यर्थः रसोऽपिरागोऽपिपरंपरमात्मानंदृष्ट्वास्यस्थितप्रज्ञस्यस्वतोनिवर्त्तते न
श्यतीत्यर्थः यद्वा निराहारस्योपवासपरस्यविषयाःप्रायशोविनिवर्त्तंते क्षुधासंतप्तस्यशब्दस्पर्शाद्यपेक्षाभावात् परंतुरसवर्जम् रसापेक्षातु
ननिवर्त्ततइत्यर्थः शेषंसमानं ॥५९॥ इंद्रियसंयमंविनातुस्थितप्रज्ञतानसंभवति अतःसाधकावस्थायांतत्रमहान्प्रयत्नःकर्तव्यइत्याह यत
तोह्यपीतिद्वाभ्यां यततःमोक्षेप्रयतमानस्यापिविपश्चितोविवेकिनोऽपिमनः इंद्रियाणिप्रसभंबलाद्धरंति यतःप्रमाथीनिप्रमथनशीलानि

प्रक्षोभकाणि ॥ ६० ॥ यस्मादेवंतस्मात् तानीति युक्तोयोगीतानींद्रियाणिसंयम्यमत्परःसन्आसीत यस्यवशेवशवर्तीनि एतेनकथमासी
तेतिप्रश्नस्यवशीकृतेंद्रियःसन्आसीतेत्युत्तरमुक्तंभवति ॥६१॥ बाह्येंद्रियसंयमाभावेदोषमुक्त्वा मनःसंयमाभावेदोषमाह ध्यायतइतिद्वा
भ्याम् गुणबुद्ध्याविषयान्ध्यायतःपुरुषस्यतेषुसंगआसक्तिर्भवति आसक्त्याचतेष्वधिकःकामोभवति कामाच्चकेनचित्प्रतिहतात्क्रोधोभ
वति ॥ ६२ ॥ किंच क्रोधादिति क्रोधात्संमोहः कार्याकार्यविवेकाभावः ततःशास्त्राचार्योपदिष्टार्थस्मृतेर्विभ्रमोविचलनं ततोबुद्धेश्चेतनाया

तानिसर्वाणिसंयम्ययुक्तआसीतमत्परः ॥ वशेहियस्येंद्रियाणितस्यप्रज्ञाप्रतिष्ठिता ॥ ६१ ॥
ध्यायतोविषयान्पुंसः संगस्तेषूपजायते॥संगात्संजायते कामःकामात्क्रोधोऽभिजायते ॥६२॥
क्रोधाद्भवतिसंमोहःसंमोहात्स्मृतिविभ्रमः ॥ स्मृतिभ्रंशाद्बुद्धिनाशोबुद्धिनाशात्प्रणश्यति ६३॥
रागद्वेषवियुक्तैस्तुविषयानिंद्रियैश्चरन् ॥ आत्मवश्यैर्विधेयात्माप्रसादमधिगच्छति ॥ ६४ ॥

विनाशः वृक्षादिष्विवाभिभवःततःप्रणश्यतिमृततुल्योभवति ॥ ६३ ॥ नन्विंद्रियाणांविषयप्रवणस्वभावानांनिरोद्धुमशक्यत्वादयंदोषोदु
ष्परिहरइतिस्थितप्रज्ञत्वंकथंस्यादित्याशंक्याह रागेतिद्वाभ्याम् रागद्वेषरहितैर्विगतदर्पैरिंद्रियैर्विषयांश्चरन्भुंजानोऽपिप्रसादंशांतिंप्राप्नो
ति रागद्वेषराहित्यमेवाह आत्मनोमनसोवश्यैर्विधेयोवशवर्तीआत्मामनोयस्योति अनेनैवकथंव्रजेतभुंजीतेत्यस्यचतुर्थप्रश्नस्यस्वाधीनै
रिंद्रियैर्विषयानधिगच्छतिइत्युत्तरमुक्तंभवति ॥ ६४ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

प्रसादेसतिकिंस्यादित्यत्राह प्रसादइति प्रसादेसतिसर्वदुःखनाशस्ततश्चप्रसन्नचेतसोबुद्धिःप्रतिष्ठिताभवतीत्यर्थः ॥६५॥ इंद्रियनिग्रहस्य
स्थितप्रज्ञतासाधनत्वंव्यतिरेकमुखेनोपपादयति नास्तीति अयुक्तस्यावशीकृतेंद्रियस्यनास्तिबुद्धिः शास्त्राचार्योपदेशाभ्यामात्मविष
याबुद्धिःप्रज्ञैवनोत्पद्यते कुतस्तस्यप्रतिष्ठावार्त्ता कुतइत्यतआह नचायुक्तस्यभावनाध्यानं भावनयाहिबुद्धेरात्मनिप्रतिष्ठाभवति साचायु
क्तस्ययतोनास्ति नचाभावयतआत्मध्यानमकुर्वतःशांतिःआत्मनिचित्तोपरतिः अशांतस्यकुतःसुखंमोक्षानंदइत्यर्थः॥६६॥नास्तिबुद्धि

प्रसादेसर्वदुःखानांहानिरस्योपजायते ॥ प्रसन्नचेतसोह्याशुबुद्धिःपर्यवतिष्ठते ॥ ६५ ॥ नास्तिबुद्धिरयुक्तस्यनचायुक्त
स्यभावना॥नचाभावयतःशांतिरशांतस्यकुतःसुखं॥६६॥इंद्रियाणांहिचरतांयन्मनोऽनुविधीयते॥ तदस्यहरतिप्रज्ञां
वायुर्नावमिवांभसि॥६७॥तस्माद्यस्यमहाबाहोनिगृहीतानिसर्वशः॥इंद्रियाणींद्रियार्थेभ्यस्तस्यप्रज्ञाप्रतिष्ठिता ॥६८

रयुक्तस्येत्यत्रहेतुमाह इंद्रियाणामिति इंद्रियाणामवशीकृतानांस्वैरंविषयेषुचरतांमध्येयदेवैकमिंद्रियंमनोऽनुविधीयते अवशीकृतंसदिंद्रि
येणसहगच्छति तदेवैकमिंद्रियमस्यमनसः पुरुषस्यवाप्रज्ञांहरति विषयविक्षिप्तांकरोति किमुतवक्तव्यंबहूनिप्रज्ञांहरंतीति यथाप्रमत्तस्य
कर्णधारस्यनावंवायुःसमुद्रेसर्वतःपरिभ्रामयति तद्वत् ॥ ६७॥ इंद्रियसंयमस्यस्थितप्रज्ञत्वसाधनत्वलक्षणत्वंप्रोक्तमुपसंहरतियस्मादिति
प्रतिष्ठिताभवतीत्यर्थः लक्षणत्वोपसंहारेतस्यप्रज्ञाप्रतिष्ठिताज्ञातव्येत्यर्थः महाबाहोइतिसंबोधनंवैरिनिग्रहसमर्थस्यतवात्रापिसामर्थ्यं
भवेदितिसूचयति ॥ ६८ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ननुचकश्चिदपिप्रसुप्तइवदर्शनादिव्यापारशून्यःसर्वात्मनानिगृहीतेंद्रियोलोकेनदृश्यतेअतोऽसंभावितमिदंलक्षणमित्याशंक्याह यानि
शेति सर्वेषांभूतानांयानिशानिशेवनिशाआत्मनिष्ठा आत्माज्ञानध्वांतावृतमतीनांतस्यांदर्शनादिव्यवहाराभावात् तस्यामात्मनिष्ठायां
संयमीनिगृहीतेंद्रियोजागर्ति प्रबुध्यते यस्यांतुविषयबुद्ध्याभूतानिजाग्रति प्रबुध्यंते साआत्मतत्त्वंपश्यतोमुनेर्निशा तस्यांदर्शना
दिव्यापारस्तस्यनास्तीत्यर्थः एतदुक्तंभवति यथादिवांधानामुलूकादीनांरात्रावेवदर्शनंनतुदिवसे एवंब्रह्मज्ञस्योन्मीलिताक्षस्यापिब्रह्म
ण्येवदृष्टिर्नतुविषयेषु अतोनासंभावितमिदंलक्षणमिति॥६९॥ननुविषयेषुदृष्टचभावेकथमसौतान्भुंक्तेइत्यपेक्षायामाह आपूर्यमाणमि

यानिशासर्वभूतानांतस्यांजागर्त्तिसंयमी ॥ यस्यांजाग्रतिभूतानिसानिशापश्यतोमुनेः ॥ ६९ ॥ आपूर्यमा
णमचलप्रतिष्ठंसमुद्रमापःप्रविशंति यद्वत् ॥ तद्वत्कामायंप्रविशंतिसर्वेसशांतिमाप्नोतिनकामकामी७०॥
विहायकामान्यःसर्वान्पुमांश्चरतिनिःस्पृहः ॥ निर्ममोनिरहंकारःसशांतिमधिगच्छति ॥ ७१ ॥ ॥

ति नानानदीभिरापूर्यमाणमपिअचलप्रतिष्ठंअनतिक्रांतमर्यादमेवसमुद्रंपुनरप्यन्याआपोयथाप्रविशंति तथाकामाविषयायंमुनिमंतर्दृ
ष्टिंभोगैरविक्रियमाणमेवप्रारब्धकर्मभिराक्षिप्ताःसंतःप्रविशंति सशांतिंकैवल्यंप्राप्नोति नतुकामकामीभोगकामनाशीलः॥७०॥ यस्मादेवं
तस्माद्विहायेति प्राप्तान्कामान्विहायत्यक्त्वाउपेक्ष्य अप्राप्तेषुचानिःस्पृहः यतोनिरहंकारः अतएवतद्भोगसाधनेषुनिर्ममःसन्नंतर्दृष्टिर्भू
त्वायश्चरतिप्रारब्धवशेनभोगान्भुंक्ते यत्रक्वापिगच्छतिवासशांतिमाप्नोति ॥ ७१ ॥ ॥ ॥ ॥ ॥ ॥ ॥

उक्तांज्ञाननिष्ठांस्तुवन्नुपसंहरति एषेति ब्राह्मीस्थितिःब्रह्मज्ञाननिष्ठाएषाएवंविधा एनांपरमेश्वराराधनेनशुद्धांतःकरणःपुमान्प्राप्यनविमु
ह्यतिपुनःसंसारमोहंनप्राप्नोति यतःअंतकालेमृत्युसमयेऽपिअस्यांक्षणमात्रमपिस्थित्वाब्रह्मणिनिर्वाणंलयमृच्छति प्राप्नोति किंपुनर्वक्त
व्यंबाल्यमारभ्यास्थित्वाप्राप्नोतीति॥७२॥ शोकपंकनिमग्नंयःसांख्ययोगोपदेशतः॥उज्जहारार्जुनंभक्तंसकृष्णःशरणंमम॥१॥इतिश्रीमद्भ०
सुबोधिन्यांटीकायांद्वितीयोऽध्यायः॥ २ ॥ ॥एवंतावदशोच्यानन्वशोचस्त्वमित्यादिनाप्रथमंमोक्षसाधनत्वेनदेहात्माविवेकबुद्धिरुक्ता त

एषाब्राह्मीस्थितिःपार्थनैनांप्राप्यविमुह्यति ॥ स्थित्वास्यामंतकालेऽपिब्रह्मनिर्वाणमृच्छति
॥ ७२ ॥ ॥ इतिश्रीमद्भगवद्गीता०सांख्ययोगोनामद्वितीयोऽध्यायः ॥२ ॥अर्जुनउवाच ॥
ज्यायसीचेत्कर्मणस्तेमताबुद्धिर्जनार्दन ॥ तत्किंकर्मणिघोरेमांनियोजयसिकेशव ॥ १ ॥ ॥

दनंतरमेषातेऽभिहितासांख्येबुद्धिर्योगेत्विमांशृण्वित्यादिनाकर्मचोक्तं नचतयोर्गुणप्रधानभावःस्पष्टंदर्शितः तत्रबुद्धियुक्तस्यस्थितप्रज्ञ
स्यनिष्कामत्वनियतेंद्रियत्वनिरहंकारत्वाद्यभिधानादेषाब्राह्मीस्थितिःपार्थेतिसप्रशंसमुपसंहाराच्चबुद्धिकर्मणोर्मध्येबुद्धेःश्रैष्ठ्यमभगवतोऽ
भिमतंमन्वानोऽर्जुनउवाच ज्यायसीचेदिति कर्मणःसकाशान्मोक्षांतरंगत्वेनबुद्धिर्ज्यायसीअधिकतराश्रेष्ठाचेत्तवसंमता तर्हिकिमर्थंत
द्युद्धयस्वेतितस्मादुत्तिष्ठेतिचवारंवारंवदन्घोरेहिंसात्मकेकर्मणिमांनियोजयसिप्रवर्त्तयसि ॥ १ ॥ ॥ ॥ ॥ ॥

ननुधर्म्याद्धियुद्धाच्छ्रेयोऽन्यत्क्षत्रियस्यनविद्यतइत्यादिनाकर्मणोऽपिश्रेष्ठत्वमुक्तमेवेत्याशंक्याह व्यामिश्रेणेति क्वचित्कर्मप्रशंसाक्वचि
ज्ज्ञानप्रशंसेत्येवंव्यामिश्रंसंदेहोत्पादकमिवयद्वाक्यंतेनमेबुद्धिंमतिमुभयत्रदोलायितांकुर्वन्मोहयसीव परमकारुणिकस्यतवमोहकत्वं
नास्त्येवतथापिभ्रांत्याममैवंभातिइतीवशब्देनोक्तं अतउभयोर्मध्येयद्भद्रंतदेकंनिश्चित्यवदेति यद्वा इदमेवश्रेयःसाधनमितिनिश्चित्य
येनानुष्ठितेनश्रेयोमोक्षमहमाप्नुयांप्राप्स्यामि तदेवैकंनिश्चित्यवदेत्यर्थः॥२॥अत्रोत्तरंश्रीभगवानुवाच लोकेस्मिन्निति अयमर्थः यदिमयाप
रस्परनिरपेक्षंमोक्षसाधनत्वेनकर्मज्ञानयोगरूपंनिष्ठाद्वयमुक्तंस्यात्तर्हिद्वयोर्मध्येयद्भद्रंतदेकंवदेतित्वदीयःप्रश्नःसंगच्छेत नतुमयातथोक्तंकिं

व्यामिश्रेणेववाक्येनबुद्धिंमोहयसीवमे ॥ तदेकंवदनिश्चित्ययेनश्रेयोऽहमाप्नुयाम् ॥ २ ॥ श्रीभगवानुवाच ॥
लोकेऽस्मिन्द्विविधानिष्ठापुराप्रोक्तामयानघ ॥ ज्ञानयोगेनसांख्यानांकर्मयोगेनयोगिनाम् ॥ ३ ॥ ॥

तुद्वाभ्यामेकैवब्रह्मनिष्ठोक्ता गुणप्रधानभूतयोस्तयोःस्वातंत्र्यानुपपत्तेः एकस्याएवतुप्रकारभेदमात्रमाधिकारभेदेनोक्तमिति अस्मिन्शुद्धा
शुद्धान्तःकरणतयाद्विविधेलोकेअधिकारिजनेद्वेविधेप्रकारौयस्याःसाद्विविधानिष्ठामोक्षपरतापुरापूर्वाध्यायेमयासर्वज्ञेनप्रोक्तास्पष्टमेवोक्ता
प्रकारद्वयमेवनिर्दिशतिसांख्यानांशुद्धांतःकरणानांज्ञानभूमिकामारूढानांज्ञानपरिपाकार्थं ज्ञानयोगेनध्यानादिना निष्ठाब्रह्मपरतोक्ता
तानिसर्वाणिसंयम्ययुक्तआसीतमत्परइत्यादिनासांख्यभूमिकामारुरुक्षूणांतुअंतःकरणशुद्धिद्वारातदारोहार्थंतदुपायभूतकर्मयोगाधिका
रिणांयोगिनांकर्मयोगेननिष्ठोक्ता धर्म्याद्धियुद्धाच्छ्रेयोऽन्यत्क्षत्रियस्यनविद्यतइत्यादिना अतएवचित्तशुद्ध्यशुद्धिरूपावस्थाभेदेनैवद्विवि

धापिनिष्ठोक्ता एषातेऽभिहितासांख्येबुद्धिर्योगेत्विमांशृणिवति ॥ ३ ॥ अतःसम्यक्चित्तशुद्ध्यर्थंज्ञानोत्पत्तिपर्यंतंवर्णाश्रमोचितानिकर्माणि
कर्त्तव्यानि अन्यथाचित्तशुद्ध्यभावेनज्ञानानुत्पत्तेरित्याह नकर्मणामिति कर्मणामनारंभादननुष्ठानान्नैष्कर्म्यंज्ञानंनाश्नुते नाप्नोति ननुच
एवमेवप्रव्राजिनोलोकमीप्संतः प्रव्रजंतीतिसंन्यासस्यमोक्षांगत्वश्रुतेः संन्यासादेवमोक्षोभविष्यतीतिकिंकर्मभिरित्याशंक्योक्तम् नचे
तिनचचित्तशुद्धिंविनाकृतात्संन्यसनादेवज्ञानशून्यात्सिद्धिंमोक्षंसमधिगच्छतिप्राप्नोति ॥४॥ कर्मणांचसंन्यासस्तेष्वनासक्तिमात्रंनतुस्वरू

नकर्मणामनारंभान्नैष्कर्म्यंपुरुषोऽश्नुते ॥ नचसंन्यसनादेवसिद्धिंसमधिगच्छति ॥ ४ ॥
नहिकश्चित्क्षणमपिजातुतिष्ठत्यकर्मकृत् ॥ कार्यतेह्यवशःकर्मसर्वःप्रकृतिजैर्गुणैः ॥ ५ ॥
कर्मेंद्रियाणिसंयम्ययआस्तेमनसास्मरन् ॥ इंद्रियार्थान्विमूढात्मामिथ्याचारःसउच्यते॥ ६ ॥
यस्त्विंद्रियाणिमनसानियम्यारभतेऽर्जुन ॥ कर्मेंद्रियैःकर्मयोगमसक्तःसविशिष्यते ॥ ७ ॥

पेणाशक्यत्वादित्याह नहीति जातुकस्यांचिदवस्थायांक्षणमात्रमपिकश्चिदपिज्ञानीवाज्ञोवाकर्मकृत्कर्माण्यकुर्वाणोनतिष्ठति तत्रहेतुः प्र
कृतिजैःस्वभावप्रभवैःरागद्वेषादिगुणैःसर्वोऽपिजनःकर्मकार्यतेकर्माणिप्रवर्तते अवशः अस्वतंत्रःसन् ॥५॥ अतोऽज्ञंकर्मत्यागिनंनिंदति कर्में
द्रियाणीति वाक्पाण्यादीनिकर्मेंद्रियाण्यपिसंयम्यनिगृह्ययोमनसाभगवद्ध्यानच्छलेनेंद्रियार्थान्विषयान्स्मरन्नास्ते अविशुद्धतयामनस
आत्मनिस्थैर्याभावात् समिथ्याचारःकपटाचारोदांभिकउच्यतइत्यर्थः॥६॥ एतद्विपरीतःकर्मकर्ताश्रेष्ठइत्याहयस्त्वितियस्तुज्ञानेंद्रियाणि

मनसानियम्यईश्वरप्रवणानिकृत्वाकर्मेंद्रियैःकर्मरूपंयोगंउपायमारभते अनुतिष्ठति असक्तःफलाभिलाषरहितःसन्नमाविशिष्यते विशि
ष्टोभवतिचित्तशुद्ध्याज्ञानवान्भवतीत्यर्थः॥७॥यस्मादेवंतस्मात् नियतमिति नियतंनित्यंसंध्योपासनादिकर्मकुरु हियस्मादकर्मणःकर्मा
करणात्सकाशात्कर्मज्यायः अधिकतरम् अन्यथाकर्मणःसर्वकर्मशून्यस्यतवशरीरनिर्वाहोऽपिनभवेत्॥९॥सांख्यास्तुसर्वमपिकर्मबंधकत्वा
न्नकार्यमित्याहुस्तन्निराकुर्वन्नाह यज्ञार्थादिति यज्ञोऽत्रविष्णुःयज्ञोवैविष्णुरितिश्रुतेः तदाराधनार्थात्कर्मणोऽन्यत्रतदेकंविनायंलोकःकर्मबं
धनःकर्मभिर्बद्ध्यते नत्वीश्वराराधनार्थेनकर्मणा अतस्तदर्थंविष्णुप्रीत्यर्थंमुक्तसंगोनिष्कामःसन्कर्मसम्यगाचर ॥ ९ ॥ प्रजापतिवचनाद

नियतंकुरुकर्मत्वंकर्मज्यायोह्यकर्मणः ॥ शरीरयात्रापिचतेनप्रसिद्ध्येदकर्मणः ॥ ८ ॥ यज्ञा
र्थात्कर्मणोऽन्यत्रलोकोऽयंकर्मबंधनः ॥ तदर्थंकर्मकौंतेयमुक्तसंगःसमाचर ॥ ९ ॥ सहय
ज्ञाःप्रजाःसृष्ट्वापुरोवाचप्रजापतिः ॥ अनेनप्रसविष्यध्वमेषवोऽस्त्विष्टकामधुक् ॥ १० ॥

पिकर्मकर्तव्यंश्रेष्ठइत्याह सहयज्ञाइतिचतुर्भिः यज्ञेनसहवर्ततइतिसहयज्ञाः यज्ञाधिकृताब्राह्मणाद्याः प्रजाःपुरासर्गादौसृष्ट्वाब्रह्माइदमुवा
चअनेनयज्ञेनप्रसविष्यध्वंप्रसूयध्वम् प्रसवोवृद्धिः उत्तरोत्तरामभिवृद्धिंलभध्वमित्यर्थः तत्रहेतुः एषयज्ञःवोयुष्माकंइष्टकामधुक्इष्टान्का
मान्दोग्धीतितथाअभीष्टभोगप्रदोऽस्त्वित्यर्थः अत्रचयज्ञग्रहणमावश्यककर्मोपलक्षणार्थम् काम्यकर्मप्रशंसातुप्रकरणेऽसंगतापिसामान्य
तोऽकर्मणःकर्मश्रेष्ठमित्येतदर्थेत्यदोषः ॥ १० ॥ ॥ ॥ ॥ ॥ ॥

कथमिष्टकामदोग्धायज्ञोभवेदित्यत्राह देवानिति अनेनयज्ञेनयूयंदेवान्भावयत हविर्भागैःसंवर्धयत तेचदेवावोयुष्मान्संवर्धयंतु वृष्ट्या
दिनान्नोत्पत्तिद्वारेण एवमन्योन्यंसंवर्धयंतोदेवाश्चयूयंचपरस्परंश्रेयोऽभीष्टमर्थंप्राप्स्यथ ॥११॥ एतदेवस्पष्टीकुर्वन्कर्माकरणेदोषमाह इष्टा
निति यज्ञैर्भाविताःसंतोदेवा वृष्ट्यादिद्वारेण वःयुष्मभ्यं भोगान् दास्यंतिहि अतोदेवैर्दत्तानन्नादीनेभ्योदेवेभ्यःपंचयज्ञादिभिरदत्वायो
भुंक्तेसतुचोरएवज्ञेयः ॥ १२॥ अतश्चयजंतएवश्रेष्ठानेतराइत्याह यज्ञशिष्टाशिनइति वैश्वदेवादियज्ञावशिष्टंयेऽश्नंतितेपंचसूनाकृतैःसर्वैःकि

देवान्भावयतानेनतेदेवाभावयंतुवः ॥ परस्परंभावयंतःश्रेयपरमवाप्स्यथ ॥ ११ ॥ इष्टान्भोगान्हिवोदेवादास्यंतेय
ज्ञभाविताः ॥ तैर्दत्तानप्रदायैभ्योयोभुंक्तेस्तेनएवसः ॥ १२ ॥ यज्ञशिष्टाशिनःसंतोमुच्यंतेसर्वकिल्बिषैः॥भुंजतेतेत्व
घंपापायेपचंत्यात्मकारणात् ॥१३॥ अन्नाद्भवंतिभूतानिपर्जन्यादन्नसंभवः॥ यज्ञाद्भवतिपर्जन्योयज्ञःकर्मसमुद्भवः १४

ल्बिषैर्मुच्यंते पंचसूनाश्चस्मृतावुक्ताः कंडनीपेषणीचुल्लीउदकुंभीचमार्जनी पंचसूनागृहस्थस्यताभिःस्वर्गंनविंदतीति येत्वात्मनोभोजनार्थ
मेवान्नंपचंतिनतुवैश्वदेवाद्यर्थंतेपापाःदुराचाराःअघमेवभुंजते॥१३॥जगच्चक्रप्रवृत्तिहेतुत्वादपिकर्मकर्तव्यमित्याह अन्नादितित्रिभिःअन्ना
च्छुक्रशोणितरूपेणपरिणताद्भूतान्युत्पद्यंते अन्नस्यचसंभवःपर्जन्याद्वृष्टेः सचपर्जन्योयज्ञाद्भवति सचयज्ञःकर्मसमुद्भवःकर्मणायजमा
नादिव्यापारेणसम्यङ्निष्पद्यतइत्यर्थः अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठति आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइतिस्मृतेः॥१४॥

तथाकर्मब्रह्मोद्भवमिति तच्चयजमानादिव्यापाररूपंकर्मब्रह्मोद्भवंविद्धि ब्रह्मवेदःतस्मात्प्रवृत्तंजानीहि तच्चब्रह्मवेदाख्यंअक्षरात्परब्रह्मणः समुद्भूतंविद्धि अस्यमहतोभूतस्यनिःश्वसितमेतद्यदृग्वेदोयजुर्वेदःसामवेदइतिश्रुतेः यतएवमक्षरादेवयज्ञप्रवृत्तेरत्यंतंतस्याभिप्रेतोयज्ञः तस्मात्सर्वगतमप्यक्षरंब्रह्मनित्यंसर्वदायज्ञेप्रतिष्ठितं यज्ञेनोपायभूतेनप्राप्यतइतियज्ञेप्रतिष्ठितमुच्यते उद्यमस्थासदालक्ष्मीरितिवत् यद्वायस्माज्जगच्चक्रमूलंकर्म तस्मात्सर्वगतंमंत्रार्थवादैः सर्वेषुसिद्धार्थप्रतिपादकेषुभूतार्थाख्यानादिषुगतंस्थितमपिवेदाख्यंब्रह्मसर्वदायज्ञेचतात्पर्यरूपेणप्रतिष्ठितं अतोयज्ञादिकर्मकर्त्तव्यमित्यर्थः ॥ १५॥यस्मादेवंपरमेश्वरेणैवभूतानांपुरुषार्थसिद्ध्येकर्मादिचक्रंप्रवर्तिततंतस्मात्त

कर्मब्रह्मोद्भवंविद्धिब्रह्माक्षरसमुद्भवम् ॥ तस्मात्सर्वगतंब्रह्मनित्यंयज्ञेप्रतिष्ठितम् ॥ १५ ॥

एवंप्रवर्तितंचक्रंनानुवर्त्तयतीहयः ॥ अघायुरिंद्रियारामोमोघंपार्थसजीवति ॥ १६ ॥

यस्त्वात्मरतिरेवस्यादात्मतृप्तश्चमानवः ॥ आत्मन्येवचसंतुष्टस्तस्यकार्यंनविद्यते ॥ १७ ॥

दकुर्वतोवृथैवजीवितमित्याह एवमिति परमेश्वरवाक्यभूताद्वेदाख्याद्ब्रह्मणःपुरुषाणांकर्मणिप्रवृत्तिः ततःकर्मनिष्पत्तिःततःपर्जन्यस्ततोऽन्नं ततोभूतानि भूतानांचपुनस्तथैवकर्मणिप्रवृत्तिःइत्येवंप्रवर्तितंचक्रंयोनानुवर्त्तयतिनानुतिष्ठतिसअघायुः अघंपापरूपंआयुर्यस्यसः यतइंद्रियैर्विषयेष्वेवरमते नतुईश्वराराधनार्थंकर्मणि अतोमोघंव्यर्थंसजीवति ॥ १६ ॥ तदेवंनकर्मणामनारंभान्नैष्कर्म्यमित्यादिनाज्ञस्यांतःकरणशुद्ध्यर्थंकर्मयोगमुक्त्वाज्ञानिनःकर्मानुपयोगमाह यस्त्वितिद्वाभ्याम् आत्मन्येवरतिःप्रीतिर्यस्य ततश्चात्मन्येवतृप्तः स्वानंदा

नुभवेननिर्वृतः अतएवात्मन्येवसंतुष्टोभोगापेक्षारहितोयस्तस्यकर्तव्यंनास्ति॥१७॥तत्रहेतुमाह नैवतस्येति कृतेनकर्मणातस्यार्थःपुण्यंनै
नास्ति नचाकृतेनकश्चनकोऽपिप्रत्यवायोऽस्ति निरहंकारत्वेनविधिनिषेधातीतत्वात् तथापि तस्मात्तदेषांनप्रियंयदेतन्मनुष्याविदुरितिश्रु
तेःमोक्षेदेवकृतविघ्नसंभवात् तत्परिहारार्थंकर्मभिर्देवाः सेव्याइत्याशंक्योक्तं सर्वभूतेषुब्रह्मादिस्थावरांतेषुकश्चिदपिअर्थव्यपाश्रयः आश्र
यएवव्यपाश्रयः अर्थेमोक्षआश्रयणीयोऽस्यनास्तीत्यर्थः विघ्नाभावस्यश्रुत्यैवोक्तत्वात् तथाचश्रुतिः तस्यहनदेवाश्चनाभूत्याईशतेआत्मा
ह्येषांसभवतिइति हनेत्यव्ययमप्यर्थे देवाअपितस्यात्मतत्त्वज्ञस्यअभूत्यैब्रह्मताप्रतिबंधनायनेशतेनशक्नुवंतीतिश्रुतेरर्थः देवकृतास्तुवि

नैवतस्यकृतेनार्थोनाकृतेनेहकश्चन ॥ नचास्यसर्वभूतेषुकश्चिदर्थव्यपाश्रयः ॥ १८ ॥
तस्मादसक्तःसततंकार्यंकर्मसमाचर ॥ असक्तोह्याचरन्कर्मपरमाप्नोतिपूरुषः ॥ १९ ॥
कर्मणैवहिसंसिद्धिमास्थिताजनकादयः ॥ लोकसंग्रहमेवापिसंपश्यन्कर्तुमर्हसि ॥२० ॥

घ्नाः सम्यग्ज्ञानोत्पत्तेः प्रागेव यदेतद्ब्रह्ममनुष्याविदुस्तदेषांदेवानांनप्रियमितिश्रुत्याब्रह्मज्ञानस्यैवाप्रियत्वोक्त्यातत्रैवविघ्नकर्तृत्वस्यसू
चितत्वात् ॥१८॥ यस्मादेवंभूतस्यज्ञानिनएवकर्मानुपयोगोनान्यस्यतस्मात्त्वंकर्मकुर्वित्याह तस्मादितिअसक्तःफलसंगरहितःसन्कार्यमव
श्यकर्तव्यतयाविहितंनित्यनैमित्तिकंकर्मसम्यगाचर हियस्मात्असक्तःकर्माचरन्पुरुषःपरंमोक्षंचित्तशुद्धिज्ञानद्वाराप्राप्नोति॥१९॥अत्रसदा
चारंप्रमाणयति कर्मणैवेति कर्मणैवशुद्धसत्वाः संतःसंसिद्धिंसम्यग्ज्ञानंप्राप्ताइत्यर्थः यद्यपित्वंसम्यग्ज्ञानिनमेवात्मानंमन्यसेतथापिक

र्माचरणंभद्रमेवेत्याह लोकसंग्रहइति लोकस्यसंग्रहःस्वधर्मेप्रवर्तनं मयाकर्मणिकृतेजनःसर्वोपिकरिष्यतिअन्यथाज्ञानिदृष्टांतेनअज्ञःक
र्मत्यजेदित्येवंलोकरक्षणमपितावत्प्रयोजनंपश्यन्कर्मकर्तुमेवार्हसि नतुत्यक्तुमित्यर्थः॥२०॥कर्मकरणेलोकसंग्रहोयथास्यात्तथाह यदिति
इतरःप्राकृतोजनःतत्तदेवाचरति सश्रेष्ठोजनःकर्मशास्त्रंनिवृत्तिशास्त्रंवायत्प्रमाणंमन्यते तदेवलोकोऽप्यनुसरति॥२१॥अत्रचाहमेवदृष्टां
तइत्याहत्रिभिः नमेपार्थेति हेपार्थमेकर्तव्यंनास्ति यतस्त्रिष्वपिलोकेष्वनवाप्तंअप्राप्तंसदवाप्तव्यंप्राप्यंनास्ति तथापिकर्मण्यहंवर्ते कर्मकरो

यद्यदाचरतिश्रेष्ठस्तत्तदेवेतरोजनः ॥ सयत्प्रमाणंकुरुतेलोकस्तदनुवर्त्तते ॥ २१ ॥ नमेपार्थास्तिकर्त्तव्यंत्रिषुलो
केषुकिंचन ॥ नानवाप्तमवाप्तव्यंवर्त्तएवचकर्मणि ॥ २२ ॥ यदिह्यहंनवर्तेयंजातुकर्मण्यतंद्रितः ॥ ममवर्त्मानुवर्त्त
तेमनुष्याःपार्थसर्वशः ॥ २३ ॥ उत्सीदेयुरिमेलोकानकुर्यांकर्मचेदहम् ॥ संकरस्यचकर्तास्यामुपहन्यामिमाःप्र
जाः ॥ २४ ॥ सक्ताःकर्मण्यविद्वांसोयथाकुर्वंतिभारत ॥ कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥

म्येवेत्यर्थः॥२२॥अकरणेलोकस्यनाशंदर्शयति यदीति जातुकदाचित् अतंद्रितोऽनलसःसन्यदिकर्मणिनवर्तेयं कर्मनानुतिष्ठेयं तर्हिमम
ववर्त्ममार्गंमनुष्याःअनुवर्तंतेअनुवर्तेरन्नित्यर्थः॥ २३ ॥ ततःकिमतआह उत्सीदेयुरिति उत्सीदेयुःकर्मलोपेननश्येयुः ततश्चयोवर्णसंकरोभ
वेत्तस्याप्यहमेवकर्तास्यां भवेयं एवमहमेवप्रजाउपहन्यां मलिनीकुर्याम्॥२४॥तस्मादात्मविदापिलोकसंग्रहार्थंतत्कृपयाकर्मकार्यमेवेत्यु
पसंहरति सक्ताइति कर्मणिसक्ता अभिनिविष्टाःसंतोऽज्ञाःयथाकर्मकुर्वंति असक्तःसन्विद्वानपितथैवकुर्यात् लोकसंग्रहंकर्तुमिच्छुः॥२५॥

ननुरूपयातत्त्वज्ञानमेवोपदेष्टुंयुक्तंनेत्याह नेति अज्ञानांअतएवकर्मसंगिनांकर्मासक्तानामकर्त्तात्मोपदेशेनबुद्धेर्भेदंअन्यथात्वंनजनयेत् क
र्मणःसकाशाद्बुद्धिचालनंनकुर्यात् अपितुजोषयेत् सेवयेत् जुषप्रीतिसेवनयोः अज्ञान्कर्माणिकारयेत् कथं युक्तःअवहितोभूत्वास्वयंचस
माचरन् बुद्धिचालनेकृतेसतिकर्मसुश्रद्धानिवृत्तेर्ज्ञानस्यचानुत्पत्तेस्तेषामुभयभ्रंशःस्यादितिभावः ॥२६॥ननुविदुषापिचेत्कर्मकर्तव्यं तर्हि
विद्वदविदुषोःकोविशेषइत्याशंक्योभयोर्विशेषंदर्शयति प्रकृतेरितिद्वाभ्याम् प्रकृतेर्गुणैःप्रकृतिकार्यैरिंद्रियैःसर्वप्रकारेणक्रियमाणानिया

न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम्॥जोषयेत्सर्वकर्माणि विद्वान्युक्तःसमाचरन्॥२६॥प्रकृतेः क्रियमाणानि गुणैः
कर्माणि सर्वशः॥अहंकारविमूढात्मा कर्त्ताहमिति मन्यते॥२७॥तत्ववित्तु महाबाहो गुणकर्मविभागयोः॥ गुणा गुणेषु
वर्त्तंत इति मत्वा न सज्जते॥२८॥प्रकृतेर्गुणसंमूढाःसज्जंते गुणकर्मसु॥तानकृत्स्नविदो मंदान्कृत्स्नविन्न विचालयेत्॥२९

निकर्माणितान्यहमेवकर्त्ता करोमीतिमन्यते तत्रहेतुः अहंकारेणइंद्रियादिष्वात्माध्यासेनविमूढआत्माबुद्धिर्यस्यसः॥२७॥विद्वांस्तुतथान
मन्यतइत्याह तत्त्वविदिति नाहंगुणात्मकइतिगुणेभ्यआत्मनोविभागःनमेकर्माणीतिकर्मभ्योऽप्यात्मनोविभागस्त योर्गुणकर्मविभाग
योर्यस्तत्त्वंवेत्तिसतुनसज्जतेकर्तृत्वाभिनिवेशंनकरोति तत्रहेतुः गुणाइंद्रियाणिगुणेषुविषयेषुवर्त्तंते नाहमितिमत्वा ॥२८॥नबुद्धिभेदंजन
येदित्युक्तमुपसंहरति प्रकृतेरिति यैःप्रकृतेर्गुणैःसत्त्वादिभिःसंमूढाःसंतोगुणेष्विंद्रियेषुतत्कर्मसुचसज्जंतेवयंकुर्मइति तानकृत्स्नविदोमंद

मतीन्कृत्स्नवित्सर्वज्ञोनविचालयेत् ॥२९॥ तदेवंतत्त्वविदापिकर्मकर्त्तव्यंत्वंतुनाद्यापितत्त्ववित् अतःकर्मैवकुर्वित्याह मयीति सर्वाणिक
र्माणिमयिसंन्यस्यसमर्प्याध्यात्मचेतसांतर्याम्यधीनोऽहंकरोमीतिदृष्ट्यानिराशीर्निष्कामोऽतएव मत्फलसाधनं मदर्थमिदंकर्मेत्येवंमम
ताशून्यश्वभूत्वा विगतज्वरस्त्यक्तशोकश्वभूत्वा युद्धचस्व ॥३०॥ एवंकर्मानुष्ठानेगुणमाह येमेमतामिति मद्वाक्येश्रद्धावंतःअनसूयंतःदुःखा
त्मकेकर्मणिप्रवर्त्तयतीतिदोषदृष्टिमकुर्वंतश्वयेमेमदीयमिदंमतंअनुतिष्ठंति तेऽपिशनैः कर्मकुर्वाणाःसम्यग्ज्ञानिवत्कर्मभिर्मुच्यंते॥३१॥वि

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ॥ निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥
ये मे मतमिदं नित्यमनुतिष्ठंति मानवाः ॥ श्रद्धावंतोऽनसूयंतो मुच्यंते तेऽपि कर्मभिः ॥ ३१ ॥
ये त्वेतदभ्यसूयंतो नानुतिष्ठंति मे मतम् ॥ सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२ ॥
सदृशं चेष्टते स्वस्याःप्रकृतेर्ज्ञानवानपि ॥ प्रकृतिं यांति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥

पक्षेदोषमाह येत्विति येतुमेमतंईश्वरार्थंकर्मकर्त्तव्यमित्यनुशासनमभ्यसूयंतः द्विषंतःनानुतिष्ठंति तान्अचेतसःविवेकशून्यानतएवसर्वे
स्मिन्कर्मणिब्रह्मविषयेचयज्ज्ञानंतत्रविमूढान्नष्टान्विद्धि ॥३२॥ ननुतर्हिमहाफलत्वादिंद्रियाणिनिगृह्यनिष्कामाःसंतःसर्वेऽपिस्वधर्ममेव
किंनानुतिष्ठंतितत्राह सदृशमिति प्रकृतिःप्राचीनकर्मसंस्काराधीनस्वभावःस्वस्याः स्वकीयायाः प्रकृतेःस्वभावस्यसदृशमनुरूपमेवगुणदो
षज्ञानवानपिचेष्टते किंपुनर्वक्तव्यमज्ञश्वेष्टतइति तस्माद्भूतानिसर्वेऽपिप्राणिनः प्रकृतिंयांति अनुवर्त्तंतेएवंसतिइंद्रियनिग्रहःकिंकरिष्यति

प्रकृतेर्बलिष्ठत्वादित्यर्थः ॥३३॥ नन्वेवंप्रकृत्यधीनैव चेत्पुरुषस्यप्रवृत्तिःतर्हिविधिनिषेधवैयर्थ्यंप्राप्तमित्याशंक्याह इंद्रियस्येंद्रियस्येतिवीप्स
याप्रत्येकंसर्वेषामिंद्रियाणामित्युक्तम् अर्थेस्वस्वविषयेऽनुकूलेरागः प्रतिकूलेद्वेषश्चेत्येवंरागद्वेषौव्यवस्थितौ अवश्यंभाविनौ ततश्चतदनुरू
पाप्रवृत्तिरितिभूतानांप्रकृतिः तथापितयोर्वशवर्त्तीनभवेदितिशास्त्रेणनियम्यते हियस्मात् अस्यमुमुक्षोः तौपरिपंथिनौप्रतिपक्षौ अयंभा
वः विषयस्मरणादिनारागद्वेषावुत्पाद्यानवहितंपुरुषमनर्थेऽपिगंभीरेस्त्रोतसीवप्रकृतिर्बलात्प्रवर्त्तयति शास्त्रंतुततः प्रागेवविषयेषुरागद्वेष
प्रतिबंधकेपरमेश्वरभजनादौप्रवर्त्तयाति गंभीरस्त्रोतःपातात्पूर्वमेवनावमाश्रितइवनानर्थंप्राप्नोतीति ॥३४॥ तदेवंस्वाभाविकींपश्वादिसदृशीं

इंद्रियस्येंद्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ॥ तयोर्न वशमागच्छेत्तौ ह्यस्य परिपंथिनौ ॥३४॥
श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ॥ स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥३५॥ अर्जुन उ० ॥ अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ॥ अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥३६॥

प्रकृतिंत्यक्त्वास्वधर्मेप्रवर्तितव्यमित्युक्तं तर्हिस्वधर्मस्ययुद्धादेर्दुःखरूपस्ययथावत्कर्तुमशक्यत्वात्परधर्मस्यचअहिंसादेःसुकरत्वाद्धर्म
त्वाविशेषाच्चतत्रप्रवर्तितुमिच्छंतंप्रत्याह श्रेयानिति किंचिदंगहीनोऽपिस्वधर्मः श्रेयान् प्रशस्यतरः स्वनुष्ठितात्सर्वांगपूर्त्याकृतादपिपरध
र्मात्सकाशात् तत्रहेतुः स्वधर्मेयुद्धादौप्रवर्त्तमानस्यनिधनंमरणमपिश्रेष्ठम् स्वर्गादिप्रापकत्वात् परधर्मस्तुस्वस्यभयावहः निषिद्धत्वेननर
कप्रापकत्वात् ॥३५॥ तयोर्नवशमागच्छेदित्युक्तंतदेतदशक्यंमन्वानोऽर्जुनउवाच अथकेनेति वृष्णेर्वंशेऽवतीर्णोवार्ष्णेयःहेवार्ष्णेयअनर्थरू

पंपापंकर्तुमनिच्छन्नपिकेनप्रयुक्तःप्रेरितोऽयंपूरुषःपापंचरति कामक्रोधौविवेकबलेननिरुंधतोऽपिपुरुषस्यपुनःपापेप्रवृत्तिदर्शनादन्योऽपि
तयोर्मूलभूतःकश्चित्प्रवर्त्तकोभवेदितिसंभावनायांप्रश्नः॥३६॥अत्रोत्तरम् श्रीभगवानुवाच कामएषइति यस्त्वयापृष्टोहेतुरेषकामएव न
नुक्रोधोऽपिपूर्वंत्वयोक्तःइंद्रियस्येंद्रियस्येत्यत्र सत्यं नासौततःपृथक् किंतु क्रोधोप्येषएवकामएव केनचित्प्रतिहतःक्रोधात्मनापरिणमते
अतःपूर्वंपृथक्त्वेनोक्तोऽपिक्रोधःकामजएवेत्यभिप्रायेणकामेनैकीकृत्योच्यते रजोगुणात्समुद्भवतीतितथा अनेनसत्त्ववृद्ध्यारजसिक्षयंनी
तेसतिकामोऽपिक्षीयतइतिसूचितम् एनंकामंइहमोक्षमार्गेवैरिणंविद्धि अयंचवक्ष्यमाणक्रमेणहंतव्यएव यतोनासौदानेनसंधातुंशक्य

श्रीभगवानुवाच ॥ ॥ काम एष क्रोध एष रजोगुणसमुद्भवः ॥ महाशनो महापाप्मा विद्ध्येनमिह वै
रिणम् ॥ ३७ ॥ धूमेनाव्रियते वन्हिर्यथाऽऽदर्शो मलेन च ॥ यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम्
॥ ३८ ॥ आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ॥ कामरूपेण कौंतेय दुष्पूरेणाऽनलेन च ॥ ३९ ॥

इत्याह महाशनःमहदशनंयस्य दुष्पूरइत्यर्थः नचसाम्नासंधातुंशक्यः यतोमहापाप्माअत्युग्रः॥३७॥कामस्यवैरित्वंदर्शयति धूमेनेति य
थाधूमेनसहजेनवन्हिराव्रियते आच्छाद्यते यथावाआदर्शोमलेनागंतुकेन यथाचउल्बेनगर्भवेष्टनचर्मणागर्भःसर्वतोनिरुध्द्यावृतः तथा
प्रकारत्रयेणापितेनकामेनावृतमिदम्॥३८॥इदंशब्दनिर्दिष्टंदर्शयन्वैरित्वंस्फुटयति आवृतमिति इदंतुविवेकज्ञानमेतेनावृतम् अज्ञस्यख
लुभोगसमयेकामःसुखहेतुरेव परिणामेतुवैरितांप्रपद्यते ज्ञानिनःपुनःतत्कालमप्यनर्थानुसंधानाद्दुःखहेतुरेवेतिनित्यवैरिणेत्युक्तम् किंच

विषयैः पूर्यमाणोऽपिदुष्पूरः अपूर्यमाणः शोकसंतापहेतुत्वादनलतुल्यः अनेनसर्वान्प्रतिनित्यवैरित्वमुक्तम् ॥ ३९ ॥ इदानींतस्याधिष्ठानंकथयन्जयोपायमाह इंद्रियाणीतिद्वाभ्याम् विषयदर्शनश्रवणादिभिः संकल्पेनाध्यवसायेनचकामस्याविर्भावादिंद्रियाणिचमनश्चबुद्धिश्चास्याधिष्ठानमुच्यते एतैरिंद्रियादिभिर्दर्शनादिव्यापारवद्भिराश्रयभूतैर्विवेकज्ञानमावृत्यदेहिनंविमोहयाति ॥ ४० ॥ यस्मादेवंतस्मात्त्वमिति आदौविमोहात्पूर्वमेवइंद्रियाणिमनोबुद्धिंचनियम्यपापरूपमेनंकामंहिस्फुटंप्रजहि घातय यद्वा प्रजहिपरित्यज ज्ञानंआत्मविषयंविज्ञानंशास्त्रीयंतयोर्नाशकं यद्वा ज्ञानंशास्त्राचार्योपदेशजम् विज्ञानंनिदिध्यासनजं तमेवधीरोविज्ञायप्रज्ञांकुर्वीतेतिश्रुतेः॥ ४१ ॥अथात्रप्रस

इंद्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ॥ एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥

तस्मात्त्वमिंद्रियाण्यादौ नियम्य भरतर्षभ ॥ पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥

इंद्रियाणि पराण्याहुरिंद्रियेभ्यः परं मनः ॥ मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२ ॥

न्नतयाचित्तप्रणिधानेनइंद्रियाणिनियंतुंशक्यंते तदात्मस्वरूपंदेहादिभ्योविविच्यदर्शयाति इंद्रियाणीति इंद्रियाणिदेहादिभ्योग्राह्येभ्यः पराणिश्रेष्ठान्याहुः सूक्ष्मत्वात्प्रकाशकत्वाच्च अतएवतद्व्यतिरिक्तत्वमप्यर्थादुक्तंभवति इंद्रियेभ्यश्चसंकल्पात्मकंमनःपरम् तत्प्रवर्त्तकत्वात् मनसस्तुबुद्धिर्निश्चयात्मिकापरा निश्चयपूर्वकत्वात्संकल्पस्य यस्तुबुद्धेःपरःतत्साक्षित्वेनावस्थितःसर्वांतरः सआत्माविमोहयतिदेहिनमिति देहिशब्दोक्तआत्मासइतिपरामृश्यते ॥ ४१॥ उपसंहरति एवमिति बुद्धेरेवविषयेंद्रियादिजन्याःकामादिविक्रियाः आत्मा

तुनिर्विकारस्तत्साक्षीत्येवंबुद्धेःपरमात्मानंबुध्वा आत्मनाएवंभूतनिश्चयात्मिकयाबुद्ध्यात्मानंमनःसंस्तभ्यनिश्चलंकृत्वाकामरूपंशत्रुंजहि मारय दुरासदंदुःखेनासादनीयंदुर्विज्ञेयगतिंमित्यर्थः॥४३॥स्वधर्मेणयमाराध्यभक्त्यामुक्तिमितानराः॥तंकृष्णंपरमानंदंतोषयेत्सर्वकर्मभिः॥१॥इतिसुबोधिन्यांटीकायांतृतीयोऽध्यायः॥३॥आविर्भावतिरोभावावाविष्कर्तुंस्वयंहरिः।तत्त्वंपदविवेकार्थंकर्मयोगंप्रशंसति॥१॥एवं तावदध्यायद्वयेनकर्मयोगोपायोज्ञानयोगोपायश्चमोक्षसाधनत्वेनउक्तः तमेवब्रह्मार्पणादिगुणविधानेनत्वंपदार्थविवेकादिनाचप्रपंचयिष्य

एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना॥ जहि शत्रुं महाबाहो कामरूपं दुरासदम्॥४३॥ ॥ इति श्रीमद्भ० कर्मयोगो नाम तृतीयोऽध्यायः॥३॥ ॥श्रीभगवानुवाच॥ ॥इमं विवस्वते योगं प्रोक्तवानहमव्ययम्॥ विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्॥१॥ एवं परंपराप्राप्तमिमं राजर्षयो विदुः॥ स कालेनेह महता योगो नष्टः परंतप॥२॥ स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः॥ भक्तोसि मे सखा चेति रहस्यं ह्येतदुत्तमम्॥३॥

न्प्रथमंतावत्परंपराप्राप्तत्वेनस्तुवन् श्रीभगवानुवाच इममितित्रिभिः अव्ययफलत्वादव्ययं इमंयोगं पुराहंविवस्वतेआदित्यायकथितवान् सचस्वपुत्रायमनवेश्राद्धदेवायप्राह सचमनुःस्वपुत्रायेक्ष्वाकवेऽब्रवीत्॥१॥ एवमिति राजानश्चतेऋषयश्चान्येऽपिराजर्षयोनिमिप्रमुखाःस्वपुत्रादिभिरिक्ष्वाकुप्रमुखैःप्रोक्तमिमंयोगंविदुर्जानंतिस्म अद्यतनानामज्ञानेकारणमाह हेपरंतप शत्रुतापन सयोगःकालवशादिहलोकेनष्टः विच्छिन्नः॥२॥ सएवायमिति सएवायंयोगोऽद्यविच्छिन्नेसंप्रदायेसतिपुनश्चमयातेतुभ्यमुक्तःयतस्त्वंममभक्तोऽसिसखाचेति अन्य

स्मैमयानोच्यते हियस्मादिदमुत्तमंरहस्यम् ॥३॥ भगवतोविवस्वंतंप्रतियोगोपदेशासंभवंपश्यन्नर्जुनउवाच अपरमिति अपरमर्वाचीनंतव
जन्म परंप्राक्कालीनंविवस्वतोजन्म तस्मात्तवाधुनिकत्वाच्चिरंतनायविवस्वतेत्वमादौयोगंप्रोक्तवानित्येतत्कथमहंविजानीयांज्ञातुंशक्नु
याम् ॥ ४ ॥ इतिपृष्टवंतमर्जुनंरूपांतरेणोपदिष्टवानित्यभिप्रायेणोत्तरंश्रीभगवानुवाच बहूनीति ममबहूनिजन्मानितवचव्यतीतानितानि
सर्वाण्यहंवेदजानामि अलुप्तविद्याशक्तित्वात् त्वंतुनजानासि अविद्यावृतत्वात् ॥५॥नन्वनादेस्तवकुतोजन्म अविनाशिनश्चकथंपुनर्जन्मये

॥ अर्जुन उवा० ॥ ॥ अपरं भवतो जन्म परं जन्म विवस्वतः ॥ कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति॥४॥

॥ श्रीभगवानु० ॥ ॥ बहूनि मे व्यतीतानि जन्मानि तव चार्जुन॥तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप॥५॥

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ॥ प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ॥ अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥

नबहूनिमेव्यतीतानीत्युच्यते ईश्वरस्यतवपुण्यपापविहीनस्यकथंजीववज्जन्मेत्यतआह अजोऽपीति सत्यमेवंतथापिअजोऽपिसन्नहंत
थाऽव्ययात्मापिअनश्वरस्वभावोऽपिसन्तथाईश्वरोऽपिकर्मपारतंत्र्यरहितोऽपिसन्स्वमाययासंभवामि सम्यगप्रच्युतज्ञानबलवीर्यादिशक्त्यै
वभवामि ननुतथापिषोडशकलात्मकलिंगदेहशून्यस्यतवकुतोजन्मेत्यतउक्तं स्वांशुद्धसत्वात्मिकांप्रकृतिमधिष्ठायस्वीकृत्यविशुद्धोर्जित
सत्त्वमूर्त्यास्वेच्छयाअवतरामीत्यर्थः॥६॥कदासंभवसीत्यपेक्षायामाहयदायदेति धर्मस्यग्लानिर्हानिः अधर्मस्यअभ्युत्थानमाधिक्यं॥७॥

किमर्थमित्यपेक्षायामाह परित्राणायेति साधूनांस्वधर्मवर्तिनांरक्षणाय दुष्टंकर्मकुर्वंतीतिदुष्कृतस्तेषांवधायच एवंधर्मस्यसंस्थापनार्थाय साधुरक्षणेनदुष्टवधेनचधर्मंस्थिरीकर्तुंयुगेयुगेतत्तदवसरेसंभवामीत्यर्थः नचैवंदुष्टनिग्रहंकुर्वतोऽपिनैर्घृण्यंशंकनीयं यथाचाहुः लालनेताडनेमातुर्नाकारुण्यंयथार्भके॥तद्वदेवमहेशस्यनियंतुर्गुणदोषयोरिति॥८॥ एवंविधानामीश्वरजन्मकर्मणांज्ञानेफलमाह जन्मकर्मेति मेजन्मस्वेच्छाकृतंकर्मचधर्मपालनरूपंदिव्यमलौकिकंतत्त्वतः परानुग्रहार्थमेवेतियोवेत्तिसदेहाभिमानंत्यक्त्वापुनर्जन्मनैति नप्राप्नोति किंतु मामेवप्राप्नोति ॥९॥ कथंजन्मकर्मज्ञानेनत्वत्प्राप्तिःस्यादित्यत्राह वीतरागेति अहंशुद्धसत्वावतारैर्धर्मपरिपालनंकरोमीतिमदीयंपरमकारु

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ॥ धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥
जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ॥ त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥
वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ॥ बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥

णिकत्वंज्ञात्वा वीताविगतारागभयक्रोधायेभ्यस्ते विक्षेपाभावात् मन्मयामदेकचित्ताभूत्वामामेवोपाश्रिताः संतोमत्प्रसादलभ्यंयदात्मज्ञानंचतपश्चतत्परिपाकहेतुःस्वधर्मःतयोर्द्वंद्वैकवद्भावः तेनज्ञानतपसापूताः शुद्धानिरस्ताज्ञानतत्कार्यमलाःसंतोमद्भावंमत्सायुज्यंप्राप्तावहवः नत्वधुनैवप्रवृत्तोऽयंमद्भक्तिमार्गइत्यर्थः तदेवंतान्यहंवेदसर्वाणीत्यादिनाविद्याविद्योपाधिभ्यांतत्त्वंपदार्थावीश्वरजीवौप्रदर्श्यैश्वरस्य चाविद्याभावेन नित्यशुद्धत्वाज्जीवस्यचेश्वरप्रसादलब्धाज्ञाननिवृत्तेः शुद्धस्य सतश्चिदंशेनतदैक्यमुक्तमितिद्रष्टव्यम् ॥ १० ॥

ननुतर्हिं किंत्वय्यपिवैषम्यमस्ति यस्मादेवंत्वदेकशरणानामेवात्मभावंददासिनान्येषांसकामानामित्यतआह येयथेति यथायेनप्रकारेण
सकामतयानिष्कामतयावायेमांभजंतितानहंतथैवतदपेक्षितफलदानेनभजामि अनुगृह्णामि ननुयेसकामामांविहायेंद्रादीनेवभजन्तेता
नहमुपेक्षइतिमंतव्यम् यतःसर्वशःसर्वप्रकारैःइंद्रादिसेवकाअपिममैववर्त्मभजनमार्गमनुवर्तंते इंद्रादिरूपेणाऽपिममैवसेव्यत्वात् ॥ ११ ॥
तर्हिंमोक्षार्थमेवकिमितिसर्वेत्वांनभजंतीत्यतआह कांक्षंतइति कर्मणांसिद्धिंफलंकांक्षंतःप्रायशः इहमनुष्यलोकेइंद्रादिदेवताएवयजंतेन
तुसाक्षान्मामेव हियस्मात्कर्मजासिद्धिःकर्मजंफलंशीघ्रंभवति नतुज्ञानफलंकैवल्यं दुष्प्राप्यत्वाज्ज्ञानस्य॥ १२॥ ननुकेचित्सकामतयाप्रव

ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहम् ॥ मम वर्त्मानुवर्त्तंते मनुष्याःपार्थ सर्वशः ॥ ११ ॥
कांक्षंतःकर्मणां सिद्धिं यजंत इह देवताः ॥ क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥
चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ॥ तस्य कर्त्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥

र्त्ततेकेचिन्निष्कामतयेतिकर्मवैचित्र्यं तत्कर्तॄणांचब्राह्मणादीनामुत्तममध्यमादिवैचित्र्यंकुर्वतस्तवकथंवैषम्यंनास्तीत्याशंक्याह चातुर्वर्ण्य
मितिचत्वारोवर्णाएवचातुर्वर्ण्यम् स्वार्थेष्यञ्प्रत्ययः अयमर्थःसत्वप्रधानाब्राह्मणास्तेषांशमदमादीनिकर्माणि सत्वरजःप्रधानाःक्षत्रिया
स्तेषांचशौर्ययुद्धादीनिकर्माणि रजस्तमःप्रधानावैश्यास्तेषांकृषिवाणिज्यादीनिकर्माणि तमःप्रधानाःशूद्रास्तेषांचत्रैवर्णिकशुश्रूषादिक
र्माणीत्येवंगुणानांकर्मणांचविभागैश्चातुर्वर्ण्यंमयैवसृष्टमिति सत्यं तथाप्येवंतस्यकर्त्तारमपिफलतोऽकर्त्तारमेवमांविद्धि तत्रहेतुः अव्ययं

आसक्तिराहित्येनश्रमरहितंनाशादिरहितं॥१३॥तदेवदर्शयन्नाह नमामिति कर्माणिविसृष्ट्यादीन्यपिमांनलिंपंति आसक्तंनकुर्वंति निर
हंकारत्वात्आप्तकामत्वेनममकर्मफलेस्पृहाभावाच्च मांनलिंपंतीतिकिंवक्तव्यं यतःकर्मफलेस्पृहाराहित्येनमांयोऽभिजानातिसोऽपिकर्म
भिर्नबद्ध्यते ममनिर्लेपत्वेकारणंनिरहंकारत्वनिःस्पृहत्वादिकंजानतस्तस्याप्यहंकारादिशैथिल्यात्॥१४॥येयथामांप्रपद्यंतइत्यादिचतुर्भिः
श्लोकैःप्रासंगिकमीश्वरस्यवैषम्यंपरिहृत्यपूर्वोक्तमेवकर्मयोगंप्रपंचयितुमनुस्मारयति एवमिति अहंकारादिराहित्येनकृतंकर्मबंधकंनभव

न मां कर्माणि लिंपंति न मे कर्मफले स्पृहा॥इति मां योऽभिजानाति कर्मभिर्न स बद्ध्यते।१४।एवं ज्ञात्वा कृतं कर्म पूर्वै
रपि मुमुक्षुभिः॥कुरु कर्मैव तस्मात्त्वं पूर्वैःपूर्वतरं कृतं॥१५॥किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः॥तत्ते कर्म प्रवक्ष्या
मि यज्ज्ञात्वा मोक्ष्यसेऽशुभात १६कर्मणोह्यपिबोद्धव्यं बोद्धव्यं चविकर्मणः॥अकर्मणश्च बोद्धव्यंगहनाकर्मणोगतिः१७

तीत्येवंज्ञात्वापूर्वैर्जनकादिभिरपिमुमुक्षुभिःसत्त्वशुद्ध्यर्थंपूर्वंतरंयुगांतरेष्वपिकृतम् तस्मात्त्वमपिप्रथमंकर्मैवकुरु॥१५॥ तच्चतत्त्वविद्भिःसह
विचार्यकर्त्तव्यंनलोकपरंपरामात्रेणेत्याह किंकर्मेति किंकर्मकीदृशंकर्मकरणं किमकर्मकीदृशंकर्माकरणमित्येतस्मिन्नर्थेविवेकिनोऽपिमो
हिताः अतोयज्ज्ञात्वानुष्ठायअशुभात्संसारान्मोक्ष्यसे मुक्तोभविष्यसितत्कर्माकर्मचतुभ्यमहंप्रवक्ष्यामिशृणु ॥१६॥ ननुलोकप्रसिद्धमेव
कर्मदेहादिव्यापारात्मकं अकर्मचतदव्यापारात्मकं अतःकथमुच्यतेकवयोऽप्यत्रमोहंप्राप्ताइतितत्राह कर्मणइति कर्मणोविहितव्यापा

रस्यापितत्त्वंबोद्धव्यमस्ति नतुलोकप्रसिद्धमात्रमेव अकर्मणोऽविहितव्यापारस्यापितत्त्वंबोद्धव्यमस्ति विकर्मणोऽपिनिषिद्धस्यापित
त्त्वंबोद्धव्यमस्ति यतःकर्मणोगतिर्गहना कर्मणइत्युपलक्षणार्थम् कर्माकर्मविकर्मणांतत्त्वंबोद्धव्यमस्ति यतः दुर्विज्ञेयमित्यर्थः ॥ १७ ॥ त
देवंकर्मादीनांदुर्विज्ञेयत्वंदर्शयन्नाह कर्मण्यकर्मेति परमेश्वराराधनलक्षणेकर्मणिविषयेअकर्मकर्मेदंनभवतीतियःपश्येत्तस्यज्ञानहेतुत्वे
नबंधनत्वाभावात् अकर्मणिचविहिताकरणेकर्मयःपश्येत्तस्य प्रत्यवायोत्पादकत्वेनबंधहेतुत्वात् मनुष्येषुकर्मकुर्वाणेषुसबुद्धिमान्व्यव
सायात्मकबुद्धिमत्त्वाच्छ्रेष्ठः तंस्तौति सयुक्तःयोगी तेनकर्मणाज्ञानयोगावाप्तेः सएवकृत्स्नकर्मकर्ताच सर्वतःसंप्लुतोदकस्थानीयेतास्मिन्क
र्मणिसर्वकर्मफलानामंतर्भूतत्वात् तदेवमारुरुक्षोःकर्मयोगाधिकारावस्थायांनकर्मणामनारंभादित्यादिनोक्तएवकर्मयोगःस्फुटीकृतःतत्प्र

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ॥ स बुद्धिमान्मनुष्येषु स युक्तःकृत्स्नकर्मकृत् ॥ १८ ॥

पंचरूपत्वाच्चास्यप्रकरणस्यनपौनरुक्त्यदोषः अनेनैवयोगारूढावस्थायांयस्त्वात्मरतिरेवस्यादित्यादिनायःकर्मानुपयोगउक्तस्तस्याप्यर्था
त्प्रपंचःकृतोवेदितव्यः यदाआरुरुक्षोरपिकर्मबंधकंनभवति तदारूढस्यकुतोबंधकंस्यादित्यत्रापिश्लोकोयोज्यते यद्वा कर्मणिदेहेंद्रियादि
व्यापारेवर्तमानेऽप्यात्मनोदेहादिव्यतिरेकानुभवेनाकर्मस्वाभाविकंनैष्कर्म्यमेवयःपश्येत् तथाकर्मणिचज्ञानरहितेदुःखबुद्ध्याकर्मणांत्या
गेनकर्मयःपश्येत् तस्यप्रतिबंधकत्वेनामिथ्याचारत्वात् तदुक्तं कर्मेंद्रियाणिसंयम्ययआस्तेमनसास्मरन्निति यएवंभूतःसतुसर्वेषुमनुष्येषु
बुद्धिमान्पंडितः तत्रहेतुः यतःकृत्स्नानिसर्वाणियदृच्छयाप्राप्तान्याहारादीनिकर्माणिकुर्वन्नपिसयुक्तएवाकर्त्रात्मज्ञानेनसमाधिस्थएवेत्य

र्थः अनेनैवज्ञानिनःस्वभावादापन्नंकलंजभक्षणादिकंनदोषाय अज्ञस्यतुरागतःकृतंदोषायेतिविकर्मणोऽपितत्त्वंनिरूपितंद्रष्टव्यं ॥१८॥कर्म
ण्यकर्मयःपश्येदिति श्रुत्यर्थार्थापत्तिभ्यांयदुक्तमर्थद्वयंतदेवस्पष्टयति यस्येत्यादिपंचभिः सम्यगारभ्यंतइतिसमारंभाःकर्माणि काम्यतइ
तिकामःफलंतत्संकल्पेनवर्जितायस्यभवंतितंपंडितमाहुःतत्रहेतुः यतस्तैःसमारंभैःशुद्धचित्तेसतिजातेनज्ञानाग्निनादग्धानिअकर्मतांनी
तानिकर्माणियस्यतं आरूढावस्थायांतुकामःफलविषयस्तदर्थमिदंकर्मकर्तव्यमितिकर्मविषयःसंकल्पश्चताभ्यांवर्जितःशेषंस्पष्टं॥१९॥किं

यस्य सर्वे समारंभाःकामसंकल्पवर्जिताः ॥ ज्ञानाग्निदग्धकर्माणं तमाहुःपंडितं बुधाः ॥ १९ ॥
त्यक्त्वा कर्मफलासंगं नित्यतृप्तो निराश्रयः ॥ कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ २० ॥
निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ॥ शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥

चत्यक्त्वेति कर्मणितत्फलेचासक्तिंत्यक्त्वानित्येनानिजानंदेनतृप्तः अतएवयोगक्षेमार्थमाश्रयणीयरहितः एवंभूतोयःस्वाभाविकेविहितेच
कर्मणिअभितःप्रवृत्तोऽपिकिंचिदपिनैवकरोति तस्यकर्माकर्मतामापद्यतइत्यर्थः॥२०॥किंच निराशीरितिनिर्गताआशिषःकामनायस्मात्
यतंनियतंचित्तंआत्माचशरीरंयस्य त्यक्ताःसर्वेपरिग्रहायेनसः शारीरंशरीरमात्रनिर्वर्त्यंकर्तृत्वाभिनिवेशरहितंकर्मकुर्वन्नपिकिल्बिषंबंधनं
नप्राप्नोति योगारूढपक्षेशरीरनिर्वाहमात्रोपयोगिस्वाभाविकंभिक्षाटनादिकर्मकुर्वन्नपिकिल्बिषंविहिताकरणनिमित्तंदोषंनप्राप्नोतीति २१

किंच यदृच्छेति अप्रार्थितोलाभोयदृच्छालाभः तेनसंतुष्टः द्वंद्वानिशीतोष्णादीन्यतीतः अतिक्रांतः तत्सहनशीलइत्यर्थः विमत्स
रोनिर्वैरः यदृच्छालाभस्यापिसिद्धावसिद्धौचसमःहर्षविषादरहितः यएवंभूतः सपूर्वोत्तरभूमिकयोर्यथायथंविहितंस्वाभाविकंवाकर्मकृ
त्वाऽपिनबंधंप्राप्नोति ॥२२॥ किंच गतसंगस्येति गतसंगस्यनिष्कामस्यरागादिभिर्मुक्तस्य ज्ञानेवस्थितंचेतोयस्य यज्ञायपरमेश्वरार्थंकर्मा
चरतःसतःसमग्रंसवासनंकर्मप्रविलीयते अकर्मभावमापद्यते आरूढयोगपक्षेयज्ञायेति यज्ञसंरक्षणार्थंलोकसंग्रहार्थमेवकर्मकुर्वतइत्यर्थः

यदृच्छालाभसंतुष्टो द्वंद्वातीतो विमत्सरः ॥ समःसिद्धावसिद्धौ च कृत्वाऽपि न निबद्ध्यते ॥ २२ ॥
गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतसः ॥ यज्ञायाचरतःकर्म समग्रं प्रविलीयते ॥ २३ ॥
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ॥ ब्रह्मैव तेन गंतव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥

॥२३॥तदेवंपरमेश्वराराधनलक्षणंकर्मज्ञानहेतुत्वेनबंधकत्वाभावादकर्मैव आरूढावस्थायांत्वकर्त्रात्मज्ञानेनबाधितत्वात्स्वाभाविकमपिक
र्माकर्मैवेति कर्मण्यकर्मयः पश्येदित्यनेनोक्तःकर्मप्रविलयःप्रपंचितः इदानींकर्मणितदंगेषुचब्रह्मैवानुस्यूतंपश्यतः कर्मप्रविलयमाह ब्रह्मा
र्पणमिति अर्प्यतेऽनेनेत्यर्पणंस्रुवादितदपिब्रह्मैव अर्प्यमाणंहविरपिघृतादिकंब्रह्मैवब्रह्मैवाग्निस्तस्मिन्ब्रह्मणाकर्त्राचहुतंब्रह्मैव होमः अग्नि
श्चकर्ताचक्रियाचब्रह्मैवेत्यर्थः एवंब्रह्मण्येवकर्मात्मकेसमाधिश्चित्तैकाग्र्यंयस्यतेनब्रह्मैवगंतव्यंप्राप्यंनतुफलांतरमित्यर्थः ॥ २४ ॥ ॥

एतदेवयज्ञत्वेनसम्पादितंसर्वत्रब्रह्मदर्शनलक्षणंज्ञानं सर्वयज्ञोपायप्राप्यत्वात्सर्वयज्ञेभ्यः श्रेष्ठमित्येवंस्तोतुं अधिकारिभेदेनज्ञानोपायभूता
न्बहून्यज्ञानाह दैवमित्यष्टाभिः देवाइंद्रवरुणादयइज्यंतेयस्मिन् एवकारेणेंद्रादिषुब्रह्मबुद्धिराहित्यंदर्शितं तंदैवंयज्ञं अपरेकर्मयोगिनःपर्यु
पासतेश्रद्धयाऽनुतिष्ठंति अपरेतुज्ञानयोगिनःब्रह्मरूपेऽग्नौयज्ञेनैवोपायभूतेनब्रह्मार्पणमित्युक्तप्रकारेणयज्ञमुपजुह्वति यज्ञादिसर्वकर्माणि
प्रविलापयंतीत्यर्थःसोऽयंज्ञानयज्ञः ॥२५॥श्रोत्रादीनीति अन्येनैष्ठिकब्रह्मचारिणस्तत्तदिंद्रियसंयमरूपेष्वाग्निषुश्रोत्रादीनिजुह्वति प्रविला
पयंतिइंद्रियाणिनिरुद्ध्यसंयमप्रधानास्तिष्ठंतीत्यर्थः इंद्रियाण्येवाग्नयस्तेषुशब्दादीनन्येगृहस्थाजुह्वतिविषयान् भोगसमयेऽप्यनासक्ताः

दैवमेवापरे यज्ञं योगिनः पर्युपासते ॥ ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥ श्रोत्रा
दीनींद्रियाण्यन्ये संयमाग्निषु जुह्वति ॥ शब्दादीन्विषयानन्य इंद्रियाग्निषु जुह्वति ॥ २६ ॥
सर्वाणींद्रियकर्माणि प्राणकर्माणि चापरे ॥ आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

संतोऽग्नित्वेनभावितेष्विंद्रियेषुहविष्ट्वेनभावितान्शब्दादीन्प्रक्षिपंतीत्यर्थः॥२६॥सर्वाणीतिअपरेध्याननिष्ठाःबुद्धींद्रियाणांश्रोत्रादीनांकर्मा
णिश्रवणदर्शनादीनि कर्मेंद्रियाणांवाक्पाण्यादीनांकर्माणिवचनोपादानादीनिच प्राणानांदशानांकर्माणि प्राणस्यबहिर्गमनं अपान
स्याधोनयनम् व्यानस्यव्यानयनाकुंचनप्रसारणादि समानस्याशितपीतादीनांसम्यगुन्नयनम् उदानस्योर्ध्वनयनम् उद्गारेनाग
आख्यातः कूर्मउन्मीलनेस्मृतः कृकरः क्षुतकृज्ज्ञेयोदेवदत्तोविजृंभणे नजहातिमृतंवापिसर्वव्यापीधनंजयः इत्येवंरूपाणिजुह्वति क्वआ

त्मनिसंयमोध्यानैकाग्र्यंसएवयोगः सएवाग्निस्तस्मिन्ज्ञानेन ध्येयविषयेणदीपितेप्रज्वलिते ध्येयंसम्यग्ज्ञात्वातस्मिन्मनः संयम्यतानिस
र्वाणिकर्माण्युपरमयतीत्यर्थः ॥ २७ ॥ किंच द्रव्येति द्रव्यदानमेवयज्ञोयेषांतेद्रव्ययज्ञाः कृच्छ्रचांद्रायणादितपएवयज्ञोयेषांतेतपोयज्ञाः
योगश्चित्तवृत्तिनिरोधलक्षणःसमाधिःसएवयज्ञोयेषांतेयोगयज्ञाः स्वाध्यायेनवेदेन श्रवणमननादिनायत्तदर्थज्ञानंतदेवयज्ञोयेषांते अथवा
वेदपाठयज्ञास्तदर्थज्ञानयज्ञाश्चेतिद्विविधाः यतयःप्रयत्नशीलाः सम्यक्शितंनिशितंतीक्ष्णीकृतंव्रतंयेषांते ॥ २८ ॥ किंच अपानइति
अपानेअधोवृत्तौप्राणमूर्ध्ववृत्तिंपूरकेणजुह्वति पूरककालेप्राणमपानेनैकीकुर्वंति तथाकुंभकेनप्राणापानयोरूर्ध्वाधोगतीरुध्वारेचकका

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ॥ स्वाध्यायज्ञानयज्ञाश्च यतयःसंशितव्रताः ॥ २८ ॥
अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ॥ प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥
अपरे नियताहाराःप्राणान्प्राणेषु जुह्वति ॥ सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥

लेअपानंप्राणेजुह्वति एवंपूरककुंभकरेचकैःप्राणायामपरायणाअपरेइत्यर्थः ॥ २९ ॥ किंच अपरइति अपरेत्वाहारसंकोचमभ्यस्यंतः स्व
यमेवजीर्यमाणेष्विंद्रियेषुतत्तदिंद्रियवृत्तिलयंहोमंभावयंतीत्यर्थः यद्वा अपानेजुह्वतिप्राणंप्राणेऽपानंतथापरइत्यनेनपूरकरेचकयोरावर्त्य
मानयोर्हंसः सोहमित्यनुलोमतः प्रतिलोमतश्चाभिव्यज्यमानेनाजपामंत्रेणतत्त्वंपदार्थैक्यंव्यतिहारेणभावयंतीत्यर्थः तदुक्तंयोगशास्त्रे स
कारेणबहिर्यातिहकारेणविशेत्पुनः प्राणस्तत्रसएवाहंहंसइत्यनुचिंतयेदिति प्राणापानगतीरुद्ध्वेत्यनेनतुश्लोकेनप्राणायामयज्ञाःअपरैःक

ध्यंतेतत्रायमर्थः द्वौभागौपूरयेदन्नैस्तोयेनैकंप्रपूरयेत् मारुतस्यप्रचारार्थंचतुर्थमवशेषयेदित्येवमादिवचनोक्तोनियतआहारोयेषांतेकुंभ
केनप्राणापानगतीरुध्वाप्राणायामपरायणाःसंतःप्राणानिंद्रियाणिप्राणेषुजुह्वति कुंभकेहिसर्वेप्राणाएकीभवंतीतितत्रैवलीयमानेष्विंद्रि
येषुहोमंभावयंतीत्यर्थः तदुक्तंयोगशास्त्रे यथायथासदाभ्यासान्मनसःस्थिरताभवेत् वायुवाक्कायदृष्टीनांस्थिरताचतथातथेति तदेवमुक्ता
नांद्वादशानांयज्ञविदांफलमाह सर्वइति यज्ञान्विदंतिलभंतइतियज्ञविदः यज्ञज्ञाइतिवा यज्ञैःक्षपितंनाशितंकल्मषंयैस्ते॥३०॥यज्ञशिष्टेति
यज्ञान्कृत्वावशिष्टेकालेऽनिषिद्धमन्नममृतरूपंभुंजतइतितथातेसनातनंनित्यंब्रह्मज्ञानद्वारेणप्राप्नुवंति तदकरणेदोषमाह नायंलोकइति

यज्ञशिष्टामृतभुजो यांति ब्रह्म सनातनं ॥ नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥
एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ॥ कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥
श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ॥ सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥

अयमल्पसुखोऽपिमनुष्यलोकः अयज्ञस्ययज्ञानुष्ठानशून्यस्यनास्ति कुतोऽन्यःपरलोकः अतोयज्ञाःसर्वथाकर्त्तव्याइत्यर्थः॥३१॥ज्ञानयज्ञं
स्तोतुंउक्तान्यज्ञानुपसंहरति एवमिति ब्रह्मणोवेदस्यमुखेवितताःवेदेनसाक्षाद्विहिताइत्यर्थःतथापितान्सर्वान्वाङ्मनःकायकर्मजनिताना
त्मस्वरूपसंस्पर्शरहितान्विद्धि जानीहि आत्मनःकर्मागोचरत्वादेवंज्ञात्वाज्ञाननिष्ठःसन्संसाराद्विमुक्तोभविष्यसि॥३२॥कर्मयज्ञाज्ज्ञानयज्ञ
स्तुश्रेष्ठइत्याह श्रेयानिति द्रव्यमयादनात्मव्यापारजन्याद्दैवादियज्ञाज्ज्ञानयज्ञःश्रेयान्श्रेष्ठःयद्यपिज्ञानयज्ञस्यापिमनोव्यापाराधीनत्वम

स्त्येव तथाप्यात्मरूपस्यज्ञानस्यमनःपरिणामेऽभिव्यक्तिमात्रं नतुतज्जन्यत्वमितिद्रव्यमयाद्विशेषः श्रेष्ठत्वेहेतुः सर्वंकर्माखिलंफलसहि
तंज्ञानेपरिसमाप्यते अंतर्भवतीत्यर्थः सर्वंतदभिसमेतियत्किंचित्प्रजाःसाधुकुर्वंतीतिश्रुतेः॥ ३ ३॥एवंभूतात्मज्ञानेसाधनमाह तद्विद्धीति
तज्ज्ञानंविद्धिप्राप्नुहि ज्ञानिनांप्रणिपातेनदंडवन्नमस्कारेण ततःपरिप्रश्नेनकुतोऽयंममसंसारःकथंवानिवर्त्ततइतिप्रश्नेन सेवयाशुश्रूषयाच
ज्ञानिनःशास्त्रज्ञास्तत्त्वदर्शिनःअपरोक्षानुभवसंपन्नाश्चतेतुभ्यंज्ञानमुपदेशेनसंपादयिष्यंति।३४॥ज्ञानफलमाह यज्ज्ञात्वेतिसार्द्धैस्त्रिभिः य
ज्ज्ञानंज्ञात्वाप्राप्यपुनर्बंधुवधादिनिमित्तंमोहंनप्राप्स्यसि तत्रहेतुः येनज्ञानेनभूतानिपितृपुत्रादीनिस्वाविद्यारचितानिस्वात्मन्येवाभेदेनद्र

तद्विद्धिप्रणिपातेनपरिप्रश्नेनसेवया॥उपदेक्ष्यंतितेज्ञानंज्ञानिनस्तत्वदर्शिनः॥३४॥यज्ज्ञात्वानपुनर्मोहमेवंयास्यसि
पांडव॥येनभूतान्यशेषेणद्रक्ष्यस्यात्मन्यथोमयि॥३५॥अपिचेदसिपापेभ्यःसर्वेभ्यःपापकृत्तमः॥सर्वंज्ञानप्लवेनैववृजि
नंसंतरिष्यसि॥३६॥यथैधांसिसमिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन॥ज्ञानाग्निःसर्वकर्माणिभस्मसात्कुरुतेतथा ॥ ३७ ॥

क्ष्यसि अथोअनंतरमात्मानंमयिपरमात्मन्येवाभेदेनद्रक्ष्यसीत्यर्थः॥३५॥ किंच अपिचेदिति सर्वेभ्यःपापकारिभ्योयद्यपिअतिशयेनपाप
कारीत्वमसि तथापिसर्वंपापसमुद्रंज्ञानपोतेनैवसम्यगनायासेनतरिष्यसि ॥ ३६ ॥ समुद्रवत्स्थितस्यैवपापस्यातिलंघनमात्रंनतुपापस्य
नाशइतिभ्रांतिंदृष्टांतेनवारयन्नाह यथेति एधांसिकाष्ठानिप्रदीप्तोऽग्निर्यथाभस्मीभावंनयति तथाआत्मज्ञानरूपोऽग्निःप्रारब्धकर्मव्यति
रिक्तानिसर्वाणिकर्माणिभस्मीकरोतीत्यर्थः ॥ ३७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तत्रहेतुमाह नहीतिपवित्रंशुद्धिकरंइहतपोयोगादिषुमध्येज्ञानतुल्यंनास्त्येवतर्हिसर्वेऽप्यात्मज्ञानमेवकिंनाभ्यस्यंतीत्यतआहतत्स्वयमिति सार्द्धेन तदात्मविषयंज्ञानंकालेनमहताकर्मयोगेनसंसिद्धोयोग्यतांप्राप्तःसन्स्वयमेवानायासेनलभते नतुकर्मयोगंविनेत्यर्थः ॥३८॥ किंच श्रद्धावानिति श्रद्धावान्गुरूपदिष्टेऽर्थेआस्तिक्यबुद्धिमान् तत्परस्तदेकनिष्ठःसंयतेंद्रियश्चतज्ज्ञानंलभते नान्यः अतःश्रद्धादिसंपत्त्याज्ञानलाभात्प्राक्कर्मयोगएवशुद्ध्यर्थमनुष्ठेयःज्ञानलाभानंतरंतुनतस्यकिंचित्कृत्यमस्तीत्याह ज्ञानंलब्ध्वात्वचिरेणपरांशांतिंमोक्षंप्राप्नोति ३९

नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥ तत्स्वयं योगसंसिद्धःकालेनात्मनि विंदति ॥ ३८ ॥
श्रद्धावाँल्लभते ज्ञानं तत्परःसंयतेंद्रियः ॥ ज्ञानं लब्ध्वा परां शांतिमचिरेणाधिगच्छति ॥ ३९ ॥
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ॥ नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥४०॥
योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ॥ आत्मवंतं न कर्माणि निबध्नंति धनंजय ॥ ४१ ॥

ज्ञानाधिकारिणमुक्त्वातद्विपरीतमनधिकारिणमाह अज्ञश्चेति अज्ञोगुरूपदिष्टार्थानभिज्ञःकथंचिज्ज्ञानेजातेप्यश्रद्दधानश्चजातायामपिश्रद्धायांममेदंसिद्ध्येद्वानवेतिसंशयाक्रांतचित्तश्चनश्यति स्वार्थाद्भ्रश्यति एतेषुत्रिष्वपिसंशयात्मासर्वथानश्यतियतस्तस्यायंलोकोनास्ति धनार्जनविवाहाद्यसिद्धेः नचपरलोकः धर्मस्यानिष्पत्तेः नचसुखं संशयेनैवभोगस्याप्यसंभवात्॥४०॥अध्यायद्वयोक्तांपूर्वापरभूमिकाभेदेनकर्मज्ञानमयींद्विविधांब्रह्मनिष्ठामुपसंहरति योगेतिद्वाभ्यां योगेनपरमेश्वराराधनरूपेणतस्मिन्संन्यस्तानिसमर्पितानिकर्माणियेनतम्

पुरुषंकर्माणिस्वफलैर्ननिबध्नंति अतश्चज्ञानेनाकर्त्रात्मबोधेनसंछिन्नःसंशयोदेहाद्यभिमानलक्षणोयस्यतंचात्मवंतमप्रमादिनंकर्माणिलो
कसंग्रहार्थानिस्वाभाविकानिवाननिबध्नंति॥ ४१ ॥तस्मादिति यस्मादेवंतस्मादात्मनोऽज्ञानेनसंभूतंहृदिस्थितमेनंसंशयंशोकादिनिमित्तं
देहात्मविवेकज्ञानखड्गेनछित्त्वापरमात्मज्ञानोपायभूतंकर्मयोगमातिष्ठाश्रय तत्रचप्रथमंप्रस्तुताययुद्धायोत्तिष्ठ हेभारत क्षत्रियत्वेनयुद्धस्य
स्वधर्मत्वंदर्शितं ॥ ४२ ॥ पुमवस्थादिभेदेनकर्मज्ञानमयीद्विधा ॥ निष्ठोक्तायेनतंवंदेशौरिंसंशयसंछिदं ॥ १ ॥ इतिसुबोधिन्यांटीकायांचतुर्थोऽ

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ॥ छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥
इति श्रीमद्भग० ज्ञानयोगो नाम चतुर्थोऽध्यायः ॥ ४ ॥ अर्जुन उवाच ॥ संन्यासं कर्मणां कृष्ण
पुनर्योगं च शंससि ॥ यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥ श्रीभगवानुवाच ॥ संन्या
सः कर्मयोगश्च निःश्रेयसकरावुभौ ॥ तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥

ध्यायः॥ ४ ॥निवार्यसंशयंजिष्णोःकर्मसंन्यासयोगयोः ॥ जितेंद्रियस्यचयतेःपंचमेमुक्तिमब्रवीत्॥ १ ॥अज्ञानसंभूतंसंशयंज्ञानासिनाछित्त्वा
कर्मयोगमातिष्ठेत्युक्तंतत्रपूर्वापरविरोधंमन्वानोर्जुनउवाच संन्यासमिति यस्त्वात्मरतिरेवस्यादित्यादिनासर्वंकर्माखिलंपार्थेत्यादिनाच
ज्ञानिनःकर्मसंन्यासंकथयसि ज्ञानासिनासंशयंछित्त्वायोगमातिष्ठेतिपुनर्योगंचकथयसि नचकर्मसंन्यासःकर्मयोगश्चैकस्यैकदैवसंभवतः
विरुद्धस्वरूपत्वात् तस्मादेतयोर्मध्येएकस्मिन्ननुष्ठातव्येसतिममयच्छ्रेयःश्रेष्ठंसुनिश्चितंतदेकंब्रूहि॥ १ ॥अत्रोत्तरं श्रीभगवानुवाच संन्यासइति

अयंभावः नहिवेदांतवेद्यात्मतत्त्वविदंप्रतिकर्मयोगमहंब्रवीमि यतःपूर्वोक्तेनसंन्यासेनाविरोधःस्यात् अपितुदेहात्माभिमानिनंत्वांबंधुवधा
दिनिमित्तशोकमोहादिकृतमेनंसंशयंदेहात्मविवेकज्ञानासिनाछित्त्वापरमात्मज्ञानोपायभूतंकर्मयोगमातिष्ठेतिब्रवीमि कर्मयोगेनशुद्धचि
त्तस्यचात्मतत्त्वज्ञानेजातेसतितत्परिपाकार्थंज्ञाननिष्ठांगत्वेनसंन्यासःपूर्वमुक्तः एवंसत्यंगप्रधानयोर्विकल्पायोगात्संन्यासःकर्मयोगश्चेत्येता
वुभावपिभूमिकाभेदेनसमुच्चितावेवनिःश्रेयसंसाधयतः तथाऽपितुनयोर्मध्येकर्मसंन्यासात्सकाशात्कर्मयोगोविशिष्टोभवति॥२॥कुतइत्य
पेक्षायांसंन्यासित्वेनकर्मयोगंस्तुवन्तस्यश्रेष्ठत्वंदर्शयति ज्ञेयइति रागद्वेषादिराहित्येनपरमेश्वरार्थंकर्माणियोनुतिष्ठतिसनित्यंकर्मानुष्ठान

ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न कांक्षति॥ निर्द्वंद्वो हि महाबाहो सुखं बंधात्प्रमुच्यते ॥ ३ ॥ सांख्ययोगौ पृथ
ग्बालाःप्रवदंति न पंडिताः ॥ एकमप्यास्थितःसम्यगुभयोर्विंदते फलम् ॥ ४ ॥

कालेऽपिसंन्यासीत्येषज्ञेयः तत्रहेतुः
निर्द्वंद्वोरागद्वेषादिशून्योहिशुद्धचित्तोज्ञानद्वारासुखमनायासेनसंसारात्प्रमुच्यते॥३॥ यस्मादेवमंगप्रधानत्वेनोभयोरवस्थाभेदेनक्रमसमुच्च
यः अतोविकल्पमंगीकृत्योभयोःकःश्रेष्ठइतिप्रश्नोऽज्ञानिनामेवोचितोनविवेकिनामित्याह सांख्ययोगाविति सांख्यशब्देनज्ञाननिष्ठावा
चिनातदंगंसंन्यासंलक्षयति संन्यासकर्मयोगावेकफलौसंतौपृथक्स्वतंत्राविति बालाः अज्ञाएवप्रवदंतिनतुपंडिताः तत्रहेतुः अनयोरेकम
पिसम्यगास्थितआश्रितःसन्नुभयोरपिफलंप्राप्नोति तथाहिकर्मयोगंसम्यगनुतिष्ठन्शुद्धचित्तःसन्ज्ञानद्वारायदुभयोःफलंकैवल्यंविंदति सं
न्यासंसम्यगास्थितोऽपिपूर्वमनुष्ठितस्यकर्मयोगस्यापिपरंपरयाज्ञानद्वारायदुभयोःफलंकैवल्यंतद्विंदतीतिनपृथक्फलत्वमनयोरित्यर्थः॥४॥

एतदेवस्फुटयति यत्सांख्यैरिति सांख्यैर्ज्ञाननिष्ठैःसंन्यासिभिर्यत्स्थानंमोक्षाख्यंप्रकर्षेणसाक्षादवाप्यते योगैरित्यत्रअर्शआदित्वान्मत्व
र्थीयोऽच्प्रत्ययोद्रष्टव्यःतेनकर्मयोगिभिरपितदेवज्ञानद्वारेणगम्यतेअवाप्यतइत्यर्थः अतःसांख्यंचयोगंचैकफलत्वेनैकंयःपश्यतिसएवस
म्यक्पश्यति॥५॥यदिकर्मयोगिनोऽप्यंततःसंन्यासेनैवज्ञाननिष्ठातर्हिआदितएवसंन्यासःकर्तुंयुक्तइतिमन्वानंप्रत्याह संन्यासइति अयोग
तःकर्मयोगंविनासंन्यासःप्राप्तुंदुःखंदुःखहेतुः अशक्यइत्यर्थःचित्तशुद्ध्यभावेनज्ञाननिष्ठायाअसंभवात् योगयुक्तस्तुशुद्धचित्ततयामुनिःसं

यत्सांख्यैःप्राप्यते स्थानं तद्योगैरपि गम्यते ॥ एकं सांख्यं च योगं च यःपश्यति स पश्यति ॥ ५ ॥
संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ॥ योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥
योगयुक्तो विशुद्धात्मा विजितात्मा जितेंद्रियः ॥ सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥

न्यासीभूत्वाऽचिरेणैवब्रह्माधिगच्छति अपरोक्षंजानाति अतश्चित्तशुद्धेःप्राक्कर्मयोगएवसंन्यासाद्विशिष्यतेइतिपूर्वोक्तंसिद्धं तदुक्तंवार्तिक
कृद्भिः प्रमादिनोबहिश्चित्ताःपिशुनाःकलहोत्सुकाः संन्यासिनोऽपिदृश्यंतेदैवसंदूषिताशयाइति॥६॥कर्मयोगादिक्रमेणब्रह्माधिगमेसत्यपित
दुपरितनेनकर्मणाबंधःस्यादेवेत्याशंक्याह योगयुक्तइति योगेनयुक्तोऽतोविशुद्धआत्माचित्तंयस्यातएवविजितआत्माशरीरंयेन अतएव
विजितानींद्रियाणियेन ततश्चसर्वेषांभूतानामात्मभूतआत्मायस्य सःलोकसंग्रहार्थंस्वाभाविकंवाकर्मकुर्वन्नपिनलिप्यते तैर्नबध्यते ॥७॥

कर्मकुर्वन्नपिनलिप्यतइत्येतद्विरुद्धमित्याशंक्यकर्तृत्वाभिमानाभावान्नविरुद्धमित्याह नैवेतिद्वाभ्यां कर्मयोगेनयुक्तःक्रमेणतत्त्वविद्भूत्वाद र्शनश्रवणादीनिकुर्वन्नपि इंद्रियाणींद्रियार्थेषुवर्त्तंतइतिधारयन्बुद्ध्यानिश्चित्यकिंचिदप्यहंनकरोमीतिमन्येतमन्यते तत्रदर्शनश्रवणस्पर्श नावघ्राणाशनानिचक्षुरादिज्ञानेंद्रियव्यापाराः गतिःपादयोः स्वापो बुद्धेः श्वासःप्राणस्य प्रलपनंवागिंद्रियस्य विसर्गःपायूपस्थयोर्ग्रहणंहस्त योःउन्मेषणनिमेषणेकूर्माख्यप्राणस्येतिविवेकःएतानिकर्माणिकुर्वन्नपिअनभिमानात्ब्रह्मविन्नलिप्यतेतथाचपारमर्षंसूत्रं तदधिगमउ

नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्॥पश्यञ्छृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन्॥८॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ॥ इंद्रियाणींद्रियार्थेषु वर्त्तंत इति धारयन् ॥ ९ ॥
ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः ॥ लिप्यते न स पापेन पद्मपत्रमिवांभसा ॥ १० ॥
कायेन मनसा बुद्ध्या केवलैरिंद्रियैरपि ॥ योगिनःकर्म कुर्वंति संगं त्यक्त्वात्मशुद्धये ॥ ११ ॥

त्तरपूर्वार्द्धयोरसंश्लेषविनाशौतद्व्यपदेशादिति ॥८॥९॥ तर्हियस्यकरोमीत्यभिमानोस्तितस्यकर्मलेपोदुर्वारोऽविशुद्धचित्तत्वात् संन्यासोपि नास्तीतिमहत्संकटमापन्नमित्याशंक्याह ब्रह्मणीति ब्रह्मण्याधायपरमेश्वरेसमर्प्यतत्फलेचसंगंत्यक्त्वायःकर्माणिकरोति असौपापेनबंध हेतुतयापापिष्ठेनपुण्यपापात्मकेनकर्मणानलिप्यते यथापद्मपत्रमंभसिस्थितमप्यंभसानलिप्यतेतद्वत्॥१०॥बंधकत्वाभावमुक्त्वामोक्षहे तुत्वंसदाचारेणदर्शयतिकायेनेतिकायेनस्नानादिमनसाध्यानादिबुद्ध्यातत्त्वनिश्चयादिकेवलैः कर्माभिनिवेशरहितैरिंद्रियैश्चश्रवणकीर्त्तना

दिलक्षणंकर्मफलसंगंत्यक्त्वाचित्तशुद्ध्येकर्मयोगिनःकर्मकुर्वंति ॥ ११ ॥ ननुतेनैवकर्मणाकश्चिन्मुच्यतेकश्चिद्बद्ध्यतइतिव्यवस्थाकथमतआ
ह युक्तइति युक्तःपरमेश्वरैकनिष्ठःसन्कर्मणांफलंत्यक्त्वाकर्माणिकुर्वन्नात्यंतिकींशांतिंमोक्षंप्राप्नोतिअयुक्तस्तुबहिर्मुखःकामकारेणकामतः
प्रवृत्त्याफलेआसक्तोनितरांबंधंप्राप्नोति ॥ १२ ॥ एवंतावच्चित्तशुद्धिशून्यस्यसंन्यासात्कर्मयोगोविशिष्यतइत्येतत्प्रपंचितम् इदानींशुद्धचित्त
स्यसंन्यासः श्रेष्ठइत्याह सर्वकर्माणीति वशीयतचित्तः सर्वाणिकर्माणिविक्षेपकाणिमनसाविवेकयुक्तेनसंन्यस्यसुखंयथाभवत्येवंज्ञाननि
ष्ठःसन्नास्ते क्वास्तइत्यतआह नवद्वारे नेत्रेनासिकेकर्णौमुखंचेतिसप्तशिरोगतानि अधोगतेद्वेपायूपस्थरूपे इत्येवंनवद्वाराणियस्मिंस्तस्मि

युक्तःकर्मफलंत्यक्त्वा शांतिमाप्नोति नैष्ठिकीम् ॥ अयुक्तःकामकारेण फले सक्तो निबध्यते ॥ १२ ॥
सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ॥ नवद्वारे पुरे देही नैव कुर्वन्नकारयन् ॥ १३ ॥
न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ॥ न कर्मफलसंयोगं स्वभावस्तु प्रवर्त्तते ॥ १४ ॥

न्पुरे पुरवदहंभावशून्येदेहे देही अवतिष्ठते अहंकाराभावादेवस्वयंतेनदेहेननैवकुर्वन्ममकाराभावाच्चनकारयन्नित्याविशुद्धचित्ताद्व्यावृत्ति
रुक्ता अविशुद्धचित्तोहिसंन्यस्यपुनःकरोतिकारयतिच नत्वयंतथाअतःसुखमास्तइत्यर्थः ॥ १३ ॥ ननु एषएवसाधुकर्मकारयतितंयमेभ्योलो
केभ्यउन्निनीषते एषएवासाधुकर्मकारयतितंयमेभ्योलोकेभ्योऽधोनिनीषतइत्यादिश्रुतेः परमेश्वरेणैवशुभाशुभफलेषुकर्मसुकर्तृत्वेनप्रयु
ज्यमानोऽस्वतंत्रःपुरुषःकथंतानिकर्माणित्यजेत् ईश्वरेणैवज्ञानमार्गेप्रयुज्यमानःशुभान्यशुभानिचत्यक्ष्यतीतिचेत्एवंसतिवैषम्यनैर्घृण्या

भ्यांप्रयोजककर्तृत्वादीश्वरस्यापिपुण्यपापसंबंधःस्यादित्याशंक्याह नकर्तृत्वमितिद्वाभ्यां प्रभुःईश्वरः जीवलोकस्यकर्तृत्वादिकंनसृजाति किंतु जीवस्यैवस्वभावोऽविद्यैवकर्तृत्वादिरूपेणप्रवर्त्तते अनाद्यविद्याकामवशात्प्रवृत्तिस्वभावंजीवलोकमीश्वरः कर्मसुनियुंक्ते नतुस्वयमेवकर्तृत्वादिकमुत्पादयतीत्यर्थः १४यस्मादेवंतस्मात् नादत्तइति प्रयोजकोऽपिसन्प्रभुः कस्यचित्पापंसुकृतंचनैवादत्तेनभजते तत्रहेतुः विभुःपरिपूर्णः आप्तकामइत्यर्थः यदिहिस्वार्थकामनयाकारयेत्तर्हितथास्यात् नत्वेतदस्ति आप्तकामस्यैवाचिंत्यनिजमाययातत्तत्पूर्वकर्मानुसारेणप्रवर्तकत्वात् ननुभक्ताननुगृह्णतोऽभक्तान्निगृह्णतश्चवैषम्योपलंभात्कथमाप्तकामत्वामित्यतआह अज्ञानेनेति निग्रहोऽपिदंडरू

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ॥ अज्ञानेनावृतं ज्ञानं तेन मुह्यंति जंतवः ॥ १५ ॥ ज्ञानेन तु तदज्ञानंयेषां नाशितमात्मनः ॥ तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥ तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ॥गच्छंत्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥१७॥

पोऽनुग्रहएवेत्येवमज्ञानेनसर्वत्रसमःपरमेश्वरइत्येवंभूतंज्ञानमावृतम् तेनहेतुनाजंतवोजीवामुह्यंति भगवतिवैषम्यंमन्यंतइत्यर्थः ॥१५॥ ज्ञानिनस्तुनमुह्यंतीत्याह ज्ञानेनेति आत्मनोभगवतोज्ञानेनयेषांतद्वैषम्योपलंभकमज्ञानंनाशितंतज्ज्ञानंतेषामज्ञानंनाशयित्वातत्परंपरिपूर्णमीश्वरस्वरूपंप्रकाशयाति यथाआदित्यस्तमोनिरस्यसमस्तंवस्तुजातंप्रकाशयतितद्वत् ॥१६॥ एवंभूतेश्वरोपासनाफलमाह तद्बुद्धयइति तस्मिन्नेवबुद्धिर्निश्चयात्मिकायेषाम् तस्मिन्नेवात्मामनोयेषाम् तस्मिन्नेवानिष्ठातात्पर्यंयेषाम् तदेवपरमयनमाश्रयोयेषाम् ततश्चतत्प्रसादलब्धेनात्मज्ञानेननिर्धूतंनिरस्तंकल्मषंयेषांते अपुनरावृत्तिंमुक्तिंयांति॥ १७॥

कीदृशास्तेज्ञानियोयेऽपुनरावृत्तिंगच्छंतीत्यपेक्षायामाह विद्याविनयसंपन्नइति विषमेष्वपिसमंब्रह्मैवद्रष्टुंशीलंयेषांते पंडिताज्ञानिनइत्य
र्थः तत्रविद्याविनयाभ्यांयुक्तेब्राह्मणेच शुनोयःपचतितस्मिन्श्वपाकेचेतिकर्मणावैषम्यं गविहस्तिनिशुनिचेतिजातितोवैषम्यंदर्शितं॥१८
ननु विषमेषुसमदर्शनंनिषिद्धंकुर्वंतोपिकथंतेपंडिताः यथाहगौतमःसमासमाभ्यांविषमसमेपूज्यतइति अस्यार्थःसमायपूजायाविषमेप्र
कारेकृतेसति विषमायचसमेप्रकारेकृतेसति सपूजकइहलोकात्परलोकाच्चहीयतइति तत्राह इहैवेति इहैवजीवद्भिरेवतैः सृज्यतइतिसर्गः

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ॥ शुनि चैव श्वपाके च पंडिताः समदर्शिनः ॥ १८ ॥
इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ॥ निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १९ ॥
न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ॥ स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ २० ॥

संसारोजितः निरस्तः कैः येषांमनःसाम्येसमत्वेस्थितम् तत्रहेतुः हियस्मात्ब्रह्मसमंनिर्दोषंचतस्मात्तेसमदर्शिनोब्रह्मण्येवस्थिताः ब्र
ह्मभावंप्राप्ताइत्यर्थः गौतमोक्तस्तुदोषोब्रह्मभावप्राप्तेःपूर्वमेव पूज्यतइतिपूजकावस्थाश्रवणात्॥१९॥ब्रह्मप्राप्तस्यलक्षणमाह नेति योब्रह्म
विद्भूत्वाब्रह्मण्येवस्थितःसप्रियंप्राप्यनप्रहृष्येत् नप्रहृष्टोहर्षवान्स्यात् अप्रियंचप्राप्यनोद्विजेत् नविषीदतीत्यर्थः यतःस्थिरबुद्धिःस्थिरा
निश्चलाबुद्धिर्यस्य तत्कुतः यतोऽसंमूढःनिवृत्तमोहः ॥ २० ॥ ॥ ॥ ॥ ॥ ॥ ॥

मोहनिवृत्त्याबुद्धिस्थैर्यहेतुमाह बाह्यस्पर्शेष्विति इंद्रियैःस्पृश्यंतइतिस्पर्शाविषयाःबाह्येंद्रियविषयेषुअसक्तात्माअनासक्तचित्तः आत्म
न्यंतःकरणेयदुपशमात्मकंसात्विकंसुखंतद्विंदति लभते सचोपशमात्मकंसुखंलब्ध्वाब्रह्मणियोगेनसमाधिनायुक्तस्तदैक्यंप्राप्तआत्मायस्य
सःअक्षय्यंसुखमश्नुतेप्राप्नोति॥२१॥ननु प्रियविषयभोगानामपिनिवृत्तेःकथंमोक्षःपुरुषार्थःस्यात्तत्राह येहीति संस्पृश्यंतइतिसंस्पर्शाविष
याःतेभ्योजातायेभोगाःसुखानितेहिवर्त्तमानकालेऽपिस्पर्द्धासूयादिव्याप्तत्वाद्दुःखस्यैवयोनयः कारणभूताः तथाआदिमंतोऽतवंतश्चअतो
विवेकीतेषुनरमते॥२२॥तस्मान्मोक्षएवपरःपुरुषार्थस्तस्यचकामक्रोधवेगोऽतिप्रतिपक्षोऽतस्तत्सहनसमर्थएवमोक्षभागित्याह शक्नोतीति

बाह्यस्पर्शेष्वसक्तात्मा विंदत्यात्मनि यत्सुखं ॥ स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥ २१ ॥
ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ॥ आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥
शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ॥ कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥२३॥

कामात्क्रोधाच्चोद्भवतियोवेगोमनोनेत्रादिक्षोभलक्षणः तमिहैवतदुद्भवसमयएवयोनरःसोढुंप्रतिरोद्धुंशक्नोति तदपिनक्षणमात्रम् किंतु
शरीरविमोक्षणात्प्राक् यावद्देहपातमित्यर्थः यएवंभूतःसएवयुक्तःसमाहितःसुखीचभवति नान्यःयद्वा मरणादूर्ध्वंविलपंतीभिर्युवतीभि
रालिंग्यमानोऽपिपुत्रादिभिर्दह्यमानोऽपियथाप्राणशून्यःकामक्रोधवेगंसहते तथामरणात्प्रागपिजीवन्नेवयःसहेतसएवयुक्तःसुखीचेत्यर्थः
तदुक्तंवसिष्ठेन प्राणेगतेयथादेहःसुखंदुःखंनविंदति ॥ तथाचेत्प्राणयुक्तोऽपिसकैवल्याश्रयोभवेदिति ॥ २३ ॥ ॥ ॥ ॥ ॥

नकेवलंकामक्रोधवेगसंहरणमात्रेणमोक्षंप्राप्नोति अपितु योंऽतरिति अंतःआत्मन्येवसुखंयस्यनविषयेषु अंतरेवारामःक्रीडायस्यनबहिः
अंतरेवज्योतिर्दृष्टिर्यस्यनगीतनृत्यादिषुसएवब्रह्मणिभूतःस्थितःसन्ब्रह्मणिनिर्वाणंलयमाधिगच्छतिप्राप्नोति॥२४॥किंच लभंतइतिऋषयः
सम्यग्दर्शिनःक्षीणंकल्मषंयेषां छिन्नंद्वैधंसंशयोयेषां यतःसंयतआत्माचित्तंयेषां सर्वेषांभूतानांहितेरताःकृपालवस्तेब्रह्मनिर्वाणंमोक्षंलभं
ते॥२५॥ किंच कामक्रोधवियुक्तानामिति कामक्रोधाभ्यांवियुक्तानांयतीनांसंन्यासिनां संयतचित्तानांज्ञातात्मतत्त्वानां अभितउभयतःमृ

योंतःसुखोंतरारामस्तथांऽतर्ज्योतिरेव यः॥ स योगी ब्रह्म निर्वाणं ब्रह्मभूतोऽधिगच्छति॥२४॥
लभंते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः॥ छिन्नद्वैधा यतात्मानःसर्वभूतहिते रताः॥ २५॥
कामक्रोधवियुक्तानां यतीनां यतचेतसाम्॥ अभितो ब्रह्म निर्वाणं वर्त्तते विदितात्मनाम्॥ २६॥
स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवांतरे भ्रुवोः॥ प्राणापानौ समौ कृत्वा नासाभ्यंतरचारिणौ॥२७॥

तानांजीवतांच नदेहांतरएवतेषांब्रह्मणिलयः अपितुजीवतामपिवर्तंतइत्यर्थः॥२६॥सयोगीब्रह्मनिर्वाणमित्यादिषुयोगीमोक्षमाप्नोतीत्यु
क्तंतमेवयोगंसंक्षेपेणदर्शयन्नाह स्पर्शानितिद्वाभ्यां बाह्याएवस्पर्शारूपरसादयोविषयाश्चिंतिताःसंतोंऽतःप्रविशंति तांस्तांश्चिंतात्यागेनब
हिरेवकृत्वाचक्षुश्चभ्रुवोरंतरेभ्रूमध्यएवकृत्वाऽत्यंतंनेत्रयोर्निमीलनेनिद्रयामनोलीयते उन्मीलनेनचबहिः प्रसरति तदुभयदोषपरिहारार्थ
मर्धनिमीलनेनभ्रूमध्येदृष्टिंनिधायेत्यर्थः उच्छ्वासनिःश्वासरूपेणनासिकयोरभ्यंतरेचरंतौप्राणापानावूर्ध्वाधोगतिनिरोधेनसमौकृत्वा कुं

भयित्वेत्यर्थः यद्वा प्राणोयथाबहिर्ननिर्याति यथाचापानोऽतर्नप्रविशति किंतु नासामध्यएवद्वावपियथाचरतःतथामंदाभ्यामुच्छ्वासनिः
श्वासाभ्यांसमौकृत्वेति॥२७॥ यतेति अनेनेपायेनयताःसंयताइंद्रियमनोबुद्धयोयस्य मोक्षएवपरमयनंप्राप्यंयस्य अतएवविगताइच्छा
भयक्रोधायस्य यएवंभूतोमुनिःससदाजीवन्नपिमुक्तएवेत्यर्थः॥२८॥नन्वेवमिंद्रियादिसंयममात्रेणकथंमुक्तिःस्यान्नतावन्मात्रेण किंतुज्ञान
द्वारेणेत्याह भोक्तारमिति यज्ञानांतपसांचमद्भक्तैःसमर्पितानांयदृच्छयाभोक्तारम् पालकमितिवा सर्वेषांलोकानांमहांतमीश्वरंसर्वेषांभूता
नांसुहृदंनिरपेक्षोपकारिणमंतर्यामिणंमांज्ञात्वामत्प्रसादेनशांतिंमोक्षंऋच्छतिप्राप्नोति॥२९॥विकल्पशंकापोहेनयेनैवंसांख्ययोगयोःसमु

यतेंद्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः॥विगतेच्छाभयक्रोधो यःसदा मुक्त एव सः ॥२८॥भोक्तारं यज्ञतपसां सर्वलो
कमहेश्वरम्॥ सुहृदं सर्वभूतानां ज्ञात्वा मां शांतिमृच्छति ॥ २९ ॥ इति श्रीमद्भ० कर्मसंन्यासयोगो नाम पंचमो
ऽध्यायः॥५॥श्रीभगवानुवाच॥ अनाश्रितःकर्मफलंकार्यं कर्म करोतियः॥ससंन्यासी चयोगीचननिरग्निर्नचाक्रियः॥१॥

च्चयः क्रमेणोक्तःसर्वज्ञंनौमितंहरिम्॥१॥ इतिसुबोधिन्यांटीकायांपंचमोऽध्यायः॥५॥चित्तेशुद्धेऽपिनध्यानंविनासंन्यासमात्रतः॥मुक्तिःस्या
दितिषष्ठेऽस्मिन्ध्यानयोगोवितन्यते॥१॥पूर्वाध्यायांतेसंक्षेपेणोक्तंयोगंप्रपंचयितुंषष्ठाध्यायारंभः तत्रतावत्सर्वकर्माणिमनसेत्यारभ्यसंन्या
सपूर्विकायाज्ञाननिष्ठायास्तात्पर्येणाभिधानात् दुःखरूपत्वाच्चकर्मणःसहसासंन्यासादिप्रसंगंप्राप्तंवारयितुंसंन्यासादपिश्रेष्ठत्वेनकर्मयोगं
स्तौति श्रीभगवान् अनाश्रितइतिद्वाभ्यां कर्मफलमनाश्रितोऽनपेक्षमाणःअवश्यंकर्तव्यतयाविहितंकर्मयःकरोतिसएवसंन्यासी

योगीच नतुनिरग्निः अग्निसाध्येष्टाख्यकर्मत्यागी नचाक्रियोऽनग्निसाध्यपूर्ताख्यकर्मत्यागीच १ कुतइत्यपेक्षायांकर्मयोगस्यैवसंन्यासत्वं संपादयन्नाह यमिति यंसंन्यासमितिप्राहुः प्रकर्षेणश्रेष्ठत्वेनाहुःसंन्यासएवात्यरेचयदित्यादिश्रुतेः केवलात्फलसंन्यसनाद्धेतोःयोगमेवतं जानीहि कुतइत्यपेक्षायामितिशब्दोक्तोहेतुर्योगेऽप्यस्तीत्याह नहीति नसंन्यस्तःफलसंकल्पोयेनसः कर्मनिष्ठोज्ञाननिष्ठोवाकश्चिदपिनहि योगीभवति अतःफलसंकल्पत्यागसाम्यात्संन्यासात्संन्यासीच फलसंकल्पत्यागादेवचित्तविक्षेपाभावात्योगीचभवत्येवसइत्यर्थः ॥२॥

यं संन्यासमितिप्राहुर्योगं तं विद्धि पांडव ॥ न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥
आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ॥ योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥
यदा हि नेंद्रियार्थेषु न कर्मस्वनुषज्जते ॥ सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥

तर्हियावज्जीवंकर्मयोगएवप्राप्तइत्याशंक्यतस्यावधिमाह आरुरुक्षोरिति ज्ञानयोगमारोढुंप्राप्तुमिच्छोः पुंसस्तदारोहेकारणंकर्मोच्यते चित्तशुद्धिकरत्वात् ज्ञानयोनमारूढस्य तुतस्यैवज्ञाननिष्ठस्यशमःसमाधिश्चित्तविक्षेपककर्मोपरमोज्ञानपरिपाकेकारणमुच्यते॥३॥कीदृशोऽसौ योगारूढःयस्यशमःकारणमुच्यतइत्यत्राह यदाहीति इंद्रियार्थेषुइंद्रियभोग्येषुशब्दादिषुतत्साधनेषुचकर्मसुयदानानुषज्जतेआसक्तिंन करोति तत्रहेतुः आसक्तिमूलभूतान्सर्वान्भोगविषयान्कर्मविषयांश्चसंकल्पान्संन्यसितुंत्यक्तुंशीलंयस्यसः तदायोगारूढउच्यते ॥ ४ ॥

अतोविषयासक्तित्यागेमोक्षंतदासक्तौचबंधंपर्यालोच्यरागादिस्वभावंत्यजेदित्याह उद्धरेदिति आत्मनाविवेकयुक्तेनात्मानंसंसाराद्दुद्धरेत् नत्ववसादयेत् अधोननयेत् हियस्मात् आत्मैबमनःसंगादुपरतआत्मनःस्वस्यबंधुरुपकारकः रिपुरपकारकश्च॥५॥कथंभूतस्यात्मैवबंधुःक थंभूतस्यचात्मैवरिपुरित्यपेक्षायामाह बंधुरिति येनात्मनैवआत्माकार्यकारणसंघातरूपोजितोवशीकृतः तस्यतथाभूतस्यात्मनः आत्मैव बंधुः अनात्मनोऽजितात्मनस्तुआत्मैवात्मनःशत्रुत्वेशत्रुवदपकारकारित्वेवर्त्तेत ॥६॥ जितात्मनःस्वस्मिन्बंधुत्वंस्फुटयति जितात्मनइति

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ॥ आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मनः ॥ ५ ॥
बंधुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ॥ अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥
जितात्मनः प्रशांतस्य परमात्मा समाहितः ॥ शीतोष्णसुखदुःखेष तथा मानापमानयोः ॥ ७ ॥
ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेंद्रियः ॥ युक्त इत्युच्यते योगी समलोष्टाश्मकांचनः ॥ ८ ॥

जितः आत्मायेनतस्यप्रशांतस्यरागादिरहितस्यैवपरंकेवलमात्माशीतोष्णादिषुसत्स्वपिसमाहितः स्वात्मनिष्ठोभवति नान्यस्य यद्वा तस्यहृदिपरमात्मासमाहितः स्थितोभवति ॥७॥ योगारूढस्यलक्षणंश्रैष्ठ्यंचोक्तमुपपाद्योपसंहरति ज्ञानविज्ञानतृप्तात्मेति ज्ञानमौपदेशि कंविज्ञानमपरोक्षानुभवस्ताभ्यांतृप्तोनिराकांक्षआत्माचित्तंयस्य अतः कूटस्थोनिर्विकारःअतएवविजितानिइंद्रियाणियेन अतएवसमानि लोष्टादीनियस्य मृत्खंडपाषाणसुवर्णेषुहेयोपादेयबुद्धिशून्यः सयुक्तोयोगारूढइत्युच्यते ॥ ८ ॥ ॥ ॥ ॥ ॥

सुहृन्मित्रादिषुसमबुद्धियुक्तस्ततोऽपिश्रेष्ठइत्याह सुहृदिति सुहृत्स्वभावेनैवहिताशंसी मित्रंस्नेहवशेनोपकारकः अरिर्घातुकः उदासीनो
विवदमानयोरुभयोरप्युपेक्षकः मध्यस्थोविवदमानयोरुभयोरपिहिताशंसी द्वेष्यःद्वेषविषयः बंधुः संबंधी साधवःसदाचाराः पापादुराचा
राः एतेषुसमारागद्वेषादिशून्याबुद्धिर्यस्यसतुविशिष्टः॥ ९॥एवंयोगारूढस्यलक्षणमुक्त्वेदानींतस्यसांगंयोगंविधत्ते योगीत्यादिना सयोगीप
रमोमतइत्यंतेनग्रंथेन योगीति योगीयोगारूढः आत्मानंमनः युंजीत समाहितंकुर्यात् सततंनिरंतरंरहसिएकांतेस्थितःसन्नेकाकीसंगशू

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबंधुषु ॥ साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥
योगी युंजीत सततमात्मानं रहसि स्थितः ॥ एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ॥ नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरं ॥ ११ ॥
तत्रैकाग्रं मनः कृत्वा यतचित्तेंद्रियक्रियः ॥ उपविश्यासने युंज्याद्योगमात्मविशुद्धये ॥ १२ ॥

न्यः यतंसंयतंचित्तंआत्मादेहश्चयस्यनिराशीःनिराकांक्षः निराहारोवा अपरिग्रहः परिग्रहशून्यश्च ॥ १० ॥आसननियमंदर्शयन्नाह शुचावि
तिद्वाभ्याम् शुद्धेस्थानेआत्मनःस्वस्यासनंस्थापयित्वा कीदृशम् स्थिरमचलम् नातिचोन्नतंनचातिनीचंच चैलंवस्त्रमजिनंव्याघ्रादिचर्म
चैलाजिनेकुशेभ्यउत्तरेयस्मिन् कुशानामुपरिचर्म तदुपरिवस्त्रमास्तीर्येत्यर्थः ॥ ११ ॥तत्रेति तत्रतस्मिन्नासनेउपविश्यएकाग्रंविक्षेपरहितं
मनःकृत्वा योगंयुंज्यात् अभ्यसेत् यताःसंयताः चित्तस्येंद्रियाणांचक्रियायस्यात्मनोमनसोविशुद्धयेउपशांतये ॥ १२ ॥ ॥ ॥ ॥

चित्तैकाग्र्योपयोगिनं देहादिधारणं दर्शयन्नाह सममितिद्वाभ्यां कायइतिदेहमध्यभागोविवक्षितः कायश्चशिरश्चग्रीवाचकायशिरोग्रीवंमू
लाधारादारभ्यमूर्द्धाग्रपर्यंतंसमंअवक्रंनिश्चलंधारयन्स्थिरः दृढप्रयत्नोभूत्वेत्यर्थः स्वकीयंनासिकाग्रंसंप्रेक्ष्यच अर्धनिमीलितनेत्रइत्यर्थः
इतस्ततोदिशश्चानवलोकयन्नासीतेत्युत्तरेणान्वयः १३ प्रशांतेति प्रशांत आत्माचित्तंयस्य विगताभीर्भयंयस्य ब्रह्मचारिव्रतेब्रह्मचर्येस्थि
तःसन्मनःसंयम्यप्रत्याहृत्यमय्येवचित्तंयस्य अहमेवपरःपुरुषार्थोयस्यसमत्परः एवंयुक्तोभूत्वाआसीत तिष्ठेत्॥१४॥योगाभ्यासफलमाह

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ॥ संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥
प्रशांतात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ॥ मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥
युंजन्नेवं सदात्मानं योगी नियतमानसः ॥ शांतिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥
नात्यश्नतस्तु योगोऽस्ति न चैकांतमनश्नतः ॥ न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥१६॥

युंजन्नेवमिति एवमुक्तप्रकारेणसदाआत्मानंमनोयुंजन्समाहितंकुर्वन्नियतंनिरुद्धंमानसंचित्तंयस्यसः शांतिंसंसारोपरतिंप्राप्नोति कथंभू
ताम् निर्वाणंपरमंप्राप्यंयस्यांतांमत्संस्थांमद्रूपेणावस्थितिम् ॥१५॥ योगाभ्यासनिष्ठस्याहारादिनियममाह नेतिद्वाभ्याम् अत्यंतमधिकं
भुंजानस्य एकांतमत्यंतमभुंजानस्यापियोगःसमाधिर्नभवति तथाऽतिनिद्राशीलस्यातिजाग्रतश्चयोगोनैवास्ति ॥ १६ ॥ ॥ ॥

तर्हिकथंभूतस्ययोगोभवतीत्यतआह युक्तेति युक्तोनियतआहारोविहारश्चगतिर्यस्य कर्मसुकार्येषुयुक्तानियतैवचेष्टायस्य युक्तौनियतौस्व
प्नाववोधौनिद्राजागरौयस्यतस्यदुःखनिवर्त्तकोयोगोभवतिसिद्ध्यति १७ कदानिष्पन्नयोगःपुरुषोभवतीत्यपेक्षायामाह यदेति विनियतंवि
शेषेणनिरुद्धंसच्चित्तमात्मन्येवयदानिश्चलंतिष्ठति किंच सर्वकामेभ्यः ऐहिकामुष्मिकभोगेभ्यःविगततृष्णोभवति तदाप्राप्तयोगइत्युच्यते
१८ आत्मैकाकारतयावस्थितस्यचित्तस्योपमानमाह यथेति वातशून्येदेशेस्थितोदीपोयथानेंगते नविचलति साउपमादृष्टांतः कस्यआ
त्मविषयंयोगंयुंजतोऽभ्यसतोयोगिनोयतंनियतंचित्तंयस्य निष्कंपतयाप्रकाशकतयाचाचंचलंतच्चित्तंतद्वत्तिष्ठतीत्यर्थः।१९।यंसंन्यासमि

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु॥युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥ यदा विनियतं चित्तमात्मन्ये
वावतिष्ठते॥निःस्पृहःसर्वकामेभ्यो युक्त इत्युच्यते तदा॥१८॥यथादीपो निवातस्थो नेंगते सोपमा स्मृता॥ योगिनो यत
चित्तस्य युंजतो योगमात्मनः॥१९॥यत्रोपरमते चित्तं निरुद्धं योगसेवया॥यत्र चैवात्मनात्मानं पश्यन्नात्मनितुष्यति २०

तिप्राहुर्योगंतंविद्धिपांडवेत्यादौकर्मैवयोगशब्देनोक्तं नात्यश्नतस्तुयोगोस्तीत्यादौतुसमाधिर्योगशब्देनोक्तः तत्रमुख्योयोगःकइत्यपेक्षा
यांसमाधिमेवस्वरूपतःफलतश्चलक्षयन्सएवमुख्योयोगइत्याह यत्रेतिसार्द्धैस्त्रिभिः यत्रयस्मिन्नवस्थाविशेषेयोगाभ्यासेननिरुद्धंचित्तंउ
परतंभवतीतियोगस्यस्वरूपलक्षणमुक्तं तथाचपातंजलंसूत्रं योगश्चित्तवृत्तिनिरोधइति इष्टप्राप्तिलक्षणेनफलेनतमेवलक्षयति यत्रचय
स्मिन्नवस्थाविशेषेआत्मनाशुद्धेनमनसात्मानमेवपश्यतिनतुदेहादिपश्यंश्चात्मन्येवतुष्यति नतुविषयेषु यत्रेत्यादीनांयच्छब्दानांतंयोग

संज्ञितंविद्यादितिचतुर्थेंनान्वयः २० आत्मन्येवतोषेहेतुमाह सुखमिति यत्रयस्मिन्नवस्थाविशेषेयत्तत्किमपिनिरतिशयमात्यंतिकंनित्यं सुखंवेत्ति ननुतदाविषयेंद्रियसंबंधाभावात्कुतःसुखंस्यात्तत्राह अतींद्रियंविषयेंद्रियसंबंधातीतम् केवलंबुद्ध्यैवात्माकारतयाग्राह्यम् अ तएवचयत्रस्थितःसन्तत्त्वतःआत्मस्वरूपान्नैवचलति ॥२१॥ अचलत्वमेवोपपादयति यमिति यमात्मसुखरूपलाभंलब्ध्वाततोऽधिकम परंलाभंनमन्यतेनचिंतयति तस्यैवनिरतिशयसुखत्वात्यस्मिंश्चस्थितोमहतापिशीतोष्णादिदुःखेननविचाल्यतेनाभिभूयते एतेनानिष्ट निवृत्तिफलेनापियोगलक्षणमुक्तंद्रष्टव्यम् २२ यएवंभूतोऽवस्थाविशेषस्तमाह तमित्यर्द्धेन दुःखशब्देनदुःखमिश्रितत्वाद्वैषयिकंसुखमपि

सुखमात्यंतिकं यत्तद्बुद्धिग्राह्यमतींद्रियम् ॥ वेत्ति यत्र न चैवाऽयं स्थितश्चलति तत्त्वतः ॥ २१ ॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ॥ यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते॥२२॥
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ॥ स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥२३॥

गृह्यते दुःखस्यसंयोगेनस्पर्शमात्रेणापिवियोगोयस्मिन्तमवस्थाविशेषं योगसंज्ञितंयोगशब्दवाच्यंजानीयात् परमात्मनाक्षेत्रज्ञस्ययोज नंयोगः यद्वा दुःखसंयोगेनवियोगएवशूरेकातरशब्दवद्विरुद्धलक्षणयायोगउच्यते कर्मणितुयोगशब्दस्तदुपायत्वादौपचारिकएवेतिभावः यस्मादेवंमहाफलोयोगस्तस्मात्सएवयत्नतोऽभ्यसनीयइत्याह सइतिसार्धेन सयोगोनिश्चयेनशास्त्राचार्योपदेशजनितेनयोक्तव्योभ्यस नीयः यद्यपिशीघ्रंनसिद्ध्यतितथापिअनिर्विण्णेननिर्वेदरहितेनचेतसायोक्तव्यः दुःखबुद्ध्याप्रयत्नशैथिल्यंनिर्वेदः ॥ २३ ॥ ॥ ॥

किंच संकल्पेति संकल्पात्प्रभवोयेषांतान्योगप्रतिकूलान्सर्वान्कामानशेषतः सवासनांस्त्यक्त्वा ममसैवविषयदोषदर्शिनासर्वतःप्रसरं तंइंद्रियसमूहंविशेषेणनियम्ययोगोयोक्तव्यइतिपूर्वेणान्वयः ॥२४॥ यदितुप्राक्तनकर्मसंस्कारेणमनोविचलेत्तर्हिधारणयास्थिरीकुर्यादित्याह शनैरिति धृतिर्धारणातयागृहीतयावशीकृतयाबुद्ध्यात्मसंस्थमात्मन्येवसम्यक्स्थितंनिश्चलंमनःकृत्वोपरमेत् तच्चशनैःशनैरभ्यासक्रमेण नतुसहसा उपरमस्वरूपमाह नकिंचिदपिचिंतयेत् निश्चलेमनसिस्वयमेवप्रकाशमानपरमानंदस्वरूपोभूत्वात्मध्यानादपिनिव

संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ॥ मनसैवेंद्रियग्रामं विनियम्य समंततः ॥ २४ ॥
शनैः शनैरुपरमेद्बुद्ध्याधृतिगृहीतया ॥ आत्मसंस्थं मनःकृत्वा न किंचिदपि चिंतयेत् ॥ २५ ॥
यतो यतो निश्चरति मनश्चंचलमस्थिरम् ॥ ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥
प्रशांतमनसं ह्येनं योगिनं सुखमुत्तमम् ॥ उपैति शांतरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥

र्तेतेत्यर्थः॥२५॥एवमपिरजोगुणवशाद्यदिमनःप्रचलेत्तर्हिपुनःप्रत्याहारेणवशीकुर्यादित्याह यतइति स्वभावतश्चंचलंधार्यमाणमप्यस्थिरं मनोयंयंविषयंप्रतिनिर्गच्छातिततस्ततः प्रत्याहृत्यात्मन्येवस्थिरंकुर्यात्॥२६॥एवंप्रत्याहारादिभिःपुनःपुनर्मनोवशीकुर्वतंरजोगुणक्षयेसति योगसुखंप्राप्नोतीत्याह प्रशांतमनसमिति एवमुक्तेनप्रकारेणशांतंरजोयस्यतम् अतएवप्रशांतंमनोयस्यतंएनंनिष्कल्मषंब्रह्मत्वप्राप्तंयोगिनंउत्तमंसुखंसमाधिसुखंस्वयमेवोपैति प्राप्नोति ॥ २७ ॥ ॥ ॥ ॥ ॥

ततश्चकृतार्थो भवतीत्याह युंजन्निति एवमनेनप्रकारेणसर्वदात्मानंमनोयुंजन्वशीकुर्वन्विशेषेणसर्वात्मनागतंकल्मषंयस्यसयोगीसुखेना नायासेनब्रह्मणःसंस्पर्शोऽविद्यानिवर्त्तकःसाक्षात्कारस्तदेवात्यंतंसर्वोत्तमंसुखमश्नुते जीवन्मुक्तोभवतीत्यर्थः॥ २८॥ ब्रह्मसाक्षात्कारमेवद र्शयति सर्वभूतस्थमिति योगेनाभ्यस्यमानेनयुक्तात्मासमाहितचित्तः सर्वत्रसमंब्रह्मैवपश्यतीतिसमदर्शनः स्वमात्मानमविद्याकृतदेहा दिपरिच्छेदशून्यंसर्वभूतेषुब्रह्मादिस्थावरांतेष्ववस्थितंपश्यति तानिचआत्मन्यभेदेनपश्यति॥२९॥एवंभूतात्मज्ञानस्यसर्वभूतात्मतया

युंजन्नेवं सदात्मानं योगी विगतकल्मषः ॥ सुखेन ब्रह्म संस्पर्शमत्यंतं सुखमश्नुते ॥ २८ ॥
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ॥ ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ॥ तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ॥ सर्वथा वर्त्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥

मदुपासनंमुख्यंकारणमित्याह यइति मांपरमेश्वरंसर्वत्रभूतमात्रेयःपश्यति सर्वंचप्राणिमात्रंमयियः पश्यति तस्याहंनप्रणश्यामि अद्द श्योनभवामि सचममादृश्योनभवति प्रत्यक्षोभूत्वाकृपादृष्ट्यातंविलोक्यानुगृह्णामीत्यर्थः ॥३०॥नचैवंभूतोविधिकिंकरःस्यादित्याह सर्व भूतस्थितमिति सर्वेषुभूतेषुस्थितंमामभेदमास्थितआश्रितोयोभजति सयोगीज्ञानीसन्सर्वथाकर्मत्यागेनापिवर्त्तमानोमय्येववर्त्ततेमु च्यते नतुभ्रश्यतीत्यर्थः ॥ ३१ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

एवंचमांभजतांयोगिनांमध्येसर्वभूतानुकंपीश्रेष्ठइत्याह आत्मौपम्येनेति आत्मौपम्येनस्वसादृश्येनयथाममसुखंप्रियंदुःखंचाप्रियंतथा
न्येषामपीतिसर्वत्रसमंपश्यन्सुखमेवसर्वेषांयोवांछति नतुकस्यापिदुःखम् सयोगीश्रेष्ठोममाभिमतइत्यर्थः॥३२॥उक्तलक्षणस्ययोगस्यासं
भवंमन्वानोऽर्जुनउवाच योऽयमिति साम्येनमनसोलयविक्षेपशून्यतयाकेवलात्माकारावस्थानेनयोऽयंयोगस्त्वया प्रोक्तएतस्ययोगस्य
स्थिरांदीर्घकालांस्थितिंनपश्यामि मनसश्चंचलत्वात्॥३३॥एतत्स्फुटयति चंचलमिति चंचलंस्वभावेनैवचपलं किंच प्रमाथिप्रमथनशीलं

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ॥ सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥ ॥ अर्जुन उवाच ॥ योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन॥ एतस्याहं न पश्यामि चंचलत्वात्स्थितिं स्थिराम्॥३३॥चंचलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ॥ तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥ ॥ श्रीभगवानुवाच ॥ असंशयं महाबाहो मनो दुर्निग्रहं चलम् ॥ अभ्यासेन तु कौंतेय वैराग्येण च गृह्यते ॥ ३५ ॥

देहेंद्रियक्षोभकमित्यर्थः किंच बलवद्विचारेणापिजेतुमशक्यम् किंच दृढंविषयवासनानुबद्धतयादुर्भेद्यम् अतोयथाकाशेदोधूयमानस्य
वायोःकुंभादिषुनिरोधनमशक्यम् तथातस्यमनसोऽपिनिग्रहंनिरोधंसुदुष्करंसर्वथाकर्तुमशक्यंमन्ये॥३४॥तदुक्तं चंचलत्वादिकमंगीकृत्यै
वमनोनिग्रहोपायंश्रीभगवानुवाच असंशयमिति चंचलत्वादिनामनोनिरोद्धुमशक्यमितियद्वदसि एतन्निःसंशयमेव तथापितुविषया
चिंतनपूर्वकमभ्यासेनपरमात्माकारप्रत्ययावृत्याविषयवैतृष्ण्येनचगृह्यते निगृह्यते अभ्यासेनलयप्रतिबंधाद्वैराग्येण चविक्षेपप्रतिबंधादु

परतवृत्तिकंसत्परमात्माकारेणपरिणतंतंतिष्ठतीत्यर्थः तदुक्तंयोगशास्त्रे मनसोवृत्तिशून्यस्यब्रह्माकारतयास्थितिः यासंप्रज्ञातनामासौसमा
धिरभिधीयतइति ॥३५॥ एतावांस्त्विहनिश्चयइत्याह असंयतात्मनेति असंयतात्माउक्तप्रकारेणाभ्यासवैराग्याभ्यामसंयतआत्माचित्तं
यस्यतेनपुरुषेणायंयोगोदुष्प्रापःप्राप्तुमशक्यः अभ्यासवैराग्याभ्यांवश्योवशवर्त्तीआत्माचित्तंयस्यतेनपुरुषेणपुनश्चानेनैवोपायेनप्रयत्नं
कुर्वता योगःप्राप्तुंशक्यः ॥३६॥अभ्यासवैराग्यभावेनकथंचिदप्राप्तसम्यग्ज्ञानःकिंफलमाप्नोतीत्यर्जुनउवाच अयतिरिति प्रथमंश्रद्धोपेतए
वयोगेप्रवृत्तःनतुमिथ्याचारतया ततःपरंतुअयतिः नसम्यग्यतते शिथिलाभ्यासइत्यर्थः तथायोगाच्चलितंमानसंविषयप्रवणंचित्तंयस्य

असंयतात्मना योगो दुष्प्राप इति मे मतिः ॥ वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥ ॥ अर्जुन
उवाच ॥ अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ॥ अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७॥
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ॥ अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८ ॥

मंदवैराग्यइत्यर्थः एवमभ्यासवैराग्यशैथिल्याद्योगस्यसंसिद्धिंफलंज्ञानमप्राप्यकांगतिंप्राप्नोति ॥३७॥ प्रश्नाभिप्रायंविवृणोति कच्चिदिति
कर्मणामीश्वरार्पितत्वादननुष्ठानाच्चनतावत्कर्मफलंस्वर्गादिकंप्राप्नोति योगानिष्पत्तेश्चनमोक्षंप्राप्नोति एवमुभयस्माद्भ्रष्टः अप्रतिष्ठोनि
राश्रयःअतएवब्रह्मणःप्राप्त्युपायेपथिमार्गेविमूढःसन्कच्चित्किंननश्यति किंवानश्यतीत्यर्थः नाशेदृष्टांतः यथाछिन्नमभ्रंपूर्वस्मादभ्राद्विश्लि
ष्टंअभ्रांतरंचाप्राप्तंसन्मध्यएवविलीयतेतद्वदित्यर्थः ॥ ३८ ॥ ॥ ॥ ॥ ॥ ॥ ॥

त्वयैवसर्वज्ञेनायंममसंदेहोनिरसनीयः त्वत्तोन्यस्त्वेतत्संदेहनिवर्त्तकोनास्तीत्याह एतन्मइति एतत्एनं छेत्तानिवर्त्तकः स्पष्टमन्यत्
॥३९॥अत्रोत्तरंश्रीभगवानुवाच पार्थेतिसार्द्धैश्चतुर्भिः इहलोकेनाशउभयभ्रंशात्पातित्यम् अमुत्रपरलोकेनाशोनरकप्राप्तिःतदुभयंतस्यना
स्त्येवयतःकल्याणकृच्छुभकारीकश्चिदपिदुर्गतिंनगच्छति अयंचशुभकारीश्रद्धयायोगेप्रवृत्तत्वात् तातेतिलोकरीत्योपलालयन्संबोधयति
॥४०॥तर्हिकिमसौप्राप्नोतीत्यपेक्षायामाह प्राप्येति पुण्यकारिणामश्वमेधादियाजिनांलोकान्प्राप्य तत्रशाश्वतीःसमाः बहून्संवत्सरानु

एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ॥ त्वदन्यः संशयस्यास्यच्छेत्ता न ह्युपपद्यते ॥३९॥ श्रीभगवा०॥
पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ॥ नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥ प्राप्य
पुण्यकृतांल्लोकानुषित्वा शाश्वतीः समाः ॥ शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥ अथ वा
योगिनामेव कुले भवति धीमताम् ॥ एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥

षित्वावाससुखमनुभूयशुचीनांसदाचाराणांश्रीमतांधनिनांगेहेसयोगभ्रष्टोजन्मप्राप्नोति ॥ ४१ ॥ अल्पकालाभ्यस्तयोगभ्रंशेगतिरियमु
क्ताचिराभ्यस्तयोगभ्रंशेतुपक्षांतरमाह अथेति योगनिष्ठानांधीमतांज्ञानिनामेवकुलेजायते नतुपूर्वोक्तानामनारूढयोगानांकुलेजायते ए
तज्जन्मस्तौति ईदृशंयज्जन्मएतद्धिलोकेदुर्लभतरम् मोक्षहेतुत्वात् ॥ ४२ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ततःकिमतआह तत्रेतिसार्द्धेन तत्रद्विःप्रकारेऽपिजन्मनिपूर्वदेहेभवंपौर्वदेहिकंतमेवब्रह्मविषययाबुद्ध्यासंयोगंलभते ततश्चभूयोऽधिकंसं सिद्धौमोक्षेप्रयत्नंकरोति ॥ ४३ ॥ तत्रहेतुः पूर्वेति तेनैवपूर्वदेहकृताभ्यासेनावशोऽपिकुतश्चिदंतरायादनिच्छन्नपिसंन्हियते विषयेभ्यःप रावर्त्यब्रह्मनिष्ठःक्रियते तदेवंपूर्वाभ्यासवशेनप्रयत्नंकुर्वन्शनैर्मुच्यतइतीममर्थंकैमुत्यन्यायेनस्फुटयति जिज्ञासुरितिसार्द्धेन योगस्य स्वरूपंजिज्ञासुरेवकेवलंनतुप्राप्तयोगः एवंभूतोयोगेप्रविष्टमात्रोऽपिपापवशाद्योगभ्रष्टोऽपिशब्दब्रह्मवेदमतिवर्त्तते वेदोक्तकर्मफलान्यति

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ॥ यतते च ततो भूयः संसिद्धौ कुरुनंदन ॥ ४३ ॥ पूर्वाभ्यासेन तेनैव न्हियते ह्यवशोऽपि सः ॥ जिज्ञासुरपि योगस्य शब्दब्रह्माऽतिवर्त्तते ॥ ४४ ॥ प्रयत्नाद्यतमा नस्तु योगी संशुद्धकिल्बिषः ॥ अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥ तपस्विभ्योऽ धिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ॥ कर्मिभ्यश्चाऽधिको योगी तस्माद्योगी भवार्जुन ॥ ४६ ॥

क्रामतितेभ्योऽधिकंफलंप्राप्यमुच्यतइत्यर्थः ॥ ४४॥ यदैवंमंदप्रयत्नोऽपियोगीपरांगतिंयाति तदायस्तुयोगीप्रयत्नादुत्तरोत्तरमधिकंयो गेयतमानोयत्नंकुर्वन्योगेनैवसंशुद्धकिल्बिषोविधूतपापः सोऽनेकेषुजन्मसूपचितेनयोगेनसंसिद्धः सम्यग्ज्ञानीभूत्वा ततःश्रेष्ठांगतिंयाती ति किंवक्तव्यमित्यर्थः ॥ ४५ ॥ यस्मादेवंतस्मात् तपस्विभ्यइति कृच्छ्रचांद्रायणादितपोनिष्ठेभ्योऽपि ज्ञानिभ्यः शास्त्रज्ञानवद्भ्योऽपि कर्मिभ्यः इष्टापूर्तादिकर्मकारिभ्योऽपियोगीश्रेष्ठोऽभिमतः तस्मात्त्वंयोगीभव ॥ ४६ ॥

योगिनामनियमादिपराणांमध्येमद्भक्तः श्रेष्ठइत्याह योगिनामिति मद्गतेनमध्यासक्तेनांतरात्मनामनसायोमांपरमेश्वरंवासुदेवंश्र

योगिनामपि सर्वेषां मद्गतेनांतरात्मना ॥ श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥ इति श्री मद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादेअभ्यासयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

द्धायुक्तःसन्भजते सयोगयुक्तेषुश्रेष्ठोममसंमतःअतोमद्भक्तोभवेतिभावः ॥४७॥ आत्मयोगमवोचद्योभक्तियोगशिरोमणिं तंवंदेपरमानंदं माधवंभक्तशेवधिम् ॥ १ ॥ इतिश्रीमद्भगवद्गीता सुबोधिनीटीकायांषष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ छ ॥

## इति सुबोधिनीयुतासु श्रीमद्भगवद्गीतासूपनिषत्सु प्रथममध्यायषट्कम् ।

॥ श्रीमल्लक्ष्मीवेङ्कटेशाभ्यां नमः ॥ विज्ञेयमात्मनस्तत्त्वं संयोगं समुदाहृतं ॥ भजनीयमथेदानीमैश्वरं रूपमीर्यते ॥ १ ॥ पूर्वाध्यायांतेमद्ग
तेनांतरात्मनायोमांभजतिसमेयुक्ततमोमतइत्युक्तं तत्रकीदृशस्त्वम् यस्यभक्तिःकर्तव्येत्यपेक्षायांस्वस्वरूपंनिरूपयिष्यन्श्रीभगवानुवाच
मय्यासक्तमनाइति मयिपरमेश्वरेआसक्तमभिनिविष्टंमनोयस्यसः मदाश्रयः अहमेवाश्रयोयस्यानन्यशरणः सन्योगंयुंजन्नभ्यसन्असंश
यंयथाभवत्येवंमांसमग्रंविभूतिबलैश्वर्यादिसहितंयथाज्ञास्यसितदिदंमयावक्ष्यमाणंशृणु ॥ १ ॥ वक्ष्यमाणंस्तौतिज्ञानमिति ज्ञानंशास्त्री

श्रीगणेशायनमः ॥ ॥ श्रीभगवानुवाच ॥ ॥ मय्यासक्तमनाः पार्थ योगं युंजन्मदाश्रयः ॥ असंशयं समग्रं
मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥ ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ॥ यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्य
मवशिष्यते ॥ २ ॥ मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ॥ यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

यंविज्ञानमनुभवस्तत्सहितम् इदंमद्विषयम् अशेषतःसाकल्येनवक्ष्यामि यज्ज्ञात्वाइहश्रेयोमार्गेवर्तमानस्यपुनरन्यज्ज्ञातव्यमवशिष्टंन
भवतितेनैवकृतार्थोभवतीत्यर्थः ॥२ ॥ मद्भक्तिंविनातुमज्ज्ञानंदुर्लभमित्याह मनुष्याणामिति असंख्यातानांजीवानांमध्येमनुष्यव्यतिरि
क्तानांश्रेयसिप्रवृत्तिरेवनास्ति मनुष्याणांतुसहस्रेषुमध्येकश्चिदेवप्रकृष्टपुण्यवशात्सिद्धयेआत्मज्ञानायप्रयतते प्रयत्नंकुर्वतामपिसहस्रेषुक
श्चिदेवप्रकृष्टपुण्यवशादात्मानंवेत्तितादृशानांचात्मज्ञानसिद्धानांसहस्रेषुकश्चिदेवमांपरमात्मानंमत्प्रसादेनतत्त्वतोवेत्तितदेवमतिदुर्लभम

पिमज्ज्ञानंतुभ्यमहंवक्ष्यामीत्यर्थः ॥ ३ ॥ एवंश्रोतारमभिमुखीकृत्येदानींप्रकृतिद्वारासृष्ट्यादिकर्तृत्वेनेश्वरतत्त्वंप्रतिज्ञातंनिरूपयिष्यन्
परापरभेदेनप्रकृतिद्वयमाह भूमिरितिद्वाभ्यांभूम्यादिशब्दैःपंचगंधादितन्मात्राण्युच्यंते मनःशब्देनतत्कारणभूतोऽहंकारः बुद्धिशब्दे
नतत्कारणभूतंमहत्तत्त्वं अहंकारशब्देनतत्कारणमविद्येत्येवमष्टधाभिन्ना यद्वा भूम्यादिशब्दैः पंचमहाभूतानिसूक्ष्मैःसहैकीकृत्यगृह्यं
ते अहंकारशब्देनैवाहंकारस्तेनैवतत्कार्याणींद्रियाण्यपिगृह्यंते बुद्धिरितिमहत्तत्त्वं मनःशब्देनमनसैवोन्नेयमव्यक्तरूपंप्रधानमित्यनेन

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ॥ अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ॥ जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥
एतद्योनीनि भूतानि सर्वाणीत्युपधारय ॥ अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥

प्रकारेणमेप्रकृतिर्मायाख्याशक्तिरष्टधाभिन्नाविभागंप्राप्ता चतुर्विंशतिभेदभिन्नाप्यष्टस्वेवांतर्भावविवक्षयाष्टधाभिन्नेत्युक्तम् तथाचवक्ष्य
माणक्षेत्राध्याये इमामेवप्रकृतिंचतुर्विंशतितत्त्वात्मनाप्रपंचयिष्यति महाभूतान्यहंकारोबुद्धिरव्यक्तमेवच इंद्रियाणिदशैकंचपंचचेंद्रिय
गोचराइति ॥ ४ ॥ अपरामिमांप्रकृतिमुपसंहरन्परांप्रकृतिमाह अपरेति अष्टधोक्तायाप्रकृतिः इयमपरानिकृष्टा जडत्वात्परार्थत्वा
च्च इतःसकाशात्परांप्रकृष्टांअन्यांजीवभूतांजीवस्वरूपांमेप्रकृतिंविद्धि जानीहि परत्वेहेतुःयथाचेतनयाक्षेत्रज्ञरूपयास्वकर्मद्वारेणेदंज
गद्धार्यते ॥ ५ ॥ अनयोःप्रकृतित्वंदर्शयन्स्वस्यतद्वारासृष्ट्यादिकारणत्वमाह एतदिति एतेक्षेत्रक्षेत्रज्ञरूपेप्रकृतीयोनीकारणभूतेयेषां

तान्येतद्योनीनिस्थावरजंगमात्मकानिसर्वाणिभूतानीत्युपधारयबुद्ध्यस्व तत्रजडाप्रकृतिर्देहरूपेणपरिणमते चेतनातुमदंशभूताभोक्तृ
त्वेनदेहेषुप्रविश्यस्वकर्मणातानिधारयति तेचमदीयेप्रकृतीमत्तःसंभूते अतोऽहमेवकृत्स्नस्यसप्रकृतिकस्यजगतःप्रभवः प्रकर्षेणभवत्य
स्मादितिप्रभवः परंकारणमहमित्यर्थः तथाप्रलीयतेऽनेनेतिप्रलयः संहर्त्ताप्यहमेवेतिभावः ॥ ६ ॥ यस्मादेवंतस्मान्मत्तइति मत्तःस
काशात्परतरंश्रेष्ठं जगतःसृष्टिसंहारयोः स्वतंत्रंकारणंकिंचिदपिनास्ति स्थितिहेतुरप्यहमेवेत्याह मयीति मयिसर्वमिदंजगत्प्रोतंग्रथि

मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ॥ मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥

रसोऽहमप्सु कौंतेय प्रभाऽस्मि शशिसूर्ययोः ॥ प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥

पुण्यो गंधः पृथिव्यां च तेजश्चास्मि विभावसौ ॥ जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥

तमाश्रितमित्यर्थः दृष्टांतःस्पष्टः ॥ ७ ॥ जगतःस्थितिहेतुत्वंप्रपंचयति रसोऽहमितिपंचभिः अप्सुरसोऽहंरसतन्मात्ररूपयाविभूत्यात
दाश्रयत्वेनाप्सुस्थितोऽहमित्यर्थः तथाशशिसूर्ययोःप्रभास्मिचंद्रेऽर्केचप्रकाशरूपयाविभूत्यातदाश्रयत्वेनास्थितोऽहमित्यर्थः एवमुत्तर
त्रापिद्रष्टव्यम् सर्वेषुवेदेषुवैखरीरूपेषुतन्मूलभूतःप्रणवओंकारोऽस्मि खेआकाशेशब्दतन्मात्ररूपोऽस्मि नृषुपुरुषेषुपौरुषमुद्यमोऽ
स्मि उद्यमेहिपुरुषास्तिष्ठंति ॥ ८ ॥ किंचपुण्यइति पुण्योऽविकृतोगंधःगंधतन्मात्रंपृथिव्याआश्रयभूतमहमित्यर्थः यद्वा विभूति

रूपेणाश्रयत्वस्यविवक्षितत्वात्सुरभिगंधस्यैवोत्कृष्टतयाविभूतित्वात्पुण्योगंधइत्युक्तम् तथाविभावसावग्नौयत्तेजःसहजादीप्तिस्तदहम् सर्वभूतेषुजीवनंप्राणधारणमायुरहमित्यर्थः तपस्विषुवानप्रस्थादिषुद्वंद्वसहनरूपंतपोऽस्मि ॥ ९ ॥ किंचबीजमिति सर्वेषांचराचराणांभूतानांबीजंसजातीयकार्योत्पादनसामर्थ्यंसनातनंनित्यमुत्तरोत्तरसर्वकार्येष्वनुस्यूतंतदेवबीजंमद्विभूतिंविद्धि नतुप्रतिव्यक्तिविनश्यत् तथाबुद्धिमतांबुद्धिःप्रज्ञाहमस्मि तेजस्विनांतेजःप्रागल्भ्यमहम् ॥ १० ॥ किंचबलमिति कामोऽप्राप्तेवस्तुन्यभिलाषोराजसः रागः



बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ॥ बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥
बलं बलवतामस्मि कामरागविवर्जितम् ॥ धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥
ये चैव सात्विका भावा राजसास्तामसाश्च ये ॥ मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥

पुनरभिलषितेऽर्थेप्राप्तेऽपिपुनरधिकेऽर्थेचित्तरंजनात्मकस्तृष्णापरपर्यायस्तामसस्ताभ्यांविवर्जितंबलवतांबलमस्मि सात्विकंस्वधर्मानुष्ठानसामर्थ्यमहमित्यर्थः स्वधर्मेणाविरुद्धःस्वदारेषुपुत्रोत्पत्तिमात्रोपयोगीकामोऽहम् ॥ ११ ॥ किंच येचेति येचान्येऽपिसात्विकाभावाः शमदमादयः राजसाश्चद्वेषदर्पादयः तामसाश्चशोकमोहादयः प्राणिनांस्वकर्मवशाज्जायंते तान्सर्वान्मत्तएवजातानितिविद्धि मदीयप्रकृतिगुणत्रयकार्यत्वात् एवमपितेष्वहंनवर्ते जीववत्तदधीनोऽहंनभवामीत्यर्थः तेतुमदधीनाःसंतोमयिवर्तंतइत्यर्थः ॥ १२ ॥

एवंभूतंत्वांपरमेश्वरमयंजनः किमितिनजानातीत्यतआहात्रिभिरिति त्रिभिस्त्रिविधैरेभिःपूर्वोक्तैः गुणमयैःकामलोभादिभिर्गुणविकारैः भावैःस्वभावैर्मोहितमिदंजगत् अतोमांनाभिजानाति कथंभूतं एभ्योभावेभ्यःपरम् एभिरसंस्पृष्टम् एतेषांनियंतारम् अतएवाव्ययं निर्विकारमित्यर्थः ॥ १३ ॥ केतर्हित्वांजानंतीत्यतआह दैवीहीति दैवीअलौकिकी अत्यद्भुतेत्यर्थः गुणमयीसत्वादिगुणविकारात्मिका ममपरमेश्वरस्यशक्तिर्मायादुरत्ययादुस्तरा हिप्रसिद्धमेतत् तथापियेमामेवेत्येवकारेणाव्यभिचारिण्याभक्त्याप्रपद्यंतेभजंति तेमायामे

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ॥ मोहितं नाभिजानाति मामेभ्यः परमव्ययं ॥ १३ ॥
दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥ मामेव ये प्रपद्यंते मायामेतां तरंति ते ॥ १४ ॥
न मां दुष्कृतिनो मूढाः प्रपद्यंते नराधमाः ॥ माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥

तांदुस्तरामपितरंति ततोमांजानंतीतिभावः ॥ १४ ॥ किमितितर्हिसर्वेत्वामेवनभजंतितत्राह नमामिति नरेषुयेऽधमास्तेमांनप्रपद्यंतेनभजंति अधमत्वेहेतुः मूढाः विवेकशून्याः तत्कुतः दुष्कृतिनःपापशीलाः अतोमाययापहृतंनिरस्तंशास्त्राचार्योपदेशाभ्यां जातमपिज्ञानंयेषांतेतथा अतएव दंभोदर्पोऽभिमानश्चक्रोधःपारुष्यमेवचेत्यादिनावक्ष्यमाणमासुरंभावंस्वभावंप्राप्ताःसंतोनमांभजंति ॥ १५ ॥ सुकृतिनस्तुमांभजंतितेचसुकृततारतम्येनचतुर्विधाइत्याह चतुर्विधाइति पूर्वजन्मसुयेकृतपुण्याजनास्तेमांभजंति तेतुचतु

विंधाः आर्त्तोरोगाद्यभिभूतः सयदिपूर्वंकृतपुण्यस्तर्हिमांभजति अन्यथाक्षुद्रदेवताभजनेनसंसरति एवमुत्तरत्रापिद्रष्टव्यम् जिज्ञासु
रात्मज्ञानेच्छुः अर्थार्थीअत्रवापरत्रवाभोगसाधनभूतार्थलिप्सुः ज्ञानीचआत्मवित् ॥ १६ ॥ एतेषांमध्येज्ञानीश्रेष्ठइत्याह तेषामि
ति तेषांमध्येज्ञानीविशिष्टः तत्रहेतवः नित्ययुक्तःसदामन्निष्ठः एकस्मिन्मय्येवभक्तिर्यस्यसः ज्ञानिनोदेहाद्यभिमानाभावेनचित्तविक्षे

चतुर्विधा भजंते मां जनाः सुकृतिनोऽर्जुन ॥ आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥ प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥ आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥

पाभावान्नित्ययुक्तत्वमेकांतभक्तित्वंचसंभवतिनान्यस्य अतएवहितस्याहमत्यंतंप्रियः सचमम तस्मादेतैर्नित्ययुक्तत्वादिभिश्चतुर्भिर्हे
तुभिःसउत्तमइत्यर्थः ॥ १७ ॥ तर्हिकिमितरेत्रयस्त्वद्भक्ताःसंसरंतिनहिनहीत्याह उदाराइति सर्वेप्येतेउदाराःमहांतः मोक्षभाजए
वेत्यर्थः ज्ञानीपुनरात्मैवेतिमेमतंनिश्चयः हियस्मात्सज्ञानीयुक्तात्मामदेकचित्तःसन् नविद्यतेउत्तमायस्यास्तामनुत्तमांसर्वोत्तमांगतिं
मामेवास्थितः आश्रितवान् मद्व्यतिरिक्तमन्यत्फलंनमन्यतइत्यर्थः ॥ १८ ॥ ॥ ॥ ॥

एवंभूतोमद्भक्तोऽतिदुर्लभइत्याह बहूनामिति बहूनांजन्मनांकिंचित्किंचित्पुण्योपचयेनांतेचरमेजन्मनिज्ञानवान्सन्सर्वमिदंचराचरंवासु
देवएवेतिसर्वात्मदृष्ट्यामांप्रपद्यते भजति अतःसमहात्माऽपरिच्छिन्नदृष्टिःसुदुर्लभः ॥ १९ ॥ तदेवंकामिनोऽपिसंतःकामप्राप्तयेपरमे
श्वरंमामेवभजंति तेकामान्प्राप्यशनैर्मुच्यंतइत्युक्तम् येत्वत्यंतंराजसास्तामसाश्चकामाभिभूताःक्षुद्रदेवताःसेवंते तेसंसरंतीत्याह कामै

बहूनां जन्मनामंते ज्ञानवान्मां प्रपद्यते ॥ वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥
कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यंतेऽन्यदेवताः ॥ तंतं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥
योयो यांयां तनुं भक्तः श्रद्धयार्चितुमिच्छति ॥ तस्यतस्याचलां श्रद्धां तामेव विधाम्यहम् ॥ २१ ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते ॥ लभते च ततः कामान्मयैव विहितान्हितान् ॥ २२ ॥

रितिचतुर्भिः येतुतैस्तैःपुत्रकीर्तिशत्रुजयादिविषयैःकामैरपहृतविवेकाःसंतः अन्याःक्षुद्राःभूतप्रेतयक्षादिदेवताभजंति किंकृत्वा तत्त
द्देवताराधनेयोयोनियमउपवासादिलक्षणस्तंतंनियमंस्वीकृत्य तत्रापिस्वकीययाप्रकृत्यापूर्वाभ्यासवासनया नियताःसंतोदेवताविशेषं
भजंति ॥ २० ॥ योयोयामिति तेषांमध्ये योयोभक्तः यांयांतनुंदेवतारूपां मदीयामेवमूर्तिंश्रद्धयार्चितुमिच्छतिप्रवर्तते तस्य
तस्यभक्तस्यतत्तन्मूर्तिविषयांतामेवश्रद्धामचलांदृढामहमंतर्यामीविदधामिकरोमि ॥ २१ ॥ ततश्चसतयेति सभक्तस्तयादृढयाश्रद्ध

यातस्यास्तनोराराधनमीहते करोति ततश्चयेसंकल्पिताःकामास्तान्कामानृततोदेवताविशेषाँल्लभते किंतु मयैवतत्तद्देवतांतर्यामिणा विहितान्निर्मितान् हिस्फुटमेवतत्तद्देवतानामपिमदधीनत्वान्ममूर्तित्वाच्चेत्यर्थः ॥ २२ ॥ तदेवं यद्यपिसर्वाअपिदेवताममैवमूर्तयः अतस्तदाराधनमपिवस्तुतोमदाराधनमेव तत्तत्फलदातापिचाहमेव तथापिसाक्षान्मद्भक्तानांचतेषांफलवैषम्यंभवतीत्याह अंतवत्त्विति अल्पमेधसांपरिच्छिन्नदृष्टीनांमयादत्तमपितत्फलमन्तवत् विनाशिभवति तदेवाह देवान्यजंतीतिदेवयजः तेदेवानंतवतोयांति मद्भक्तास्तुमांअनाद्यंतंपरमानंदंप्राप्नुवंति ॥ २२ ॥ ननुचसमानेप्रयासेमहतिचफलविशेषेसतिसर्वेऽपि किमितिदेवतांतरंहित्वात्वामेवन

अंतवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ॥ देवान्देवयजो यांति मद्भक्ता यांति मामपि ॥ २३ ॥
अव्यक्तं व्यक्तिमापन्नं मन्यंते मामबुद्धयः ॥ परं भावमजानंतो ममाव्ययमनुत्तमम् ॥ २४ ॥
नाहं प्रकाशः सर्वस्य योगमायासमावृतः ॥ मूढोऽयं नाभिजानाति लोको मामजमव्ययं ॥ २५ ॥

भजंतितत्राह अव्यक्तमिति अव्यक्तंप्रपंचातीतंमांव्यक्तिंमनुष्यमत्स्यकूर्मादिभावंप्राप्तमल्पबुद्धयोमन्यंते तत्रहेतुः ममपरंभावंस्वरूपमजानंतः कथंभूतम् अव्ययंनित्यं नविद्यतेउत्तमोयस्मात्तंभावं अतोजगद्रक्षार्थंलीलयाविष्कृतनानाविशुद्धोर्जितसत्वमूर्तिंमांपरमेश्वरंस्वकर्मनिर्मितभौतिकदेहं देवतांतरसमंपश्यंतोमंदमतयोमांनातिवाद्रियंते प्रत्युतक्षिप्रफलन्देवतांतरमेवभजंति तेचोक्तप्रकारेणअंतवत्फलंप्राप्नुवंतीत्यर्थः ॥ २४ ॥ तेषांस्वाज्ञानेहेतुमाह नाहमिति सर्वस्यलोकस्यनाहंप्रकाशः प्रकटोनभवामि किंतुमद्भक्तानामेव य

तोयोगमाययासमावृतः योगोयुक्तिः मदीयःकोऽप्यचिंत्यप्रज्ञाविलासः सएवमाया अघटमानघटनाचातुर्यं अनयासंच्छन्नः अतएव मत्स्वरूपज्ञानेमूढःसन्नयंलोकः अजमव्ययंचमांनजानाति ॥ २५ ॥ सर्वोत्तमंमत्स्वरूपंअजानंतइत्युक्तम् तदेवस्वस्यसर्वोत्तमत्वम नावृतज्ञानशक्तित्वेनदर्शयन्नन्येषामज्ञानमेवाह वेदेति समतीतानिविनष्टानिवर्त्तमानानिभावीनिचत्रिकालवर्त्तीनिभूतानिस्थावरजंगमा निसर्वाण्यहंवेद जानामि मायाश्रयत्वान्मम तस्याःस्वाश्रयव्यामोहकत्वाभावातइतिप्रसिद्धम् मांतुनकोपिवेत्ति मन्मायामोहितत्वात्

वेदाहं समतीतानि वर्त्तमानानि चार्जुन ॥ भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥
इच्छाद्वेषसमुत्थेन द्वंद्वमोहेन भारत ॥ सर्वभूतानि संमोहं सर्गे यांति परंतप ॥ २७ ॥
येषां त्वंतगतं पापं जनानां पुण्यकर्मणाम् ॥ ते द्वंद्वमोहनिर्मुक्ता भजंते मां दृढव्रताः ॥ २८ ॥

प्रसिद्धंहिलोकेमायायाःस्वाश्रयाधीनत्वमन्यमोहकत्वंच ॥ २६ ॥ तदेवंमायाविषयत्वेनजीवानांपरमेश्वराज्ञानमुक्तम् तस्यैवाज्ञानस्यदृ ढत्वेकारणमाह इच्छाद्वेषसमुत्थेनेति सृज्यतइतिसर्गः सर्गेस्थूलदेहोत्पत्तौसत्यां तदनुकूलेइच्छा तत्प्रतिकूलेचद्वेषः ताभ्यांसमुत्थःस मुद्भूतोयःशीतोष्णसुखदुःखादिद्वंद्वनिमित्तोमोहोविवेकभ्रंशःतेनसर्वभूतानिसंमोहंचअहमेवसुखीदुःखीचेतिगाढतरमभिनिवेशंप्राप्नुवंतिअ तस्तानिमज्ज्ञानाभावान्नमांजानंतीतिभावः ॥ २७ ॥ कुतस्तर्हिकेचनत्वांभजंतोदृश्यंतेतत्राह येषामिति येषांतुपुण्याचरणशीलानां

सर्वप्रतिबंधकंपापंअंतगतम् नष्टम् तेद्वंद्वनिमित्तेनमोहेननिर्मुक्ताः दृढव्रताएकांतिनःसंतोमांभजंते ॥ २८ ॥ एवंचमांभजंतस्तेसर्वं विज्ञेयंविज्ञायकृतार्थाभवंतीत्याह जरामरणेति जरामरणयोर्निरासार्थंमामाश्रित्ययेप्रयतंतेतेतत्परंब्रह्मविदुःकृत्स्नमध्यात्मंचविदुः येनतत्प्राप्तव्यंतंदेहादिव्यतिरिक्तंशुद्धमात्मानंचजानंतीत्यर्थः तत्साधनभूतमखिलंसरहस्यंकर्मचजानंति ॥ २९ ॥ नचैवंभूतानांयोगभ्रंश

जरामरणमोक्षाय मामाश्रित्य यतंति ये ॥ ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥
साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ॥ प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥
इति श्रीमद्भगव० ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥ ७ ॥

शंकापीत्याह साधिभूताधिदैवमिति अधिभूतादिशब्दानामर्थंभगवानेवानंतराध्यायेव्याख्यास्यति अधिभूतेनाधिदैवेनचसहाधियज्ञेनचसहितंयेमांभजंति तेयुक्तचेतसःमय्यासक्तमनसः प्रयाणकालेऽपिमरणसमयेऽपिमांविदुर्जानंति नतुतदापिव्याकुलीभूयमांविस्मरंति अतोमद्भक्तानांनयोगभ्रंशशंकेत्यर्थः ॥ ३० ॥ कृष्णभक्तैरयत्नेनब्रह्मज्ञानमवाप्यते ॥ इतिविज्ञानयोगाख्येसप्तमेसंप्रकाशितम् ॥ १ ॥ इतिसुबोधिन्यांटीकायां सप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ छ ॥

ब्रह्मकर्माधिभूतादिविदुःकृष्णैकचेतसः ॥ इत्युक्तंब्रह्मकर्मादिस्पष्टमष्टमउच्यते ॥ १ ॥ पूर्वाध्यायांतेभगवतोपक्षिप्तानांब्रह्माध्यात्मादिस
प्तानांपदार्थानांतत्त्वंजिज्ञासुरर्जुनउवाच किंतद्ब्रह्मेतिद्वाभ्याम् स्पष्टोर्थः ॥ १ ॥ किंच अधियज्ञइतिअत्रदेहेयोयज्ञोवर्त्ततेतस्मिन्को
ऽधियज्ञः अधिष्ठाताप्रयोजकः फलदाताचकइत्यर्थः स्वरूपंपृष्ट्वाअधिष्ठानप्रकारंपृच्छति कथंकेनप्रकारेणासावस्मिन्देहेस्थितोयज्ञ
मधितिष्ठतीत्यर्थः यज्ञग्रहणंसर्वकर्मणामुपलक्षणार्थकम् अंतकालेचनियतचित्तैःपुरुषैःकथंकेनोपायेनज्ञेयोऽसि ॥ २ ॥ प्रश्नक्रमेणोत्त

॥ अर्जुन उवाच ॥ किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ॥ अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥

॥ १ ॥ अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ॥ प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

श्रीभगवानुवाच ॥ अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ॥ भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

रंश्रीभगवानुवाच अक्षरमितित्रिभिः नक्षरतिनचलतीत्यक्षरम् ननुजीवोऽप्यक्षरस्तत्राह परमंयदक्षरंजगतांमूलकारणंतद्ब्रह्म एत
द्वैतदक्षरंगार्गिब्राह्मणाअभिवदंतीतिश्रुतेः स्वस्यैवब्रह्मणएवांशतोजीवरूपेणभवनंस्वभावः सएवात्मानंदेहमधिकृत्यभोक्तृत्वेनवर्त्तमानोऽ
ध्यात्मशब्देनोच्यतइत्यर्थः भूतानांजरायुजादीनांभावउत्पत्तिः उद्भवश्चउत्कृष्टत्वेनभवनमुद्भवः आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइ
त्युक्तक्रमेणवृद्धिः तौभूतभावोद्भवौकरोतियः विसर्गःदेवतोद्देशेनद्रव्यत्यागरूपोयज्ञः सर्वकर्मणामुपलक्षणमेतत्सकर्मशब्दवाच्यः ॥ ३ ॥

किंच अधिभूतमिति क्षरोविनश्वरोभावोदेहादिपदार्थोंभूतंप्राणिमात्रमधिकृत्यभवतीत्यधिभूतमुच्यते पुरुषोवैराजःसूर्यमंडलमध्यव
र्तीस्वांशभूतसर्वदेवतानामधिपतिरधिदैवतमुच्यते अधिदैवतमधिष्ठात्रीदेवता सवैशरीरीप्रथमःसवैपुरुषउच्यते आदिकर्त्तासभूता
नांब्रह्माग्रेसमवर्त्ततेतिश्रुतेः अत्रास्मिन्देहेंऽतर्यामित्वेनस्थितोऽहमेवाधियज्ञोयज्ञाधिष्ठात्रीदेवता यज्ञादिकर्मप्रवर्त्तकस्तत्फलदाताच
कथमित्यस्योत्तरमनेनैवोक्तंद्रष्टव्यम् अंतर्यामिणोऽसंगत्वादिभिर्गुणैर्जीववैलक्षण्येनदेहांतर्वर्त्तित्वस्यप्रसिद्धत्वात् तथाचश्रुतिः द्वासु

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ॥ अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥
अंतकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ॥ यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥
यंयं वापि स्मरन् भावं त्यजत्यंते कलेवरम् ॥ तं तमेवैति कौंतेय सदा तद्भावभावितः ॥ ६ ॥

पर्णासयुजासखायासमानंवृक्षंपरिषस्वजाते तयोरन्यः पिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभिचाकशीतीति देहभृतांमध्येश्रेष्ठइतिसंबोधयन्
त्वमप्येवंभूतमंतर्यामिणंपराधीनस्वप्रवृत्तिनिवृत्त्यन्वयव्यतिरेकाभ्यांबोद्धुमर्हसीतिसूचयति ॥ ४ ॥ प्रयाणकालेचकथंज्ञेयोऽसीत्यनेन
पृष्टमंतकालज्ञानोपायंतत्फलंचदर्शयति अंतकालइति मामेवोक्तलक्षणमंतर्यामिरूपंपरमेश्वरंस्मरन्देहंत्यक्त्वायःप्रकर्षेणार्चिरादिमार्गे
णयाति समद्भावंमद्रूपतांयाति अत्रचसंशयोनास्ति स्मरणंज्ञानोपायोमद्भावापत्तिश्चफलमित्यर्थः ॥ ५ ॥ नकेवलंमांस्मरन्मद्भावंप्रा

प्नोतीतिनियमः किंतर्हि यंयमिति यंयंभावंदेवतांतरंवान्यमपिवाअंतकालेस्मरन्देहंत्यजति तंतमेवस्मर्यमाणंभावंप्राप्नोति अंतकालेभाव विशेषस्मरणेहेतुः सदेति सर्वदातस्यभावोभावनानुचिंतनंतेनभावितोवासितचित्तः ॥ ६॥ तस्मादिति यस्मा त्पूर्ववासनैवांतकालेस्मृतिहे तुः नहितदाविवशस्यस्मरणोद्यमः संभवति तस्मात्सर्वदामामनुस्मरानुचिंतय संततस्मरणंचचित्तशुद्धिंविनानभवति अतोयुद्धचचयुद्धच स्वचित्तशुद्धचर्थंयुद्धादिकंस्वधर्मंचानुतिष्ठेत्यर्थः एवंमय्यर्पितंमनः संकल्पात्मकंबुद्धिश्चव्यवसायात्मिकायेनत्वया सत्वंमामेवप्राप्स्यसि

तस्मात्सर्वेषु कालेषु मामनुस्मर युद्धच च ॥ मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥ अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ॥ परमं पुरुषं दिव्यं याति पार्थानुचिंतयन् ॥ ८ ॥ कविंपुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ॥ सर्वस्यधातारमचिंत्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ९ ॥

असंशयः संशयोऽत्रनास्ति ॥७॥ संततस्मरणस्यचाभ्यासोंऽतरंगसाधनमितिदर्शयन्नाह अभ्यासेति अभ्यासः सजातीयप्रत्ययप्रवाहः स एवयोगउपायस्तेनयुक्तेनैकाग्रेण अतएवनान्यंविषयंगंतुंशीलंयस्यतेनचेतसादिव्यंद्योतनात्मकंपरमंपुरुषंपरमेश्वरमनुचिंतयन्हेपार्थत मेवयातीति॥८॥पुनरप्यनुचिंतनीयंपुरुषंविशिनष्टि कविमितिद्वाभ्याम् कविंसर्वज्ञम् सर्वविद्यानिर्मातारं पुराणमनादिसिद्धम् अनुशासि तारंनियंतारम् अणोः सूक्ष्मादप्यणीयांसमतिसूक्ष्मम् आकाशकालदिग्भ्योप्यतिसूक्ष्मतरम् सर्वस्यधातारंपोषकम् अपरिमितमहिमत्वा

दचिंत्यरूपमम्मलीमसयोर्मनोबुद्ध्योरगोचरं आदित्यवत्स्वपरप्रकाशात्मकोवर्णःस्वरूपंयस्यतम् तमसःप्रकृतेःपरस्ताद्वर्तमानम् वेदाह
मेतंपुरुषंमहांतमादित्यवर्णंतमसःपरस्तादितिश्रुतेः ॥ ९ ॥ सप्रपंचप्रकृतिंभित्त्वायस्तिष्ठति एवंभूतंपुरुषमंतकालेभक्तियुक्तोनिश्च
लेनविक्षेपरहितेनमनसायोऽनुस्मरेत् मनोनैश्चल्येहेतुः योगबलेनसम्यक्सुषुम्नामार्गेणभ्रुवोर्मध्येप्राणमावेश्येति सतंपरंपुरुषंपरा
त्मस्वरूपं दिव्यंद्योतनात्मकंप्राप्नोति ॥ १० ॥ केवलादभ्यासयोगादपिप्रणवाधारमभ्यासमंतरंगंविधित्सुःप्रतिजानीते यदक्षर

प्रयाणकाले मनसाचलेन भक्त्या युक्तो योगबलेन चैव ॥ भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्स तं परं पुरुषमुपैति
दिव्यं ॥ १० ॥ यदक्षरं वेदविदो वदंति विशंति यद्यतयो वीतरागाः ॥ यदिच्छंतो ब्रह्मचर्यं चरंति तत्ते पदं संग्रहेण
प्रवक्ष्य ॥ ११ ॥ सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ॥ मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणां ॥ १२ ॥

मितियदक्षरंवेदांतज्ञावदंति एतस्यवाक्षरस्यप्रशासनेगार्गिसूर्याचंद्रमसौविधृतौतिष्ठतइतिश्रुतेः वीतोरागोयेभ्यस्तेवीतरागायतयः
प्रयत्नवंतोयद्विशंति यच्चज्ञातुमिच्छंतोगुरुकुलेब्रह्मचर्यंचरंति तत्तेतुभ्यं पदंपद्यतेगम्यतेइतिपदंप्राप्यंसंग्रहेणसंक्षेपेणप्रवक्ष्येतत्प्रा
प्त्युपायंकथयिष्यामीत्यर्थः ॥ ११ ॥ प्रतिज्ञातमुपायंसांगमाह सर्वेतिद्वाभ्याम् सर्वाणींद्रियद्वाराणिसंयम्यप्रत्याहृत्यचक्षुरादि
भिर्बाह्यविषयग्रहणमकुर्वन्नित्यर्थः मनश्चहृदिनिरुद्ध्यबाह्यविषयस्मरणमकुर्वन्नित्यर्थः मूर्ध्निभ्रुवोर्मध्येप्राणमाधाययोगस्यधारणांस्थैर्यं

मास्थितआश्रितवान्सन् ॥ १२ ॥ ओमिति ओमित्येकंयदक्षरंतदेव ब्रह्मवाचकत्वाद्वाप्रतिमादिवद्ब्रह्मप्रतीकत्वाद्वाब्रह्म तद्व्याहर
न्नुच्चारयन् तद्वाच्यंचमामनुस्मरन्नेवदेहंत्यजन्यःप्रकर्षेणयाति अर्चिरादिमार्गेण सपरमांश्रेष्ठांमद्गतिंयातिप्राप्नोति ॥ १३ ॥ एवं
चांतकालेधारणयामत्प्राप्तिर्नित्याभ्यासवशतएवभवति नान्यस्येतिपूर्वोक्तस्यसमाहितस्याहंसुखेनलभ्योऽस्मि नान्यस्य ॥ १४ ॥
यद्यप्येवंत्वंसुलभोऽसिततःकिमतआह मामिति उक्तलक्षणामहात्मानोमद्भक्तामांप्राप्यपुनर्दुःखाश्रयमनित्यंचजन्मनप्राप्नुवंति यतस्ते

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ॥ यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १३ ॥
अनन्यचेताः सततं यो मां स्मरति नित्यशः ॥ तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥
मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ॥ नाप्नुवंति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥
आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ॥ मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥

परमांसम्यक्सिद्धिंमोक्षमेवप्राप्ताः पुनर्जन्मदुःखानांचालयंस्थानंतेमामुपेत्यनप्राप्नुवंतीतिवा ॥ १५ ॥ एतदेवसर्वेष्वपिलोकेषुपुनरा
वृत्तिंदर्शयन्निर्धारयति आब्रह्मेति ब्रह्मणोभुवनंवासस्थानंब्रह्मलोकस्तमभिव्याप्य सर्वेलोकाःपुनरावर्त्तनशीलाः ब्रह्मलोकस्यापिविना
शित्वात्तत्प्राप्तानामनुत्पन्नज्ञानानामवश्यंभाविपुनर्जन्म यएवंक्रममुक्तिफलाभिरुपासनाभिर्ब्रह्मलोकंप्राप्ताः तेषामेवतत्रोत्पन्नज्ञानानां

ब्रह्मणासहमोक्षोनान्येषाम् तथाच ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे परस्यांतेकृतात्मानःप्रविशंतिपरंपदम् परस्यांतेब्रह्मणःपरमायुषोंऽते
कृतात्मानोब्रह्मभावापादितमनोवृत्तयः कर्मद्वारेणयेषांब्रह्मलोकप्राप्तिस्तेषांनमोक्षइतिपरिनिष्ठितिः मामुपेत्यवर्त्तमानानांतु पुनर्जन्मना
स्त्येवेत्यर्थः ॥ १६ ॥ ननुच तपस्विनोदानशीलावीतरागास्तितिक्षवः त्रिलोक्याउपरिस्थानंलभंतेशोकवर्जितमित्यादिपुराणवाक्यैस्त्रि
लोक्याःसकाशान्महर्लोकादीनामुत्कृष्टत्वंगम्यते विनाशित्वेचसर्वेषामवैशिष्ट्येकथमसौविशेषः स्यादित्याशंक्य बहुकल्पकालावस्था
यित्वनिमित्तोऽसौविशेषइत्याशयेनस्वमानेनशतवर्षायुषोब्रह्मणोऽहन्यहनित्रिलोक्याउत्पत्तिर्निशिनिशिचलयोभवतीतिदर्शयिष्यन्ब्रह्म

सहस्रयुगपर्यंतमहर्यद्ब्रह्मणो विदुः ॥ रात्रिं युगसहस्रांतां तेऽहोरात्रविदो जनाः ॥ १७ ॥

णोऽहोरात्रयोःप्रमाणमाह सहस्रेति सहस्रंयुगानिपर्यंतोऽवसानंयस्यतद्ब्रह्मणोयदहस्तद्येविदुःयुगसहस्रंअंतोयस्यास्तांरात्रिंच योगब
लेनयेविदुस्तएवसर्वज्ञाजनाअहोरात्रविदः येषांतुकेवलंचंद्रार्कगत्यैवज्ञानंतेतथाअहोरात्रविदोनभवंति अल्पदर्शित्वात् युगशब्देनात्र
चतुर्युगमभिप्रेतम् चतुर्युगसहस्रंतुब्रह्मणोदिनमुच्यतइतिविष्णुपुराणोक्तेः ब्रह्मणइतिचमहर्लोकादिवासिनामप्युपलक्षणार्थम् तत्रायं
कालगणनाप्रकारः मनुष्याणांयद्वर्षंतद्देवानामहोरात्रं तादृशैःअहोरात्रैः पक्षमासादिकल्पनयाद्वादशभिर्वर्षसहस्रैश्चतुर्युगंभवति च
तुर्युगसहस्रंचब्रह्मणोदिनम् तावत्परिमाणैवरात्रिः तादृशैश्चाहोरात्रैःपक्षमासादिक्रमेणवर्षशतंब्रह्मणःपरमायुरिति ॥ १७ ॥

ततःकिमतआह अव्यक्तादिति कार्यस्याव्यक्तंरूपंकारणात्मकंतस्मादव्यक्तात्कारणरूपात् व्यज्यंतेअभिव्यज्यंतइतिव्यक्तयश्चरा
चराणिभूतानिप्रादुर्भवंति कदा अहरागमेब्रह्मणोदिनस्योपक्रमे तथारात्रेरागमेब्रह्मशयने तस्मिन्नेवाव्यक्तसंज्ञकेकारणरूपेप्रलयंयां
तियद्वाऽतेहोरात्रविदइत्येतन्नविधीयते किंतु तेप्रसिद्धाअहोरात्रविदोजनायद्ब्रह्मणोऽहर्विदुस्तस्याह्नआगमेअव्यक्ताद्व्यक्तयःप्रभवंति
यांचरात्रिंविदुस्तस्यारात्रेरागमेप्रलीयंतेइतिद्वयोरन्वयः ॥ १८ ॥ तत्रचकृतनाशाकृताभ्यागमशंकांवारयन्वैराग्यार्थंसृष्टिप्रलय

अव्यक्ताद्व्यक्तयः सर्वाः प्रभवंत्यहरागमे ॥ रात्र्यागमे प्रलीयंते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥
भूतग्रामः स एवायं भूत्वाभूत्वा प्रलीयते ॥ रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥
परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ॥ यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

प्रवाहस्याविच्छेदंदर्शयति भूतेति भूतानांचराचरप्राणिनांग्रामःसमूहोयःप्रागासीत्सएवायमहरागमेभूत्वारात्रेरागमेप्रलीयते प्रलीयपु
नरप्यहरागमेऽवशः कर्मादिपरतंत्रःप्रभवति नान्यइत्यर्थः ॥ १९ ॥ लोकानामनित्यत्वंप्रपंच्यपरमेश्वरस्वरूपस्यनित्यत्वंप्रपंचयाति प
रइतिद्वाभ्याम् तस्माच्चराचरकारणभूतादव्यक्तात्परः तस्यापिकारणभूतोयोऽन्यस्तद्विलक्षणोऽव्यक्तः चक्षुराद्यगोचरोभावः सनातनः
अनादिः सतु सर्वेषुकार्यकारणलक्षणेषुभूतेषुनश्यत्स्वपि नविनश्यति ॥ २० ॥

अविनाशेप्रमाणंदर्शयन्नाह अव्यक्तइतियोभावः अव्यक्तोऽतींद्रियोऽक्षरःप्रवेशनाशशून्यइति तथाक्षरात्संभवतीदंविश्वमित्यादिश्रु तिष्वक्षरइत्युक्तः तंपरमांगतिंगम्यंपुरुषार्थमाहुःपुरुषान्नपरंकिंचित्साकाष्ठासापरागतिरित्यादिश्रुतयः परमगतित्वमेवाह यंप्राप्यपुनर्न निवर्त्तंतइति तच्चममैवधामस्वरूपं ममैवेत्युपचारेषष्ठी राहोः शिरइतिवत् अतोऽहमेवपरमागतिरित्यर्थः ॥ २१ ॥ तत्प्राप्तौचभ क्तिरंतरंगोपायइत्युक्तमेवाह पुरुषइति सचाहंपरःपुरुषः अनन्यया नविद्यते अन्यःशरणत्वेनयस्यास्तया एकांतभक्त्यैवलभ्योनान्य

अव्यक्तोऽक्षरइत्युक्तस्तमाहुः परमां गतिम् ॥ यं प्राप्य न निवर्तंते तद्धाम परमं मम ॥ २१ ॥
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥ यस्यांतस्थानि भूतानि येन सर्वमिदं ततं ॥ २२ ॥
यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ॥ प्रयाता यांति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥

था परत्वमेवाह यस्यकारणभूतस्यांतर्मध्येभूतानिस्थितानि येनचकारणभूतेनसर्वमिदंजगत्ततंव्याप्तम् ॥ २२ ॥ तदेवंपरमेश्वरो पासकाःतत्पदंप्राप्यननिवर्त्तंते अन्येत्वावर्त्तंतइत्युक्तम् तत्रकेनमार्गेणगतानावर्त्तंतेकेनवागताश्चावर्त्तंतइत्यपेक्षायामाह यत्रेति यत्रय स्मिन्कालेप्रयातायोगिनोऽनावृत्तिंयांतियस्मिंश्चकालेप्रयाताआवृत्तिंयांति तंकालंवक्ष्यामीत्यन्वयः अत्रचरश्म्यनुसारी अतश्चायनेऽ पिदक्षिणइतिसूचितन्यायेनोत्तरायणादिकालविशेषस्मरणस्यविवक्षितत्वात् कालशब्देनकालाभिमानिनीभिरातिवाहिकीभिर्देवताभिः

प्राप्योमार्गउपलक्ष्यते अतोऽयमर्थः यस्मिन्कालाभिमानिदेवतोपलक्षितेमार्गेप्रयातायोगिनउपासकाः कर्मिणश्चयथाक्रममनावृत्तिमा
वृत्तिंचयांतितंकालाभिमानिदेवतोपलक्षितंमार्गंकथयिष्यामीति अग्निर्ज्योतिषोः कालाभिमानित्वाभावेऽपिभूयसामहरादिशब्दोक्तानां
कालाभिमानित्वात्तत्साहचर्यादाम्रवनमित्यादिवत्कालशब्देनोपलक्षणमविरुद्धम् ॥ २३ ॥ तत्रानावृत्तिमार्गमाह अग्निरिति अग्निर्ज्यो
तिःशब्दाभ्यां तेऽर्चिषमभिसंभवंतीतिश्रुत्युक्तार्चिरभिमानिनीदेवतोपलक्ष्यते अहरितिदिवसाभिमानिनी शुक्लइतिशुक्लपक्षाभिमानिनी
उत्तरायणरूपाःषण्मासाइत्युत्तरायणाभिमानिनीएतच्चान्यासामपिश्रुत्युक्तानांसंवत्सरदेवलोकादिदेवतानामुपलक्षणार्थं एवंभूतोमार्गःतत्र

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणं ॥ तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदोजनाः ॥ २४ ॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनं ॥ तत्र चांद्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥

प्रयातागताःभगवदुपासकाजनाः ब्रह्मप्राप्नुवंति यतस्तेब्रह्मविदः तथाचश्रुतिः तेर्चिषमभिसंभवंति अर्चिषोहरह्नआपूर्यमाणपक्षमापूर्यमाण
पक्षाद्यान्षण्मासानुदङ्ङादित्यएतिमासेभ्योदेवलोकमिति नहिसद्योमुक्तिभाजांसम्यग्दर्शननिष्ठानांगतिर्वाक्कचिदस्ति नतस्यप्राणाउत्क्रा
मंतीतिश्रुतेः॥२४॥आवृत्तिमार्गमाह धूमइतिधूमाभिमानिनीदेवता रात्र्यादिशब्दैश्चपूर्ववदेवरात्रिकृष्णपक्षदक्षिणायनरूपषण्मासाभिमा
निन्यस्तिस्रोदेवताउपलक्ष्यंते एताभिर्देवताभिरुपलक्षितोयोमार्गस्तत्रप्रयातःकर्मयोगीचांद्रमसंज्योतिस्तदुपलक्षितंस्वर्गलोकंप्राप्यत
त्रेष्टापूर्तकर्मफलंभुक्त्वापुनरावर्त्ततेअत्रापिश्रुतिः तेधूममभिसंभवंतिधूमाद्रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणादि

त्यएतिमामेभ्यःपितृलोकंपितृलोकाचंद्रंतेचंद्रंप्राप्यान्नंभवंतीत्यादिः तदेवंनिवृत्तिकर्मसहितोपासनयाक्रममुक्तिःकाम्यकर्मभिश्चस्वर्गभो
गानंतरमावृत्तिःनिषिद्धकर्मभिस्तुनरकभोगानंतरमावृत्तिः क्षुद्रकर्मणांजंतूनांत्वत्रैवपुनःपुनर्जन्मेतिद्रष्टव्यं ॥ २५ ॥ उक्तौमार्गावुपसं
हरति शुक्लेति शुक्लार्चिरादिगतिःप्रकाशमयत्वात् कृष्णाधूमादिगतिःतमोमयत्वात् एतेगतीमार्गौज्ञानकर्माधिकारिणोजगतःशाश्वते
अनादीसंमते संसारस्यानादित्वात् तयोरेकयाशुक्लयानिवृत्तिंमोक्षंयाति अन्ययाकृष्णयातुपुनरावर्त्तते ॥ २६ ॥ मार्गज्ञानफलंदर्श

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ॥ एकया यात्यनावृत्तिमन्ययावर्त्तते पुनः ॥ २६ ॥
नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ॥ तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन॥२७॥
वेदेषु यज्ञेषु तपस्सु चैव दानेषु यत्पुण्यफलं प्रदिष्टं॥अत्येति तत्सर्वमिदंविदित्वा योगी परं
स्थानमुपैति चाद्यं ॥ २८ ॥ इतिश्रीमद्भ०महापुरुषयोगो नामाष्टमोऽध्यायः ॥ ८ ॥

यन्भक्तियोगमुपसंहरति नैतेइति एतेसृतीमार्गौहेपार्थमोक्षसंसारप्रापकौजानन्कश्चिदपियोगीनमुह्यति सुखबुद्ध्यास्वर्गादिफलंनकाम
यते किंतुपरमेश्वरनिष्ठएवभवतीत्यर्थः स्पष्टमन्यत् ॥ २७ ॥ अध्यायार्थमष्टप्रश्नार्थनिर्णयंसफलमुपसंहरति वेदेष्विति वेदेष्वध्यय
नादिभिः यज्ञेष्वनुष्ठानादिभिः तपस्सुकायशोषणादिभिः दानेषुसत्पात्रार्पणादिभिः यत्पुण्यफलमुपदिष्टंशास्त्रेषुतत्सर्वमत्येति ततोऽ

पिश्रेष्ठंयोगैश्वर्यंप्राप्नोति किंकृत्वा इदमष्टप्रश्नार्थनिर्णयेप्रोक्तंतत्त्वंविदित्वा ततश्चयोगीज्ञानीभूत्वापरमुत्कृष्टमाद्यंजगन्मूलभूतस्थानं
विष्णोःपरमंपदंप्राप्नोति ॥ २८ ॥ अष्टमेऽष्टविशिष्टेष्टसंपृष्टार्थाष्टनिर्णयैः ॥अक्लिष्टमिष्टधामाप्तिःस्पष्टिताष्टमवर्त्मना ॥१॥ इतिसुबोधि
न्यांटीकायामष्टमोऽध्यायः ॥ ८ ॥ परेशःप्राप्यतेशुद्धभक्त्येतिस्थितमष्टमे ॥ नवमेतुतदैश्वर्यमत्याश्चर्यंप्रपंच्यते ॥ १ ॥ एवंताव
त्सप्तमाष्टमयोःस्वीयंपारमेश्वरंतत्त्वंभक्त्यैवसुलभंनान्यथेत्युक्त्वेदानीमचिंत्यंस्वकीयमैश्वर्यंभक्तेश्चासाधारणप्रभावंप्रपंचयिष्यन् श्रीभग
वानुवाच इदंत्विति विशेषेणज्ञायतेऽनेनेतिविज्ञानंउपासनंतत्सहितंज्ञानमीश्वरविषयमिदं अनसूयवेपुनःपुनःस्वमाहात्म्यमेवोपदिश

श्रीभगवानुवाच ॥ इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ॥ ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभा
त् ॥ १ ॥ राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ॥ प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

तीत्येवंपरमकारुणिकेमयिदोषदृष्टिरहितायतेतुभ्यंवक्ष्यामि तुशब्दोवैशिष्ट्ये तदेवाह गुह्यतममित्यादिना गुह्यंधर्मज्ञानंततोदेहादिव्य
तिरिक्तात्मज्ञानंगुह्यतरं ततोऽपिपरमात्मज्ञानंअतिरहस्यत्वाद्गुह्यतमम् यज्ज्ञात्वाऽशुभात्संसारान्मोक्ष्यसेसद्यएवमुक्तोभविष्यसि॥१॥
किंच राजविद्येति इदंज्ञानंराजविद्या विद्यानांराजेतिराजविद्याचगुह्यानांराजेतिराजगुह्यं विद्यासुगोप्येषुचरहस्यं अतिश्रेष्ठमित्यर्थः
राजदंतादित्वादुपसर्जनस्यपरत्वं राज्ञांविद्याराज्ञांगुह्यमितिवा उत्तमंपवित्रं अत्यंतपावनमिदं ज्ञानिनांप्रत्यक्षावगमंचप्रत्यक्षःस्पष्टो

ऽवगमोऽवबोधोयस्यतत्प्रत्यक्षावगमं दृष्टफलमित्यर्थः धर्म्यंचधर्मादनपेतं सर्वधर्मफलत्वात् कर्तुंसुसुखंच सुखेनकर्तुंशक्यमित्यर्थः अव्ययं अक्षयफलत्वात् ॥ २ ॥ नन्वेवमस्यातिसुकरत्वेकेनामसंसारिणःस्युस्तत्राह अश्रद्दधानाइति अस्यभक्तिलक्षणज्ञानसहितस्यधर्मस्येति कर्मणिषष्ठचौ इमंधर्ममश्रद्दधानाआस्तिक्येनास्वीकुर्वंतः उपायांतरेणमत्प्राप्तयेकृतप्रयत्नाअपिमामप्राप्यमृत्युयुक्तेसंसारवर्त्मनि निवर्तंते मृत्युव्याप्तेसंसारमार्गेपरिभ्रमंतीत्यर्थः ॥ ३ ॥ तदेवंवक्तव्यतयाप्रस्तुतस्यज्ञानस्यस्तुत्याश्रोतारमभिमुखीकृ

अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ॥ अप्राप्य मां निवर्तंते मृत्युसंसारवर्त्मनि ॥ ३ ॥
मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ॥ मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥
नच मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥ भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥

त्यतदेवज्ञानंकथयति । मयेतिद्वाभ्याम् ॥ अव्यक्ताअतींद्रियामूर्तिःस्वरूपंयस्यतादृशेनमयाकारणभूतेनसर्वमिदंजगत्ततंव्याप्तम् ॥ तत्सृष्ट्वातदेवानुप्राविशदितिश्रुतेः अतएवकारणभूतेमयितिष्ठंतीतिमत्स्थानिसर्वाणिचराचराणिभूतानि एवमपिघटादिषुस्वकार्येषुमृत्तिकेवतेषुभूतेषुनाहमवस्थितआकाशवदसंगत्वात् ॥ ४ ॥ किंच नचेति नचमयिस्थितानिभूतानिअसंगत्वादेवमम ननुतर्हिव्यापकत्वमाश्रयत्वंचपूर्वोक्तंविरुद्धमित्याशंक्याह पश्येति मेऐश्वरमसाधारणंयोगंयुक्तिंअघटितघटनाचातुर्यंपश्य मदीययोगमायावैभवस्या

वितर्क्यत्वान्नविरुद्धंकिंचिदित्यर्थः अन्यदप्याश्चर्यंपश्येत्याह भूतेति भूतानिबिभर्तिधारयतीतिभूतभृत् भूतानिभावयतिपालयतीति
भूतभावनः एवंभूतोऽपिममात्मापरंस्वरूपंभूतस्थोनभवतिअयंभावःयथाजीवोदेहंबिभ्रत्पालयंश्चाहंकारेणतत्संश्लिष्टस्तिष्ठति एवम
हंभूतानिधारयन्पालयन्नपिनतेषुतिष्ठामि निरहंकारत्वादिति ॥ ५ ॥ असंश्लिष्टयोरप्याधाराधेयभावंदृष्टांतेनाह यथेति अवकाशं
विनावस्थानानुपपत्तेर्नित्यमाकाशस्थितोवायुः सर्वत्रगोऽपिमहानपिनाकाशेनसंश्लिष्यते निरवयवत्वेनसंश्लेषायोगात् तथासर्वा

यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ॥ तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥
सर्वभूतानि कौंतेय प्रकृतिं यांति मामिकां ॥ कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहं ॥ ७ ॥
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनःपुनः ॥ भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥

णिभूतानिमयिस्थितानीतिजानीहि ॥ ६ ॥ तदेवमसंगस्ययोगमाययास्थितिहेतुत्वमुक्तम् तयैवसृष्टिप्रलयहेतुत्वंचाहसर्वेति क
ल्पक्षयेप्रलयकालेसर्वाणिभूतानिमदीयांप्रकृतिंयांतित्रिगुणात्मिकायांमायायांलीयंते पुनःकल्पादौसृष्टिकालेतानिविसृजामिविशेषेण
सृजामि ॥ ७ ॥ नन्वसंगोनिर्विकारश्चत्वंकथंसृजसीत्यपेक्षायामाह प्रकृतिमिति द्वाभ्याम् स्वांस्वाधीनांप्रकृतिमवष्टभ्या
धिष्ठायप्रलयेलीनंसंतंचतुर्विधमिमंसर्वंभूतग्रामंकर्मादिपरवशंपुनःपुनर्विविधंसृजामि विशेषेणसृजामीतिवाकथं प्रकृतेर्वशात् प्राचीनकर्म

निमित्ततत्स्वभावबलात् ॥ ८ ॥ ननु एवंनानाविधानिकर्माणिकुर्वतस्तवजीववद्बंधःकथंनस्यादित्याशंक्याह नचेति तानिसृष्ट्या दीनिकर्माणिमांननिबध्नंति कर्मासक्तिर्हिबंधहेतुः साचाप्तकामत्वान्ममनास्तिअतउदासीनवद्वर्त्तमानस्यमेबंधनंनापादयंति उदासीन त्वेकर्तृत्वानुपपत्तेःउदासीनवत्स्थितमित्युक्तम् ॥ ९ ॥ तदेवोपपादयति मयेति मयाध्यक्षेणाधिष्ठात्रानिमित्तभूतेनप्रकृतिःसचराचरं विश्वंसूयते जनयति अनेनमदधिष्ठानेन हेतुनाइदंजगत्विपरिवर्त्तते पुनःपुनर्जायते सन्निधिमात्रेणाधिष्ठातृत्वात्कर्तृत्वमुदासीनत्वं

न च मां तानि कर्माणि निबध्नंति धनंजय ॥ उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ॥ हेतुनानेन कौंतेय जगद्विपरिवर्त्तते ॥ १० ॥
अवजानंति मां मूढा मानुषीं तनुमाश्रितम् ॥ परं भावमजानंतो मम भूतमहेश्वरम् ॥ ११ ॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ॥ राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥

चाविरुद्धमितिभावः ॥ १० ॥ नन्वेवंभूतंपरमेश्वरंत्वांकिमितिकेचिन्नाद्रियंतेतत्राह अवजानंतीतिद्वाभ्याम् सर्वभूतमहेश्वररूपं मदीयंपरंभावंतत्त्वमजानंतोमूढामूर्खाः मामवजानन्त्यवमन्यंते अवज्ञानेहेतुः शुद्धसत्वमयीमपितनुंभक्तेच्छावशान्मनुष्याकारा माश्रितवंतम् ॥ ११ ॥ किंच मोघाशाइति मत्तोऽन्यद्देवतांतरंक्षिप्रंफलंदास्यतीत्येवंभूतामोघानिष्फलैवाशायेषांते अतएवमदि

मुखत्वान्मोघानिव्यर्थानिकर्माणियेषांते मोघमेवनानाकुतर्काश्रितंशास्त्रज्ञानंयेषांते अतएवविचेतसोविक्षिप्तचित्ताः सर्वत्रहेतुः राक्ष
सींतामसींहिंसादिप्रचुराम् आसुरींचराजसींकामदर्पादिबहुलाम् मोहिनींबुद्धिभ्रंशकरींप्रकृतिंस्वभावंश्रिताआश्रिताःसंतोमामवजानं
तीतिपूर्वेणान्वयः ॥ १२ ॥ केतर्हित्वामाराधयंतीत्यतआह महात्मानस्त्विति महात्मानः कामाद्यनभिभूतचित्ताः यतः अभयं
सत्वसंशुद्धिरित्यादिनावक्ष्यमाणां दैवींप्रकृतिंस्वभावमाश्रिताः अतएवमद्व्यतिरेकेणनास्त्यन्यस्मिन्मनोयेषांते भूतादिंजगत्कारणमव्य

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ॥ भजंत्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥
सततं कीर्तयंतो मां यतंतश्च दृढव्रताः ॥ नमस्यंतश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥
ज्ञानयज्ञेन चाप्यन्ये यजंतो मामुपासते ॥ एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥

यंनित्यंचमांज्ञात्वाभजंति ॥ १३ ॥ तेषांभजनप्रकारमाह सततमितिद्वाभ्यां सततंसर्वदास्तोत्रमंत्रादिभिःकीर्तयंतःकेचिन्मामुपासते
सेवंते दृढानिव्रतानिनियमायेषांतादृशाःसंतोयतंतश्चेश्वरपूजादिषु इंद्रियोपसंहारादिषुप्रयत्नंकुर्वंतश्चकेचिद्भक्त्यानमस्यंतःप्रणमंतश्चा
न्येनित्ययुक्ताअनवरतमवहिताः सर्वेसेवंते भक्त्येतिनित्ययुक्ताइतिचकीर्तनादिष्वपिद्रष्टव्यम् ॥१४॥ किंच ज्ञानेति वासुदेवःसर्वमित्येवं
सर्वात्मत्वदर्शनंज्ञानंतदेवयज्ञस्तेनज्ञानयज्ञेनमांयजंतःपूजयंतोऽन्येऽप्युपासतेतत्रापिकेचिदेकत्वेनएकमेवपरंब्रह्मेतिपरमार्थदर्शनरूपाभे

दभावनया केचित्पृथक्त्वेनदासोऽहमितिपृथग्भावनया केचित्तुविश्वतोमुखंसर्वात्मकंमांबहुधाब्रह्मरुद्रादिरूपेणोपासते ॥ १५ ॥ सर्वा त्मतांप्रपंचयति अहमितिचतुर्भिः क्रतुःश्रौतोऽग्निष्टोमादिः यज्ञस्तुस्मार्त्तःपंचयज्ञादिः स्वधापित्रर्थेश्राद्धादिः औषधमोषधिप्रभवमन्नं भेषजंवा मंत्रोयाज्यापुरोनुवाक्यादिः आज्यंहोमादिसाधनम् अग्निराहवनीयादिः हुतंहोमः एतत्सर्वमहमेव ॥ १६ ॥ किंच पितेति



अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ॥ मंत्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥
पिताहमस्य जगतो माता धाता पितामहः ॥ वेद्यं पवित्रमोंकार ऋक्साम यजुरेव च ॥ १७ ॥
गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत् ॥ प्रभवः प्रलयः स्थानं निधानं बीजमव्ययं ॥ १८ ॥

धाताकर्मफलविधाता वेद्यंज्ञेयंवस्तु पवित्रंशोधकंप्रायश्चित्तात्मकंवा ओंकारःप्रणवः ऋग्वेदादयोवेदाश्चअहमेव स्पष्टमन्यत् ॥ १७ ॥ किंच गतिरिति गम्यतइतिगतिःफलम् भर्त्तापोषणकर्त्ता प्रभुःनियंता साक्षीशुभाशुभद्रष्टा निवासः भोगस्थानम् शरणंरक्षकः सुहृद्धित कर्त्ता प्रकर्षेणभवत्यनेनेतिप्रभवःस्रष्टा प्रलीयतेऽनेनेतिप्रलयःसंहर्त्ता तिष्ठंत्यस्मिन्निितिस्थानमाधारःनिधीयतेऽस्मिन्निितिनिधानंलयस्था नम् बीजंकारणम् तथाप्यव्ययमविनाशि नतुव्रीह्यादिबीजवन्नश्वरमित्यर्थः ॥ १८ ॥ ॥ ॥

किंच तपामीति आदित्यात्मनास्थित्वानिदाघसमयेतपामि जगतस्तापंकरोमि वृष्टिसमयेचवर्षमुत्सृजामि विमुंचामि कदाचित्तुवर्षाणि गृह्णामिआकर्षामि अमृतंजीवनं मृत्युश्चनाशः सत्स्थूलंदृश्यम् असच्चसूक्ष्ममदृश्यम् एतत्सर्वमहमेवेतिमत्वामामेवबहुधाउपासतइतिपूर्वेणैवान्वयः ॥ १९ ॥ तदेवमवजानंतिमांमूढाइत्यादिश्लोकद्वयेनाक्षिप्रफलाशयादेवतांतरंभजंतोमांनाद्रियंतइत्यभक्तादर्शिताः महात्मानस्तुमांपार्थेत्यादिनाचभक्ताउक्ताः तत्रैकत्वेनपृथक्त्वेनवापरमेश्वरंश्रीवासुदेवंयेनभजंति तेषांजन्ममृत्युप्रवाहोदुर्वारइत्याह त्रैविद्यामामिति

तपाम्यहमहं वर्षं निगृण्हाम्युत्सृजामि च ॥ अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥ त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयंते ॥ ते पुण्यमासाद्य सुरेंद्रलोकमश्नंति दिव्यान्दिवि देवभोगान् ॥ २० ॥ ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुणे मर्त्यलोकं विशंति ॥ एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभंते ॥ २१ ॥

द्राभ्यां ऋग्यजुःसामलक्षणास्तिस्रोविद्यायेषांतेत्रिविद्याः त्रिविद्याएवत्रैविद्याः स्वार्थेतद्धितः तिस्रोविद्याअधीयंतेजानंतीतिवात्रैविद्याः वेदत्रयोक्तकर्मतत्पराइत्यर्थः वेदत्रयेविहितैर्यज्ञैर्मामिष्ट्वाममैवरूपंदेवतांतरामित्यजानंतोऽपिवस्तुतइंद्रादिरूपेणमामेवेष्ट्वासंपूज्य यज्ञशेषंसोमंपिबंतीतिसोमपाः तेनैवपूतपापाः शोधितकल्मषाःसंतःस्वर्गतिंस्वर्गंप्रतिगतिंयेप्रार्थयंते तेपुण्यफलरूपंसुरेंद्रस्यलोकंस्वर्गमासाद्यप्राप्यदिविस्वर्गेदिव्यानुत्तमान्देवानांभोगानश्नंति भुंजते ॥ २० ॥ ततश्च तेतंभुक्त्वेति तेस्वर्गकामास्तंप्रार्थितंविपुलंस्वर्गलो

कंतत्सुखंभुक्त्वाभोगप्रापकेपुण्येक्षीणेसतिमर्त्यलोकंविशंति पुनरप्येवमेववेदत्रय्याविहितंधर्ममनुसृताः कामकामाः भोगान्कामयमानाः गतागतंयातायातंलभंते ॥ २१ ॥ मद्भक्तास्तुमत्प्रसादेनकृतार्थाभवंतीत्याह अनन्याइति अनन्याः नास्तिमद्व्यतिरेकेणान्यत्काम्यं भजनीयंदेवतांतरंयेषांतथाभूतायेजनाः मांचिंतयंतःसेवंतेतेषांनित्याभियुक्तानांसर्वदामदेकनिष्ठानांयोगंधनादिलाभंक्षेमंचतत्पालनंमोक्षं वातैरप्रार्थितमप्यहमेववहामि प्रापयामि ॥ २२ ॥ ननुचत्वद्व्यतिरेकेणवस्तुतोदेवतांतरस्याभावादिंद्रादिसेविनोऽपित्वद्भक्ताएवेतिक

अनन्याश्चिंतयंतो मां ये जनाः पर्युपासते ॥ तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहं ॥ २२ ॥
येऽप्यन्यदेवताभक्ता यजंते श्रद्धयान्विताः ॥ तेऽपि मामेव कौंतेय यजंत्यविधिपूर्वकम् ॥ २३ ॥
अहं हि सर्वयज्ञानाम्भोक्ता च प्रभुरेव च ॥ न तु मामभिजानंति तत्त्वेनातश्च्यवंति ते ॥ २४ ॥
यांति देवव्रता देवान्पितॄन्यांति पितृव्रताः ॥ भूतानि यांति भूतेज्या यांति मद्याजिनोऽपि मां ॥ २५ ॥

थंतेगतागतंलभेरंस्तत्राह येपीति श्रद्धयोपेताभक्ताःसंतोयेऽपिजनाःयज्ञेनान्यदेवताइंद्रादिरूपायजंते तेऽपिमामेवयजंतीतिसत्यम्किं तु अविधिपूर्वकंमोक्षप्रापकंविधिंविनायजंति अतस्तेपुनरावर्त्तंते ॥२३॥ एतदेवविवृणोति अहंहीति सर्वेषांयज्ञानांततद्देवतारूपेणाहमे वभोक्ता प्रभुश्चस्वामी फलदातापिचाहमेवेत्यर्थः एवंभूतंमांतेतत्त्वेनयथावन्नाभिजानंतिअतश्च्यवंतिप्रच्यवंतेपुनरावर्ततेयेतुसर्वदेवतासु मामेवांतर्यामिणंपश्यंतोयजंतितेतुनावर्त्तंते ॥२४॥तदेवोपपादयति यांतीति देवेषुइन्द्रादिषुव्रतंनियमोयेषांतेअंतवतोदेवान्यांतिअतः

पुनरावर्तंतेपितृषुव्रतंयेषांश्राद्धादिक्रियापराणांतेपितॄन्यांति भूतेषुविनायकमातृकादिषुइज्यापूजायेषांतेभूतानियांति मांयष्टुंशीलंयेषांते
मद्याजिनस्तेतुमामक्षयंपरमानंदरूपंनारायणंयांति ॥२५॥ तदेवंस्वभक्तानामक्षयफलत्वमुक्तं अनायासत्वंस्वभक्तेर्दर्शयति पत्रमिति पत्र
पुष्पादिमात्रमपिमह्यंभक्त्याप्रीत्यायःप्रयच्छति तस्यप्रयतात्मनःशुद्धचित्तस्यनिष्कामभक्तस्यतत्पत्रपुष्पादिकंतेनभक्त्याउपहृतंसमर्पि
तमहमश्नामिप्रीत्यागृह्णामिनहिमहाविभूतिपतेःपरमेश्वरस्यममक्षुद्रदेवतानामिवबहुवित्तसाध्ययागादिभिः परितोषःस्यात् किंतु भक्ति

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥ तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥ यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणं ॥ २७ ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबंधनैः ॥ संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥

मात्रेणअतोभक्तेनसमर्पितंयत्किंचित्पत्रादिमात्रमपितदनुग्रहार्थमेवाश्नामीतिभावः ॥२६॥ नचपत्रपुष्पादिकमपियज्ञार्थंपशुसोमादिद्रव्य
वन्मदर्थमेवोद्यमैरापाद्यसमर्पणीयम् किंतर्हियदिति स्वभावतोवाशास्त्रतोवायत्किंचित्कर्मकरोषि तथायदश्नासि यज्जुहोषि यद्दा
सि यत्तपस्यसितपःकरोषि तत्सर्वंमय्यर्पितंयथाभवत्येवंकुरुष्व ॥ २७ ॥ एवंचयत्फलंप्राप्स्यसितच्छृणु शुभेति एवंकुर्वन्कर्मबंध
नैः कर्मनिमित्तैरिष्टानिष्टैःफलैर्मुक्तोभविष्यसि कर्मणांमयिसमर्पितत्वेनतवतत्फलसंबंधानुपपत्तेः तैश्चविमुक्तःसन् संन्यासयोगयुक्तात्मा

संन्यासःकर्मणांमदर्पणंसएवयोगस्तेनयुक्तः आत्माचित्तंयस्यतथाभूतस्त्वं मांप्राप्स्यसि ॥ २८ ॥ यदिभक्तेभ्यएवमोक्षंददासि नाभक्ते भ्यश्चतर्हितवापिकिंरागद्वेषादिकृतं वैषम्यमस्तिनेत्याह समइति समोऽहंसर्वेष्वपिभूतेषुअतोमेममाप्रियश्चद्वेष्यश्चनास्त्येव एवंसत्य पियेमांभजंतितेभक्तामयिवर्तंते अहमपितेषुअनुग्राहकतयावर्त्ते अयंभावः यथाग्नेः स्वसेवकेष्वेवतमःशीतादिदुःखमपाकुर्वतोऽपिनवैष म्यं यथावाकल्पवृक्षस्य तथैवभक्तपक्षपातिनोऽपिममनवैषम्यंकिंतु मद्भक्तेरेवंमहिमेति ॥ २९ ॥ अपिच मद्भक्तेरवितर्क्यःप्रभावइतिद

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ॥ ये भजंति तु मां भक्त्या मयि ते तेषु चाप्यहं ॥ २९ ॥
अपि चेत्सुदुराचारो भजते मामनन्यभाक् ॥ साधुरेव स मंतव्यःसम्यग्व्यवसितो हि सः ॥ ३० ॥
क्षिप्रं भवति धर्मात्मा शश्वच्छांतिं निगच्छति ॥ कौंतेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥

र्शयन्नाह अपिचेदिति अत्यंतंदुराचारोपियद्यप्यपृथक्त्वेनपृथक्देवताअपिवासुदेवएवेतिबुद्ध्यानरोदेवतांतरभक्तिमकुर्वन्मामेवश्रीनारा यणंभजते तर्हिसाधुःश्रेष्ठएवसमंतव्यः यतोऽसौसम्यग्व्यवसितः परमेश्वरभजनेनैवकृतार्थोभविष्यामीतिशोभनमध्यवसायंकृतवान् ॥ ॥ ३० ॥ ननु कथंसमीचीनाध्यवसायमात्रेणसाधुर्मंतव्यस्तत्राह क्षिप्रमिति दुराचारोऽपिमांभजन्शीघ्रंधर्मचित्तोभवति ततश्चश श्वच्छांतिंशाश्वतीमुपशांतिंचित्तोपप्लवोपरमरूपांपरमेश्वरनिष्ठांनितरांगच्छतिप्राप्नोति कुतर्ककर्कशवादिनोनैतन्मन्येरन्नितिशंकाव्या

कुलचित्तमर्जुनंप्रोत्साहयति हेकौंतेय पटहकहलादिमहाघोषपूर्वकंविवदमानानांसभांगत्वाबाहुमुत्क्षिप्यनिःशंकंप्रतिजानीहि प्रतिज्ञांकुरु कथं मेपरमेश्वरस्यभक्तःसुदुराचारोऽपिनप्रणश्यति अपितुकृतार्थएवभवतीति ततश्चतेत्वत्प्रौढिविजृंभाद्विध्वंसितकुतर्कानिःसंशयं त्वामेवगुरुत्वेनआश्रयेरन् ॥ ३१ ॥ आचारभ्रष्टंमद्भक्तिःपवित्रीकरोतीतिकिमत्रचित्रम् यतोमद्भक्तिर्दुष्कुलानप्यनधिकारिणो पिसंसारान्मोचयतीत्याह मांहीति येऽपिपापयोनयःस्युःनिकृष्टजन्मानोंऽत्यजादयोभवेयुः येऽपिवैश्याःकेवलंकृष्यादिनिरताः स्त्रियः

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ॥ स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यांति परां गतिं ॥ ३२॥

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ॥ अनित्यमसुखं लोकमिमं प्राप्य भजस्व मां ॥ ३३ ॥

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥ मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥

शूद्रादयश्चाध्ययनादिरहिताः तेऽपिमांव्यपाश्रित्यसंसेव्यपरांगतिंयांति हिनिश्चितम् ॥ ३२ ॥ यदेवंतदासत्कुलाःसदाचाराश्चम द्भक्ताः परांगतिंयांतीतिकिंवक्तव्यमित्याह किमिति पुण्याःसुकृतिनोब्राह्मणाः तथाराजानश्चतेऋषयश्चक्षत्रियाः एवंभूताःपरांगतिं यांतीतिकिंवक्तव्यमित्यर्थः अतस्त्वमिमंराजर्षिरूपंलोकंदेहंप्राप्यलब्ध्वामांभजस्व किंच अनित्यमध्रुवमसुखंसुखरहितमिमंमर्त्यलोकं प्राप्यानित्यत्वाद्विलंबमकुर्वन्असुखत्वाच्चसुखार्थोद्यमंहित्वामामेवभजस्वेत्यर्थः ॥ ३३ ॥ भजनप्रकारंदर्शयन्नुपसंहरति मन्मनाइति

मय्येवमनोयस्यसमन्मनास्त्वंभव तथैवममैवभक्तःमत्सेवकोभव मद्याजीमद्यजनशीलोभव मामेवचनमस्कुरु एवमेभिःप्रकारैर्मत्परा
यणःसन्नात्मानंमनोमयियुक्त्वासमाधायमामेवपरमानंदरूपमेष्यसि प्राप्स्यसि ॥ ३४ ॥ निजमैश्वर्यमाश्चर्यंभक्तेश्चाद्भुतवैभवं॥ नवमे
राजगुह्याख्येकृपयावोचदच्युतः ॥ १ ॥ इतिसुबोधिन्याटीकायांनवमोऽध्यायः ॥ ९ ॥ ॥ ७ ॥ उक्ताःसंक्षेपतःपूर्वंसप्तमादौवि
भूतयः ॥ दशमेतावितन्यंतेसर्वत्रेश्वरदृष्टये ॥ १ ॥ एवंतावत्सप्तमादिभिस्त्रिभिरध्यायैर्भजनीयंपरमेश्वररूपंनिरूपितम् तद्विभूतयश्चस

इति श्रीमद्भग०राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः॥ ९ ॥ ॥ श्रीभगवानुवाच ॥

भूय एव महाबाहो शृणु मे परमं वचः॥ यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥

न मे विदुः सुरगणाः प्रभवं न महर्षयः॥ अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥

प्तमेरसोऽहमप्सुकौंतेयेत्यादिनासंक्षेपतोदर्शिताः अष्टमेचअधियज्ञोऽहमेवात्रेत्यादिना नवमेचअहंक्रतुरहंयज्ञइत्यादिना अथेदानीं
ताएवविभूतीःप्रपंचयिष्यन्स्वभक्तेश्चावश्यंकरणीयत्वंवर्णयिष्यन् श्रीभगवानुवाच भूयएवेति महांतौयुद्धादिस्वधर्मानुष्ठानेमहत्परि
चर्यायांवाकुशलौबाहूयस्य हेमहाबाहो भूयएवपुनरपिमेवचः शृणु कथंभूतम् परमंपरमात्मनिष्ठं मद्वचनामृतेनैवप्रीतिमाप्नुवतेतेतु
भ्यंहितकाम्ययाहितेच्छयायदहंवक्ष्यामितत् ॥ १ ॥ उक्तस्यापिपुनर्वचनेदुर्ज्ञेयत्वंहेतुमाह नमइति मेममप्रकृष्टंभवं जन्मरहितस्या

पिनानाविभूतिभिराविर्भावंसुरगणाअपिमहर्षयोभृग्वादयोऽपिनजानंति तत्रहेतुः अहंहिदेवानांमहर्षीणांचादिः कारणम् सर्वशःसर्वप्र कारैःउत्पादकत्वेनबुद्ध्याद्प्रवर्त्तकत्वेनच अतोमदनुग्रहंविनामांकेऽपिनजानंतीत्यर्थः ॥ २ ॥ एवंभूतात्मज्ञानेफलमाह योमामि ति सर्वकारणत्वादेवनविद्यतेआदिःकारणंयस्यतमनादिम् अतएवाजंजन्मशून्यम् लोकानांमहेश्वरंचमांयोवेत्ति समनुष्येषुअसंमूढःसं मोहरहितःसन्सर्वपापैःप्रमुच्यते ॥ ३ ॥ लोकमहेश्वरतामेवस्फुटयति बुद्धिरितित्रिभिः बुद्धिःसारासारविवेकनैपुण्यम्ज्ञानमात्मविषयम्

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ॥ असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥<br>
बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ॥ सुखं दुःखं भवो भावो भयं चाभयमेव च ॥ ४ ॥<br>
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ॥ भवंति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥

असंमोहः व्याकुलत्वाभावः क्षमासहिष्णुत्वम् सत्यंयथार्थभाषणम् दमोबाह्येंद्रियसंयमः शमोंऽतःकरणसंयमः सुखमनुकूलसंवेदनी यम् दुःखंचतद्विपरीतं भवउद्भवः अभावस्तद्विपरीतः भयंत्रासः अभयंतद्विपरीतम् अस्यश्लोकस्यमतएवभवंतीत्युत्तरेणान्वयः ॥ ४ ॥ किंच अहिंसेति अहिंसापरपीडानिवृत्तिः समतारागद्वेषादिराहित्यम् मित्रामित्रतुल्यताचतुष्टिर्दैवलब्धेनसंतोषः तपःशा रीरादिवक्ष्यमाणम् दानंन्यायार्जितधनादेःसत्पात्रार्पणम् यशःसत्कीर्तिः अयशोऽपकीर्तिः एतेबुद्धिर्ज्ञानमित्यादयस्तद्विपरीताश्चा

बुद्ध्यादयोनानाविधाभावाःप्राणिनांमत्तःसकाशादेवभवंति ॥ ५ ॥ किंच महर्षयइति सप्तमहर्षयोभृग्वादयःसप्तब्राह्मणाइत्येतेपुराणे निश्चयंगताइत्यादिपुराणप्रसिद्धाः तेभ्योऽपिपूर्वेऽन्येचत्वारोमहर्षयः सनकादयः तथामनवःस्वायंभुवादयः मद्भावा मदीयोभावः प्रभावोयेषुते हिरण्यगर्भात्मनोममैवमनसःसंकल्पमात्राज्जाताः प्रभावमेवाह येषामिति येषांभृग्वादीनांचसनकादीनांचइमाब्राह्मणाद्यालोकेवर्धमानाः यथायथंपुत्रपौत्रादिरूपाः शिष्यादिरूपाश्च प्रजाजातावर्त्तंते ॥ ६ ॥ यथोक्तविभूत्यादितत्त्वज्ञानस्यफलमाह

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ॥ मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥
एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ॥ सोऽविकंपेन योगेन युज्यते नात्र संशयः ॥ ७ ॥
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते ॥ इति मत्वा भजंते मां बुधा भावसमन्विताः ॥ ८ ॥

एतामिति एतांभृग्वादिलक्षणांममविभूतिंयोगंचैश्वर्यलक्षणंतत्त्वतोयोवेत्तिसोऽविकम्पेननिःसंशयेनयोगेनसम्यग्दर्शनेनयुक्तोभवति नास्त्यत्रसंशयः ॥ ७ ॥ यथाचविभूतियोगयोर्ज्ञानेनसम्यग्ज्ञानावाप्तिस्तद्दर्शयति अहमित्यादिचतुर्भिः अहंसर्वस्यजगतःप्रभवः भृग्वादिरूपविभूतिद्वारेणोत्पत्तिहेतुःमत्तएवचास्यसर्वस्यबुद्धिर्ज्ञानमसंमोहइत्यादिसर्वंप्रवर्त्ततइति एवंमत्वावबुद्ध्य बुधाविवेकिनोभावसमन्विताः प्रीतियुक्तामांभजंते ॥ ८ ॥ ॥ ॥ ॥ ॥

प्रीतिपूर्वकंभजनमेवाह मच्चित्ताइति मय्येवचित्तंयेषांतेमच्चिताः मामेवगताःप्राप्ताःप्राणाइंद्रियाणियेषांतेमद्गतप्राणाः मदर्पितजीव
नाइतिवा एवंभूतास्तेबुधाः अन्योऽन्यंमांन्यायोपेतैः श्रुत्यादिप्रमाणैर्बोधयंतः बुद्ध्वाचमांकथयन्तःसंतोनित्यंतुष्यंति अनुमोदनेनतु
ष्टिंयांति रमंतिच निवृत्तिंयांति ॥ ९ ॥ एवंभूतानांचसम्यग्ज्ञानमहंददामीत्याह तेषामितिएवंसततयुक्तानांमय्यासक्तानांप्रीतिपूर्व
कंभजतांतेषांतंबुद्धिरूपंयोगमुपायंददामि तमितिकम् येनोपायेनतेभक्तामांप्राप्नुवंति ॥१०॥बुद्धियोगंदत्वाचतस्यानुभवपर्यंतंतमापा

मच्चित्ता मद्गतप्राणा बोधयंतः परस्परम् ॥ कथयंतश्च मां नित्यं तुष्यंति च रमंति च ॥ ९ ॥
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ॥ ददामि बुद्धियोगं तं येन मामुपयांति ते ॥ १० ॥
तेषामेवानुकंपार्थमहमज्ञानजं तमः ॥ नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥
॥ अर्जुन उवाच ॥ परं ब्रह्म परं धाम पवित्रं परमं भवान् ॥ पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुं ॥ १२ ॥

द्याविद्याकृतंसंसारंनाशयामीत्याह तेषामिति तेषामनुकंपार्थमनुग्रहार्थमेवाज्ञानाज्जातंतमः संसाराख्यं नाशयामिकुत्रवास्थितःसन्के
नसाधनेनतमोनाशयसीत्यतआह आत्मभावस्थः बुद्धिवृत्तौस्थितःसन् भास्वताविस्फुरताज्ञानलक्षणेनदीपेननाशयामि ॥ ११ ॥
संक्षेपेणोक्ताविभूतीर्विस्तरेणजिज्ञासुर्भगवंतंस्तुवन्नर्जुनउवाच परंब्रह्मेतिसप्तभिः परंब्रह्मचपरंधामचआश्रयःपरमंचपवित्रंभवानेव कुत

इत्यतआह यतःशाश्वतंनित्यंपुरुषं तथादिव्यंद्योतनात्मकं स्वप्रकाशंच आदिश्चासौदेवश्चतं देवानामादिभूतमित्यर्थः तथाअजंअजन्मा नंविभुंव्यापकंत्वामेवाहुः ॥ १२ ॥ केतइत्यतआह आहुरिति ऋषयःभृग्वादयःसर्वे देवर्षिर्नारदःअसितश्चदेवलश्चव्यासश्च स्वयंत्वमेव साक्षान्मेमह्यंब्रवीषि ॥ १३ ॥ अतोममेदानींत्वदैश्वर्येअसंभावनानिवृत्तेत्याह सर्वमिति एतद्भवानेवपरंब्रह्मेत्यादि सर्वमपिऋतंसत्यंम न्येयन्मांप्रतित्वंकथयसि नमेविदुःसुरगणाइत्यादितदपिसत्यमेवमन्यइत्याह नहीति हेभगवन् तवव्यक्तिंदेवानविदुः अस्मदनुग्रहार्थमि

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ॥ असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १३ ॥
सर्वमेतदृतं मन्ये यन्मां वदसि केशव ॥ न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ॥ भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥
वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ॥ याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥

यमभिव्यक्तिरितिनजानंतिदानवाश्चास्मन्निग्रहार्थमितिनविदुरेवेति ॥ १४ ॥ किंतर्हि स्वयमेवत्वमात्मानंवेत्थजानासि नान्यः तद प्यात्मनास्वेनैववेत्थ नसाधनांतरेण अत्यादरेणबहुधासंबोधयति हेपुरुषोत्तम पुरुषोत्तमत्वेहेतुगर्भाणिसंबोधनानि हेभूतभावन भूतोत्पा दक भूतानामीशनियन्तः देवानामादित्यादीनांदेवप्रकाशक जगत्पते विश्वपालक ॥ १५ ॥ यस्मात्त्वमेवाभिव्यक्तिंत्वमेववेत्सिनदेवाद

यस्तस्माद्वक्तुमर्हसीति याआत्मनस्तवदिव्याअत्यद्भुताविभूतयस्ताःसर्वावक्तुंत्वमेवार्हसि योग्योभवसि याभिरितिविभूतीनांविशेषणम् स्पष्टार्थम् ॥ १६ ॥ कथनप्रयोजनंदर्शयन्प्रार्थयते कथमितिद्वाभ्याम् हेयोगिन् कथंकैर्विभूतिभेदैःसदापरिचिंतयन्नहंत्वांविद्याम् जानीयाम् विभूतिभेदेनचिंत्योऽपित्वंकेषुकेषुपदार्थेषुमयाचिंतनीयोऽसि ॥ १७ ॥ तदेवंबाहिर्मुखेऽपिचित्तेतत्रतत्रविभूतिभेदेनत्वाच्चिंतैव यथाभवेत्तथाविस्तरेणकथयेत्याह विस्तरेणेति आत्मनस्तवयोगंसर्वज्ञत्वसर्वशक्तित्वादिलक्षणंयोगैश्वर्यंविभूतिंचविस्तरेणपुनःकथय हि

कथं विद्यामहं योगिंस्त्वां सदा परिचिंतयन् ॥ केषु केषु च भावेषु चिंत्योऽसि भगवन्मया ॥ १७ ॥ विस्तरेणात्मनो योगं विभूतिं च जनार्दन ॥ भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतं ॥ १८ ॥ ॥ श्रीभगवानुवाच ॥ ॥ हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ॥ प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ ॥ १९ ॥ अहमात्मा गुडाकेश सर्वभूताशयस्थितः ॥ अहमादिश्च मध्यं च भूतानामंत एव च ॥ २० ॥

यस्मात्त्वद्वाक्यममृतरूपंशृण्वतोममतृप्तिरलंबुद्धिर्नास्ति ॥ १८ ॥ एवंप्रार्थितःसन् श्रीभगवानुवाच हन्तेतिहंतेत्यनुकंपासंबोधनं दिव्यायाममविभूतयस्ताःप्राधान्येनतुभ्यंकथयिष्यामि यतोऽवांतरस्यविभूतिविस्तरस्यमदीयस्यांतोनास्ति अतः प्रधानभूताःकतिचिद्वर्णयिष्यामि ॥ १९॥ तत्रप्रथममैश्वरंरूपंकथयति अहमिति हेगुडाकेश सर्वेषांभूतानामाशयेष्वंतःकरणेषुसर्वज्ञत्वादिगुणैर्नियंतृत्वेनाव

स्थितः परमात्माऽहम् आदिर्जन्म मध्यंस्थितिः अंतःसंहारः सर्वभूतानांजन्मादिहेतुश्चाहमेवेत्यर्थः ॥२०॥ इदानींविभूतीःकथयति आदित्यानामित्यादिनायावदध्यायसमाप्ति आदित्यानांद्वादशानांमध्येविष्णुर्वामनोऽहम् ज्योतिषांप्रकाशानांमध्येंऽशुमान्विश्वव्यापकरश्मियुक्तोरविःसूर्योऽहम्मरुतांदेवविशेषाणांमध्येमरीचिनामाहमस्मि यद्वा सप्तमरुद्गणावायवस्तेषांमध्यइति तेच आवहःप्रवहःविवहः परावहःउद्वहःसंवहःपरिवहइतिमरुद्गणाः नक्षत्राणांमध्येचंद्रोऽहम् अत्रच आदित्यानामहंविष्णुरित्यादिषुप्रायशोनिर्धारणेषष्ठी क्वचि

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ॥ मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥
वेदानां सामवेदोस्मि देवानामस्मि वासवः ॥ इंद्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥
रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ॥ वसूनां पावकश्चास्मि मेरुः शिखरिणामहं ॥ २३ ॥
पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ॥ सेनानीनामहं स्कंदः सरसामस्मि सागरः ॥ २४ ॥

द्भूतानामस्मिचेतनेत्यादिनासंबंधेषष्ठी तच्चतत्रतत्रैवदर्शयिष्यामः विष्णुरित्याद्यवतारोऽपिप्रभावातिशयमात्रविवक्षयाविभूतित्वेनानिर्दिश्यतेअतःपरंचाध्यायस्यस्पष्टार्थत्वेऽपिक्वचित्किंचिद्व्याख्यास्यामः॥२१॥वेदानामिति वासवइंद्रः भूतानांसंबंधिनीचेतनाज्ञानशक्तिरहमस्मि ॥ २२ ॥ रुद्राणामिति यक्षरक्षसामितिराक्षसानामपिक्रूरत्वादिसाम्याद्यक्षैःसहैकीकृत्यनिर्देशः तेषांमध्येवित्तेशः कुबेरोऽस्मि पावकोऽग्निः शिखरिणांशिखरवतांउच्छ्रितानांमध्येमेरुः ॥ २३ ॥ पुरोधसामिति पुरोधसांमध्येदेवपुरोहितत्वान्मुख्यंबृहस्पतिंमावि

द्धि सेनानीनांसेनापतीनांमध्येदेवसेनापतिःस्कंदोऽहमस्मि सरसांस्थिरजलाशयानांमध्येसमुद्रोऽस्मि ॥ २४ ॥ महर्षीणामिति गिरां वाचांपदात्मिकानांमध्येएकमक्षरमोंकाराख्यंपदमस्मि यज्ञानांश्रौतस्मार्त्तानांमध्येजपरूपोयज्ञोऽहम् ॥ २५ ॥ अश्वत्थइति देवाए वसंतोमंत्रदर्शनेनयऋषित्वंप्राप्तास्तेषांमध्येनारदोऽस्मिसिद्धानांउत्पत्तितएवाधिगतपरमार्थतत्त्वानांमध्येकपिलाख्योमुनिरस्मि ॥२६॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ॥ यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥
अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ॥ गंधर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥
उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ॥ ऐरावतं गजेंद्राणां नराणां च नराधिपम् ॥ २७ ॥
आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ॥ प्रजनश्चास्मि कंदर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥
अनंतश्चास्मि नागानां वरुणो यादसामहम् ॥ पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥

उच्चैःश्रवसमिति अमृतार्थंक्षीराब्धिमथनादुद्भूतमुच्चैःश्रवसंनामाश्वंमद्विभूतिंविद्धि अमृतोद्भवमित्येतदैरावतेऽपिसंबध्यते नराधिपंरा जानंमांविद्धि ॥ २७ ॥ आयुधानांमध्येवज्रमहंकामान्दोग्धीतिकामधुक् प्रजनःप्रजोत्पत्तिहेतुःकंदर्पःकामोऽस्मि नकेवलंसंभोगप्रधानः कामोमद्विभूतिः अशास्त्रीयत्वात् सर्पाणांसविषाणांराजावासुकिरस्मि ॥ २८ ॥ अनंतइति नागानांनिर्विषाणांराजाअनंतः शेषोऽ

स्मि यादसांजलचराणांराजावरुणोऽस्मि पितॄणांराजाअर्यमास्मि संयमतांनियमनंकुर्वतांमध्येयमोऽस्मि ॥ २९ ॥ प्रल्हादइति कल यतांवशीकुर्वतांगणयतांवामध्येकालोऽहम् मृगेंद्रःसिंहः पक्षिणांमध्येगरुडोऽस्मि ॥ ३० ॥ पवनइति पवतांपावयितॄणांवेगवतांवामध्ये वायुरस्मि शस्त्रभृतांवीराणांरामोदाशरथिः यद्वापरशुरामः झषाणांमत्स्यानांमकरःमत्स्यविशेषास्तिमिंगिलः स्रोतसांप्रवाहोदकानांम ध्येभागीरथी ॥ ३१ ॥ सर्गाणामिति सृज्यंतइतिसर्गाआकाशादयस्तेषामादिरंतश्चमध्यंचैवाहम् अहमादिश्चमध्यंचेत्यत्रसृष्ट्यादिकर्तृत्वं

प्रल्हादश्चास्मि दैत्यानां कालः कलयतामहम् ॥ मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणां ॥ ३० ॥
पवनः पवतामस्मि रामः शस्त्रभृतामहम् ॥ झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥
सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ॥ अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥

पारमैश्वर्यमुक्तं अत्रतूत्पत्तिस्थितिलयामद्विभूतित्वेनध्येयाइत्युच्यतइतिविशेषः अध्यात्मविद्याआत्मविद्या प्रवदतांवादिनांसंबंधिन्यो वादजल्पवितंडाख्यास्तिस्रःकथाःप्रसिद्धाः तासांमध्येवादोऽहम् यत्रद्वाभ्यामपिप्रमाणतस्तर्कतश्चस्वपक्षःस्थाप्यते परपक्षश्छलजा तिनिग्रहस्थानैर्दूष्यतेसजल्पोनाम यत्रत्वेकःस्वपक्षंस्थापयति अन्यस्तुछलजातिनिग्रहस्थानैस्तत्पक्षंदूषयति नतुस्वपक्षंसाधयति सा वितंडानामकथा तत्रजल्पवितंडेविजिगीषमाणयोर्वादिनोःशक्तिपरीक्षामात्रफले वादस्तुवीतरागयोःशिष्याचार्ययोरन्ययोर्वातत्त्वनि

र्णयफलश्चातोऽसौश्रेष्ठत्वान्मद्विभूतिरित्यर्थः ॥ ३२ ॥ अक्षरेति अक्षराणांवर्णानांमध्येऽकारोऽस्मि तस्यसर्ववाङ्मयत्वेनश्रेष्ठत्वात् त
थाचश्रुतिः अकारोहिसर्वावाक्सैषास्पर्शोष्मभिर्व्यज्यमानाबह्वीनानारूपाभवतीति सामासिकस्यसमाससमूहस्यमध्येद्वंद्वःरामकृ
ष्णावित्यादिसमासोऽस्मि उभयपदप्रधानत्वेनश्रेष्ठत्वात् अक्षयः प्रवाहरूपःकालोऽहमेवकालःकलयतामित्यत्रायुर्गणनात्मकःसंवत्सरश
ताद्यायुःस्वरूपः कालयुक्तः सचतस्मिन्नायुषिक्षीणेसतिक्षीयते अत्रतुप्रवाहात्मकोऽक्षयःकालउच्यतइतिविशेषः कर्मफलविधातॄणांमध्ये

अक्षराणामकारोऽस्मि द्वंद्वः सामासिकस्यच ॥ अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ ३३ ॥
मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ॥ कीर्तिः श्रीर्वाक्चनारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥
बृहत्साम तथा साम्नां गायत्री छंदसामहम् ॥ मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥

विश्वतोमुखोधाता सर्वकर्मफलविधाताहमित्यर्थः ॥३३॥ मृत्युरिति संहारकारिणांमध्येसर्वहरोमृत्युरहम् भविष्यताभाविकल्याणानांप्रा
णिनामुद्भवः अभ्युदयोऽहम् नारिणांस्त्रीणांमध्येकीर्त्याद्याःसप्तदेवतारूपाः स्त्रियोऽहम् यासामाभासमात्रयोगेनप्राणिनःश्लाघ्याभवंति
ताःकीर्त्याद्याः स्त्रियोमद्विभूतयः ॥ ३४ ॥ बृहत्सामेति त्वामिंद्रहवामहइत्यस्यामृचिगीयमानंबृहत्साम तेनचेंद्रःसर्वेश्वरत्वेनस्तूयतइ
तिश्रैष्ठ्यंदर्शितं छंदोविशिष्टानांमंत्राणांमध्येगायत्रीमंत्रोऽहम् द्विजत्वापादकत्वेनसोमाहरणेनचश्रेष्ठत्वात् कुसुमाकरोवसंतः ॥ ३९ ॥

द्यूतमिति छलयतामन्योन्यवंचनपराणांसंबंधिद्यूतमस्मि तेजस्विनांप्रभाववतां तेजःप्रभावोऽस्मिजेतॄणांजयोऽस्मि व्यवसायिनामुद्यम
वतांव्यवसायउद्यमोऽस्मि सत्त्ववतांसात्विकानांसत्त्वमहं॥३६॥ वृष्णीनामिति वासुदेवोयोऽहंत्वामुपदिशामि धनंजयस्त्वमेवमद्विभूतिः
मुनीनांवेदार्थमननशीलानां वेदव्यासोऽहमस्मि कवीनांकाव्यदर्शिनांमध्येउशनानामकविः शुक्रः॥३७॥ दंडइति दमयतांदमनकर्तॄणांसं

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहं ॥ जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहं ॥ ३६ ॥
वृष्णीनां वासुदेवोऽस्मि पांडवानां धनंजयः ॥ मुनीनामप्यहं व्यासः कवीनामुशनाकविः ॥ ३७ ॥
दंडो दमयतामस्मि नीतिरस्मि जिगीषतां ॥ मौनं चैवास्मिगुह्यानां ज्ञानं ज्ञानवतामहं ॥ ३८ ॥
यच्चापि सर्वभूतानां बीजं तदहमर्जुन ॥ न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥
नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ॥ एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥

बंधीदंडोऽस्मि येनअसंयताअपिसंयताभवंतिसदंडोमद्विभूतिः जेतुमिच्छतांसंबंधिनीसामाद्युपायरूपानीतिरस्मि गुह्यानांगोप्यानांगो
पनहेतुर्मौनमवचनमहमस्मि नहितूष्णींस्थितस्याभिप्रायोज्ञायते ज्ञानवतांतत्त्वज्ञानिनांयज्ज्ञानंतदहम् ॥३८॥यदिति यदपिचसर्वभूता
नांबीजंप्ररोहकारणंतदहम् तत्रहेतुः मयाविनायत्स्यात् भवेत् तच्चराचरंभूतंनास्त्येवेति॥३९॥प्रकरणार्थमुपसंहरति नान्तइतिअनन्तत्वा

द्विभूतीनांताःसाकल्येनवक्तुंनशक्यंते एषतुविभूतेर्विस्तरउद्देशतःसंक्षेपतःप्रोक्तः ॥४०॥ पुनश्चसाकांक्षंप्रतिकथंचित्साकल्येनकथयाति यद्यदिति विभूतिमदैश्वर्ययुक्तम् श्रीमत्संपत्तियुक्तम् ऊर्जितंकेनाचित्प्रभावबलादिनागुणेनातिशयितंयद्यत्सत्त्वंवस्तुमात्रंतत्तदेवममतेजसः प्रभावस्यांशेनसंभूतंजानीहि ॥४१॥ अथवाकिमनेनपरिच्छिन्नज्ञानेन सर्वत्रसमदृष्टिमेवकुर्वित्याह अथवेति बहुनापृथग्ज्ञानेनकिंतवका र्यं यदिदंसर्वंजगदेकांशेनएकदेशमात्रेणविष्टभ्यधृत्वाव्याप्येतिवाअहमेवस्थितः नमद्व्यतिरिक्तंकिंचिदस्ति पादोस्यविश्वाभूतानीति

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ॥ तत्तदेवावगच्छत्वं मम तेजोंऽशसंभवम् ॥ ४१ ॥

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ॥ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥

इति श्रीमद्भग० विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥ ॥ अर्जुनउवाच ॥ ॥

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितं ॥ यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥

श्रुतेः ॥ ४२ ॥ इंद्रियद्वारतश्चित्तेबहिर्धावतिसत्यपि ईशदृष्टिविधानायविभूतीर्दशमेऽब्रवीत् ॥ १ ॥ इतिसुबोधिन्यांटीकायांदशमोऽ ध्यायः ॥ १० ॥ विभूतिवैभवंप्रोच्यकृपयापरयाहरिः दिदृक्षोरर्जुनस्याथविश्वरूपमदर्शयत् ॥ १ ॥ पूर्वाध्यायांतेविष्टभ्याहमिदंकृत्स्नमे कांशेनस्थितोजगदितिविश्वात्मकंपारमेश्वरंरूपमुपक्षिप्तं तद्दिदृक्षुःपूर्वोक्तमभिनंदन्नर्जुनउवाच मदनुग्रहायेतिचतुर्भिः ममानुग्रहायशो

कनिवृत्तयेपरमंमरमार्थनिष्ठंगुह्यंगोप्यमपिआध्यात्ममितिसंज्ञितम् आत्मानात्मविवेकविषयं यत्त्वयोक्तंवचः अशोच्यानन्वशोचस्त्वमि त्यादिषष्ठाध्यायपर्यंतंयद्वाक्यं तेनममायंमोहोऽहंहन्ताएतेहन्यंतइत्यादिलक्षणोभ्रमोविगतः विनष्टःआत्मनःकर्तृत्वाद्यभावोक्तेः॥१॥ किं च भवाप्ययाविति भूतानांभवाप्ययौसृष्टिप्रलयौत्वत्तःसकाशादेवभवतइतिश्रुतौमया अहंकृत्स्नस्यजगतःप्रभवःप्रलयस्तथाइत्यादौवि स्तरशः पुनः पुनः कमलस्यपत्रेइवसुप्रसन्नेविशालेअक्षिणीयस्यसः हेकमलपत्राक्षमाहात्म्यमपिचाव्ययम् अक्षयंश्रुतम् विश्वसृष्ट्यादि कर्तृत्वेऽपिशुभाशुभकर्मकारयितृत्वेऽपिबंधमोक्षादिविचित्रफलदातृत्वेऽपिअविकारावैषम्यासंगौदासीन्यादिलक्षणमपरिमितंमहत्त्वंश्रुतं

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ॥ त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययं ॥ २ ॥
एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ॥ द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो॥ योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

अव्यक्तंव्यक्तिमापन्नंमन्यंते मयाततमिदंसर्वं नचमांतानिकर्माणिनिबध्नंति समोऽहंसर्वभूतेषुइत्यादिना अतस्त्वत्परतंत्रत्वादपिजीवाना महंकर्तेत्यादियोमोहोविगतइतिभावः ॥ २ ॥ किंच एवमिति भवाप्ययौहिभूतानामित्यादिमयाश्रुतं यथाचेदानीमात्मानंत्वमात्थ विष्ट भ्याहमिदंकृत्स्नमित्येवंकथयसि हेपरमेश्वर एवमेतत् अत्राप्यविश्वासोममनास्तीत्यर्थः तथापिहेपुरुषोत्तम तवैश्वरंज्ञानैश्वर्यशक्तिबलवी र्यतेजोभिःसंपन्नंत्वद्रूपं कौतूहलादहंद्रष्टुमिच्छामि ॥ ३ ॥ नचाहंद्रष्टुमिच्छामीत्येतावतैवत्वयातद्रूपंदर्शयितव्यम् किंतर्हिमन्यसइति

योगिनएववयोगास्तेषामीश्वर मयाअर्जुनेनतद्रूपंद्रष्टुंशक्यमितियदिमन्यसे ततस्तर्हितद्रूपवंतमात्मानंअव्ययंनित्यंममदर्शय ॥ ४ ॥ एवंप्रार्थितःसन्नत्यद्भुतंरूपंदर्शयिष्यन्सावधानोभवेत्येवमर्जुनमभिमुखीकरोति श्रीभगवानुवाच पश्येतिचतुर्भिः रूपस्यैकत्वेऽपिनानाविधत्वाद्बहुपाणीतिबहुवचनं अपरिमितान्यनेकप्रकाराणिदिव्यान्यलौकिकानिममरूपाणिपश्य वर्णाःशुक्लकृष्णादयः आकृतयोऽवयवसन्नि

श्रीभगवानुवाच ॥ पश्य मे पार्थरूपाणि शतशोऽथ सहस्रशः ॥ नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥ पश्यादित्यान्वसून् रुद्रानश्विनौ मरुतस्तथा ॥ बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥ इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ॥ मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥

वेशविशेषाः नानाअनेकावर्णाआकृतयश्चयेषांतानिनानावर्णाकृतीनि ॥ ८ ॥ तान्येवाह पश्येति आदित्यादीन्ममदेहेपश्य मरुतएकोनपंचाशद्देवविशेषान् अदृष्टपूर्वाणि त्वयावान्येनवापूर्वमदृष्टानि रूपाणि आश्चर्याण्यत्यद्भुतानि ॥ ६ ॥ किंच इहेति तत्रतत्रपरिभ्रमता वर्षकोटिभिरपिद्रष्टुमशक्यंकृत्स्नमपिचराचरसहितंजगदिहास्मिन्ममदेहेऽवयवरूपेणैकत्रैवस्थितमद्याधुनैवपश्ययच्चान्यज्जगदाश्रयभूतं कारणस्वरूपम् जगतश्चावस्थाविशेषादिकम् जयपराजयादिकंच यदप्यन्यद्द्रष्टुमिच्छसितत्सर्वंपश्य ॥ ७ ॥ ॥

यदुक्तमर्जुनेन मन्यसेयदितच्छक्यमिति तत्राह नात्विति अनेनैवतुस्वीयेनचर्मचक्षुषामांद्रष्टुंनशक्यसे शक्तोनभविष्यसि अतोऽहं दिव्यमलौकिकंज्ञानात्मकंचक्षुस्तुभ्यंददामिममैश्वरमसाधारणंयोगंयुक्तिमघटितघटनासामर्थ्यंपश्य ॥८॥एवमुक्त्वाभगवानर्जुनायरूपंदर्शितवान् तच्चरूपंदृष्ट्वार्जुनः श्रीकृष्णंविज्ञापितवानितीममर्थं एवमुक्त्वेत्यादिभिःषड्भिःश्लोकैःधृतराष्ट्रंप्रति संजयउवाच एवमिति हेराजन् धृतराष्ट्र महायोगेश्वरश्वहरिःपरमंऐश्वरंरूपंदर्शितवान् ॥ ९ ॥ कथंभूतंतदित्यतआह अनेकेति अनेकानिवक्त्राणिनयना

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ॥ दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥

संजय उवाच ॥ एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ॥ दर्शयामास पार्थाय परमं रूपमैश्वरं ॥

॥ ९ ॥ अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ॥ अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

दिव्यमाल्यांबरधरं दिव्यगन्धानुलेपनम् ॥ सर्वाश्चर्यमयंदेवमनन्तं विश्वतोमुखम् ॥ ११ ॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ॥ यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥

निचयस्मिन्तत् अनेकानामद्भुतानांदर्शनंयस्मिन्तत् अनेकानिदिव्याभरणानियस्मिन्तत् दिव्यान्यनेकानिउद्यतानिआयुधानिचयस्मिन्तत् ॥ १० ॥ किंच दिव्येति दिव्यानिमाल्यांबराणिचधारयतीतितथा दिव्योगंधोयस्यतादृशमनुलेपनंयस्यतत् सर्वाश्चर्यमयमनेकाश्चर्यप्रायम् देवंद्योतनात्मकम् अनंतमपरिच्छिन्नम् विश्वतःसर्वतोमुखानियस्मिन्तत्॥११॥ विश्वरूपदीप्तेर्निरुपमत्वमाह दिवीति

दिव्याकाशेसूर्यसहस्रस्ययुगपदुत्थितस्तस्ययदियुगपदुत्थिताभाःप्रभाभवेत् तर्हिसातदामहात्मनोविश्वरूपस्यभासःप्रभायाःकथंचित्सदृ
शीस्यात् नान्योपमास्तीत्यर्थः तथाभूतंरूपंदर्शयामासेतिपूर्वेणान्वयः ॥ १२ ॥ ततःकिंवृत्तमित्यपेक्षायामाहसंजयः तत्रेति अनेकधाप्र
विभक्तंनानाविभागेनावस्थितंकृत्स्नंजगद्देवदेवस्यशरीरेतदवयवत्वेनैकत्रैवस्थितंतदापांडवोऽर्जुनोऽपश्यत् ॥ १३ ॥ एवंदृष्ट्वाकिंकृतवा
नित्यतआह ततइति ततोदर्शनानंतरं विस्मयेनाविष्टोव्याप्तःसन्हृष्टान्युत्पुलकितानिरोमाणियस्यसधनंजयोदेवंतमेवशिरसाप्रणम्यकृ

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ॥ अपश्यद्देवदेवस्य शरीरे पांडवस्तदा ॥ १३ ॥ ततः सविस्मयाविष्टो
हृष्टरोमा धनंजयः ॥ प्रणम्य शिरसा देवं कृतांजलिरभाषत ॥१४॥ ॥ अर्जुन उवाच ॥ ॥ पश्यामि देवांस्तव देव
देहे सर्वांस्तथा भूतविशेषसंघान् ॥ ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥१५॥ अनेकबाहू
दरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनंतरूपं ॥ नांतं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥

तांजलिःसंपुटीकृतहस्तोभूत्वाऽभाषत उक्तवान् ॥ १४ ॥ भाषणमेवाह पश्यामीतिसप्तदशभिः हेदेव तवदेहे देवानादित्यादीन् पश्यामि
तथासर्वान् भूतविशेषाणांजरायुजांडजादीनांसंघांश्च तथादिव्यानृषीन्वसिष्ठादीन् उरगांश्चतक्षकादीन् तथादेवानामीशंस्वामिनं ब्रह्मा
णंच कथंभूतम् कमलासनस्थम् पृथ्वीपद्मकर्णिकायांमेरौस्थितम् यद्वा त्वन्नाभिपद्मासनस्थम् ॥ १५ ॥ किंच अनेकेति अनेका

न्विबाह्वादीनियस्यताद्दशंपश्यामि अनंतानिरूपाणियस्यतंत्वांसर्वतःपश्यामि तवतुअंतंमध्यमादिंचनपश्यामि सर्वगतत्वात् ॥ १६ ॥ किंच किरीटिनमिति किरीटिनंमुकुटवन्तं गदिनंगदावन्तं चक्रिणंचक्रवन्तं सर्वतोदीप्तिमन्तं तेजःपुंजरूपम् तथादुर्निरीक्ष्यंद्रष्टुमशक्यम् तत्रहेतुः दीप्तयोनलार्कयोर्द्युतिरिवद्युतिस्तेजोयस्यतम् अतएवाप्रमेयम् एवंभूतइतिनिश्चेतुमशक्यम् त्वांसमन्ततःपश्यामि ॥ १७ ॥ यस्मादेवंतवातर्क्यमैश्वर्यंतस्मात् त्वमिति त्वमेवाक्षरंपरमंब्रह्म कथंभूतं वेदितव्यंमुमुक्षुभिर्ज्ञातव्यम् त्वमेवास्याविश्वस्यपरं

किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमंतं ॥ पश्यामि त्वां दुर्निरीक्ष्यं समंताद्दी

प्तानलार्कद्युतिमप्रमेयं ॥ १७ ॥ त्वमक्षरंपरमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ॥

त्वमव्ययःशाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥ अनादिमध्यांतमनंतवीर्य

मनंतबाहुं शशिसूर्यनेत्रम् ॥ पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥

निधानम् निधीयतेऽस्मिन्निति निधानंप्रकृष्टाश्रयः अतएवत्वमव्ययोनित्यः शाश्वतस्यनित्यस्यधर्मस्यगोप्तापालकः सनातनश्चिरन्तनः पुरुषोमेमतःसंमतोऽसि ॥ १८ ॥ किंच अनादीति अनादिमध्यान्तमुत्पत्तिस्थितिप्रलयरहितम् अनन्तंवीर्यंप्रभावोयस्यतम् अनन्तबाहुं अनन्ताबाहवोयस्यतम् शशिसूर्यौ नेत्रेयस्यतम् ताद्दशंत्वांपश्यामि तथादीप्तोहुताशोऽग्निर्वक्त्रेषुयस्यतम् स्वतेजसा इदंवि

श्वं तपंतसंतापयंतंपश्यामि ॥ १९ ॥ किंच द्यावापृथिव्योरिति द्यावापृथिव्योरिदमंतरं हि अंतरिक्षंत्वयैकेनव्याप्तम् दिशश्चसर्वा
व्याप्ताः अद्भुतंअदृष्टपूर्वंत्वदीयमिदमुग्रंघोरंरूपंदृष्ट्वालोकत्रयंप्रव्यथितमतिभीतंपश्यामिइतिपूर्वस्यैवानुषंगः ॥ २० ॥ किंच अमी
हीति अमीसुरसंघाः भीताःसंतः त्वांविशंतिशरणंप्रविशंति तेषांमध्येकेचिदतिभीताः दूरतएवस्थित्वाकृतसंपुटकरयुगुलाः संतोगृ

द्यावापृथिव्योरिदमंतरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः॥ दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्य
थितं महात्मन्॥२०॥अमी हि त्वां सुरसंघा विशंति केचिद्भीताः प्रांजलयो गृणंति॥ स्वस्तीत्युक्त्वा
महर्षिसिद्धसंघाः स्तुवंति त्वां स्तुतिभिःपुष्कलाभिः ॥ २१ ॥ रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ॥ गंधर्वयक्षासुरसिद्धसंघा वीक्षंते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥

णंति जयजयरक्षरक्षेतिप्रार्थयंते स्पष्टमन्यत् ॥ २१ ॥ किंच रुद्रेति रुद्राश्चादित्याश्चवसवश्चयेचसाध्यानामदेवाः विश्वेदेवाः अ
श्विनौदेवौ मरुतोमरुद्गणाः ऊष्माणंपिबंतीत्यूष्मपाःपितरः ऊष्मभागाहिपितरइत्यादिश्रुतेः स्मृतिश्च यावदुष्णंभवेदन्नंयावदश्नंति
वाग्यताः पितरस्तावदश्नंतियावन्नोक्ताहविर्गुणाइति गंधर्वाश्चयक्षाश्चासुराश्चविरोचनादयः सिद्धानांसंघाश्चतेसर्वएव विस्मिताःसं

तः त्वांवीक्षंतइत्यन्वयः ॥ २२ ॥ किंच रूपमिति हेमहाबाहो महदत्यूर्जितंतवरूपंदृष्ट्वालोकाःसर्वेप्रव्यथिताः अतिभीताः त थाहंप्रव्यथितोऽस्मि कीदृशंरूपंदृष्ट्वा बहूनिवक्त्राणिनेत्राणिचयस्मिन्तत् बहवोबाहवऊरवःपादाश्चयस्मिन्तत् बहूनिउदराणियस्मिं स्तत् बहुभिर्दंष्ट्राभिःकरालंविकृतं रौद्रमित्यर्थः ॥ २३ ॥ नकेवलंभीतोऽहमित्येतावदेव अपितु नभःस्पृशमिति नभःस्पृशतीति नभःस्पृक् तं अंतरिक्षव्यापिनमित्यर्थः दीप्तंतेजोयुक्तम् अनेकेवर्णायस्यतमनेकवर्णम् व्यात्तानिविवृतान्याननानियस्यतम् दीप्ता

रूपं महत्ते बहुवक्त्रनेत्रं माहाबाहो बहुबाहूरुपादं ॥ बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहं ॥ २३ ॥ नभः स्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रं ॥ दृष्ट्वा हि त्वां प्रव्यथितांतरात्मा धृतिं न विंदामि शमं च विष्णो ॥२४॥ दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि॥ दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास ॥२५॥ अमी चत्वां धृतराष्ट्रस्य पुत्राःसर्वे सहैवावनिपालसंघैः॥भीष्मो द्रोणः सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः॥२६

निविशालानिनेत्राणियस्यतम् एवंभूतंत्वांदृष्ट्वाप्रव्यथितोंऽतरात्मामनोयस्यसोऽहम् धृतिंधैर्यमुपशमंचनलभे ॥ २४ ॥ किंच दं ष्ट्रेति भोदेवेश तवमुखानिदृष्ट्वाभयावेशेनदिशोनजानामि शर्मचसुखंनलभे भोजगन्निवास प्रसन्नोभव कीदृशानिमुखानि दंष्ट्राभिःक रालानि कालानलःप्रलयाग्निःतत्सदृशानि ॥ २५ ॥ यच्चान्यद्द्रष्टुमिच्छसीत्यनेनास्मिन्संग्रामेभाविजयपराजयादिकंचममदेहेपश्ये

तियद्भगवताक्तं तदिदानीं पश्यन्नाह अमीचेतिपंचभिः अमीधृतराष्ट्रस्यपुत्रादुर्योधनादयःसर्वे अवनिपालानांजयद्रथादीनांराज्ञांसंघैः सहैव तववक्राणिविशंतीत्युत्तरेणान्वयः तथा भीष्मश्चद्रोणश्चासौसूतपुत्रःकर्णश्च नकेवलंतएवविशंति अपितुप्रतियोद्धारोयेऽस्मदीयायोधमुख्याःशिखंडिधृष्टद्युम्नादयः तैःसह ॥ २६ ॥ वक्राणीति एतेसर्वेत्वरमाणाधावंतइवदंष्ट्राभिःकरालानिभयंकराणिवक्राणि विशंति तेषांमध्येकेचिच्चूर्णीकृतैरुत्तमांगैःशिरोभिरुपलक्षितादंतसंधिषुसंश्लिष्टाःसंदृश्यंते ॥ २७ ॥ प्रवेशमेवदृष्टांतेनाह यथेति न

वक्राणि ते त्वरमाणा विशंति दंष्ट्राकरालानि भयानकानि ॥ केचिद्विलग्ना दशनांतरेषु संदृश्यंते
चूर्णितैरुत्तमांगैः ॥ २७ ॥ यथा नदीनां बहवोंऽबुवेगाः समुद्रमेवाभिमुखा द्रवंति ॥ तथातवा
मी नरलोकवीराविशंति वक्राण्यभिविज्वलंति ॥ २८ ॥ यथा प्रदीप्तं ज्वलनं पतंगा विशंति
नाशायसमृद्धवेगाः ॥ तथैव नाशाय विशंति लोकास्तवापि वक्राणि समृद्धवेगाः ॥ २९ ॥

दीनामनेकमार्गप्रवृत्तानांबहवःअंबूनांवारीणां वेगाःप्रवाहाःसमुद्राभिमुखाःसंतोयथासमुद्रमेवद्रवंति प्रविशंति यथाअमीयेनरलोकवीराः तेअभिविज्वलंति सर्वतःप्रदीप्यमानानिवक्राणिप्रविशंति ॥ २८ ॥ अवशत्वेनप्रवेशेनदीवेगोदृष्टांतउक्तः बुद्धिपूर्वकप्रवेशेदृष्टांतमाह यथेति प्रदीप्तंज्वलनमग्निंपतंगाःसूक्ष्मपक्षिविशेषाः बुद्धिपूर्वकंसमृद्धोवेगोयेषां तेयथानाशायमरणायैवाविशंतितथैवलोकाएतेजनाअ

पितवमुखानिप्रविशंति ॥ २९ ॥ ततःकिमतआह लेलिह्यसइति ग्रसमानोगिलन् समग्रान्लोकान्सर्वानेतान्वीरान्समंतात्सर्वतो लेलिह्यसे अतिशयेनभक्षयसि कैः ज्वलद्भिर्वदनैः किंच हेविष्णो तवभासोदीप्तयस्तेजोभिर्विस्फुरणैःसमस्तंजगद्व्याप्यतीव्राःसत्यः प्रतपंति संतापयंति ॥ ३० ॥ यतएवंतस्मात् आख्याहीति भवानुग्ररूपःकइत्याख्याहिकथय तुभ्यंनमोऽस्तु हेदेववरप्रसीदप्रसन्नोभव भवंतमाद्यंपुरुषंविशेषेणज्ञातुमिच्छामि यतस्तवप्रवृत्तिंचेष्टांकिमर्थमेवंप्रवृत्तोऽसीतिनजानामि एवंभूतस्यतवप्रवृत्तिंवार्त्तामपिन

लेलिह्यसे ग्रसमानः समंताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ॥ तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपंति विष्णो ॥ ३० ॥ आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ॥ विज्ञातुमिच्छामि भवंतमाद्यं नहि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥ ॥ श्रीभगवानुवाच ॥ ॥ कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः ॥ ऋतेऽपि त्वां न भविष्यंति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३२ ॥

जानामीतिवा ॥ ३१ ॥ एवंप्रार्थितःसन् श्रीभगवानुवाच कालोऽस्मीतित्रिभिः लोकानांक्षयकर्त्ताप्रवृद्धोऽत्युग्रः कालोऽस्मि लोकान्प्राणिनः संहर्त्तुमिहलोकेप्रवृत्तोऽस्मि अतःऋतेऽपित्वामिति त्वांहंतारंविनापिनभविष्यंति नजीविष्यंति यद्यपित्वयानहंतव्याएतेतथापिमया कालात्मनाग्रस्ताः संतोमरिष्यंत्येव केते प्रत्यनीकेषु अनीकान्यनीकानिप्रतिभीष्मद्रोणादीनांसर्वासुसेनासुयेयोद्धारोऽवस्थितास्ते

सर्वाप ॥ ३२ ॥ तस्मादिति यस्मादेवं तस्मात्त्वंयुद्धायोत्तिष्ठ देवैरपिदुर्जयाःभीष्मद्रोणादयोऽर्जुनेननिर्जिताइत्येवंभूतंयशोलभस्व प्राप्नुहि अयत्नेनशत्रून्‌जित्वासमृद्धंराज्यंभुंक्ष्व एतेचतवशत्रवस्त्वदीययुद्धात्पूर्वमेवमयैवकालात्मनानिहतप्रायाः तथापित्वंनिमित्तमा त्रंभव हेसव्यसाचिन् सव्येनवामहस्तेनसाचितुंशरान्‌संधातुंशीलंयस्येतिव्युत्पत्त्यावामेनापिबाणक्षेपातसव्यसाचीत्युच्यते ॥ ३३ ॥ नचैतद्विघ्नःकरतन्नोगरीयइत्यादिर्याशंकासाऽपिनकार्येत्याह द्रोणंचेति येभ्यस्त्वंशंकसेतान्‌द्रोणादीन्मयैवहतांस्त्वंजहि घातय माव्य

तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुंक्ष्व राज्यं समृद्धम्॥ मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्॥ ३३ ॥ द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान्॥ मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान्॥ ३४ ॥ ॥ संजय उवाच ॥ ॥ एतच्छ्रुत्वा वचनं केशवस्य कृतांजलिर्वेपमानः किरीटी ॥ नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥ ३५ ॥

थिष्ठाः शोकंमाकार्षीः सपत्नान्‌शत्रून् रणेयुद्धेनिश्चितंजेतासिजेष्यसि ॥ ३४ ॥ ततोयद्वृत्तंतद्धृतराष्ट्रंप्रतिसंजयउवाच एतदिति एत त्पूर्वश्लोकत्रयात्मकंकेशवस्यवचनंश्रुत्वा वेपमानःकंपमानः किरीटीअर्जुनः कृतांजलिःसंपुटीकृतहस्तः कृष्णंनमस्कृत्यपुनरप्याह उक्तवान् कथमाह भयहर्षाद्यावेशवशाद्गद्गदेनकंठकंपेनसहवर्त्ततइतिसगद्गदंयथाभवतितथा किंच भीतादपिभीतःसन् प्रणम्यअवनतो

भूत्वा ॥ ३९ ॥ स्थानइत्येकादशभिरर्जुनस्योक्तिः स्थानेइत्यव्ययंयुक्तमित्यस्मिन्नर्थे हेहृषीकेशयतएवंत्वमद्भुतप्रभावोभक्तवत्सलश्च
अतस्तवप्रकीर्त्यामाहात्म्यसंकीर्त्तनेननकेवलमहमेवप्रहृष्यामिकिंतु जगत्सर्वंप्रहृष्यति प्रकर्षेणहर्षं प्राप्नोति एतत्तुस्थाने युक्तमित्यर्थः
तथा जगदनुरज्यतेअनुरागंचोपैतिइतियत् तथा रक्षांसिभीतानिसंतिदिशःप्रतिद्रवंतिपलायंतइतियत् सर्वेयोगतपोमंत्रादिसिद्धानांसं
घानमस्यंतिप्रणमंतीतियत् एतच्चस्थाने युक्तमेव नचित्रमित्यर्थः ॥ ३६ ॥ तत्रेहेतुमाह कस्मादिति हेमहात्मन् हेअनंतहेदेवेश हेज

॥ अर्जुन उवाच ॥ स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ॥ रक्षांसि भीतानि दिशो
द्रवंति सर्वे नमस्यंति च सिद्धसंघाः ॥ ३६ ॥ कस्माच्च ते न नमेरन्महात्मन् गरीयसे ब्रह्मणोऽप्या
दिकर्त्रे ॥ अनंतदेवेशजगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥ त्वमादिदेवः पुरुषः पुराण
स्त्वमस्य विश्वस्य परं निधानम् ॥ वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनंतरूप ॥३८॥

गन्निवास कस्माद्धेतोस्तेतुभ्यंननमेरन् नमस्कारंनकुर्युः कथंभूताय ब्रह्मणोऽपिगरीयसेगुरुतराय आदिकर्त्रेच ब्रह्मणोऽपिजनकायकिंच
सद् व्यक्तंअसदव्यक्तंचताभ्यांपरंमूलकारणंयदक्षरंब्रह्मतच्चत्वमेव एतैर्नवभिर्हेतुभिस्त्वांसर्वेनमस्यंतीतिनचित्रमित्यर्थः॥३७॥किंच त्वमि
ति त्वमादिदेवः देवानामादिः यतःपुराणःअनादिःपुरुषस्त्वम् अतएव त्वमस्यविश्वस्यपरंनिधानम् लयस्थानम् तथाविश्वस्यवेत्तावे

दिताज्ञातोचत्वम् यच्चवद्यवस्तुजातं परंचधामवैष्णवंपदंतदपित्वमेवासि अतएवहेअनंतरूप त्वयैवविश्वमिदंततंव्याप्तंएतैश्चसप्तभिर्हेतु भिस्त्वमेवनमस्कार्यइतिभावः ॥ ३८ ॥ इतश्चत्वमेवसर्वैर्नमस्कार्यः सर्वदेवात्मकत्वादितिस्तुवन्स्वयमपिनमस्करोतिवायुरितिवाय्वा दिरूपस्त्वमितिसर्वदेवतात्मकत्वोपलक्षणार्थमुक्तम् प्रजापतिःपितामहःतस्यापिजनकत्वात्प्रपितामहस्त्वमतस्तेतुभ्यंसहस्रकृत्वः सह स्रशोनमोऽस्तु भूयोऽपिपुनरपिसहस्रकृत्वोनमोनमइति भक्तिश्रद्धाभरातिरेकेणनमस्कारेषुतृप्तिमनधिगच्छन्बहुशः प्रणमति ॥ ३९ ॥

वायुर्यमोऽग्निर्वरुणः शशांकः प्रजापतिस्त्वं प्रपितामहश्च ॥ नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमोनमस्ते ॥ ३९ ॥ नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वतएव सर्व ॥ अनंतवी र्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसिसर्वः ॥ ४० ॥ सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ॥ अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वापि ॥ ४१ ॥

किंच नमइति हेसर्व सर्वात्मन् सर्वास्वपिदिक्षुतुभ्यंनमोस्तु सर्वात्मकत्वमुपपादयन्नाह अनंतंवीर्यंसामर्थ्यंयस्य तथापिअमितोविक्र मःपराक्रमोयस्यसः एवंभूतस्त्वंसर्वंविश्वंसम्यगंतर्बहिश्चसमाप्नोषिव्याप्नोषि सुवर्णमिवकटककुंडलादि स्वकार्यंव्याप्यवर्तसे ततःसर्व रूपोऽसि ॥ ४० ॥ इदानींभगवंतंक्षमापयतिसखेतिद्वाभ्याम् त्वांप्राकृतःसखेतिमत्वाप्रसभंहठेनातिरस्कारेणयदुक्तंतत्क्षामयेत्वामित्यु

त्तरेणान्वयः किंतत हेकृष्णहेयादवहेसखेति संधिरार्षः प्रसभोक्तौहेतुःतवमहिमानमिदंचविश्वरूपमजानता मयाप्रमादात्प्रणयेन स्नेहे नापिवायदुक्तमिति ॥ ४१ ॥ किंच यच्चेति हेअच्युत यच्चपरिहासार्थंक्रीडादिषुतिरस्कृतोऽसि एकःकेवलःसखीन्विनारहसिस्थित इत्यर्थः अथवातत्समक्षंतेषांपरिहसतांसखीनांसमक्षंपुरतोऽपि तत्सर्वमपराधजातंत्वांअप्रमेयमचिंत्यप्रभावंक्षामये क्षमांकारयामि ॥ ॥ ४२ ॥ अचिंत्यप्रभावमेवाह पितेति नविद्यतेप्रतिमाउपमायस्यसोऽप्रतिमः तथाविधःप्रभावोयस्यतत्व हेअप्रतिमप्रभाव त्वमस्य

यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु॥एकोथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामह
मप्रमेयं ॥ ४२ ॥ पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ॥नत्वत्समोऽस्त्य
भ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभावः ॥ ४३ ॥ तस्मात्प्रणम्य प्रणिधाय कायं प्रसा
दये त्वामहमीशमीड्यं ॥ पितेव पुत्रस्य सखेव सख्युःप्रियःप्रियायार्हसि देवसोढुम् ॥ ४४ ॥

चराचरस्यलोकस्यपिताजनकोऽसि अतएवपूज्यश्चगुरुश्च गुरोरपिगरीयान्गुरुतरः अतोलोकत्रयेपित्वत्समएवतावदन्योनास्ति प रमेश्वरस्यान्यस्याभावात् त्वत्तोऽभ्यधिकःपुनःकुतःस्यात् ॥ ४३ ॥ यस्मादेवं तस्मादिति तस्मात्त्वामीशंजगतःस्वामिनमी ड्यंस्तुत्यंप्रसादये प्रसादयामि कथं कायंप्रणिधायदंडवन्निपात्य प्रणम्यप्रकर्षेणनत्वा अतस्त्वंममापराधंसोढुंक्षंतुमर्हसि कस्यकइव पु

त्रस्यापराधंक्षमापितायथासहते सख्युर्मित्रस्यापराधंसखानिरुपाधिबंधुर्यथा प्रियश्चप्रियायाअपराधंतत्प्रियार्थंयथातद्वत् ॥ ४४ ॥
एवंक्षमापयित्वाप्रार्थयते अदृष्टपूर्वमितिद्वाभ्यां हेदेव पूर्वमदृष्टंतवरूपंदृष्ट्वाहृषितोस्मि हृष्टोऽस्मि तथाभयेनचमेमनः प्रव्यथितंप्रचलितं
तस्मान्ममव्यथानिवृत्त्येतदेवरूपंदर्शय हेदेवेशहेजगन्निवासप्रसन्नोभव॥४५॥तदेवरूपंविशेषयन्नाह किरीटिनमिति किरीटिनंगदावंतंच
क्रहस्तंचत्वांद्रष्टुमिच्छामि पूर्वंयथादृष्टोऽसितथैव अतोहेसहस्रबाहो विश्वमूर्त्तेइदंविश्वरूपंसंहृत्यतेनैवकिरीटादियुक्तेनचतुर्भुजेनरूपेण

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ॥ तदेव मे दर्शय देव रूपं प्रसीद देवेश
जगन्निवास ॥ ४५ ॥ किरीटिनं गदिनं चक्रहस्तमिच्छामित्वां द्रष्टुमहं तथैव ॥ तेनैव रूपेण
चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥ ॥ श्रीभगवानुवाच ॥ मया प्रसन्नेनतवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ॥ तेजोमयं विश्वमनंतमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ४७ ॥

भव आविर्भव तदनेनश्रीकृष्णमर्जुनःपूर्वमपिकिरीटादियुक्तमेवपश्यतीतिगम्यते यत्तुपूर्वमुक्तंविश्वरूपदर्शने किरीटिनंगदिनंचक्रिणंच
पश्यामीतितद्वहुकिरीटाद्यभिप्रायेण यद्वा एतावंतंकालंयंत्वांकिरीटिनंगदिनंचक्रिणंचसुप्रसन्नमपश्यं तमेवइदानींतेजोराशिंदुर्निरीक्ष्यं
पश्यामीत्येवंतत्रबहुवचनव्यक्तिरित्यविरोधः ॥ ४६ ॥ एवंप्रार्थितःसन्तमाश्वासयन् श्रीभगवानुवाच मयेतित्रिभिः हेअर्जुन किमि

तिबिभेषि यतोमयाप्रसन्नेनकृपयातवेदंपरमुत्तमंरूपंदर्शितम् आत्मनोममयोगाद्योगमायासामर्थ्यात् परत्वमेवाह तेजोमयंविश्वंविश्वात्मकमनंतमाद्यंच यन्ममरूपंत्वदन्येनत्वादृशाद्भक्तादन्येननपूर्वंदृष्टंतत् ॥ ४७ ॥ एतद्दर्शनमतिदुर्लभंलब्ध्वात्वंकृतार्थोऽसीत्याह नेति वेदाध्ययनातिरेकेणयज्ञाध्ययनस्याभावाद्यज्ञशब्देनयज्ञविद्याःकल्पसूत्राद्यालक्ष्यंते वेदानांयज्ञविद्यानांचाध्ययनैरित्यर्थः नचदानैर्नचक्रियाभिरग्निहोत्रादिभिः नचोग्रैस्तपोभिश्चांद्रायणादिभिः एवंरूपोऽहंत्वदन्येनमनुष्यलोकेद्रष्टुंशक्यः अपितुत्वमेवकेवलंमत्प्रसा

न वेदयज्ञाध्ययनैर्नदानैर्न चक्रियाभिर्न तपोभिरुग्रैः ॥ एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर॥ ४८ ॥ मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ् ममेदं ॥ व्यपेतभीःप्रीतमनाःपुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥ संजयउवाच ॥ इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः॥ आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५० ॥

देनदृष्टाकृतार्थोऽसि ॥ ४८ ॥ एवमपिचेत्तवेदंरूपंघोरंदृष्ट्वाव्यथाभवतितर्हितदेवरूपंदर्शयामीत्याह मातइति ईदृक्ईदृशंमदीयंघोरंरूपंदृष्ट्वातेव्यथामास्तु विमूढभावोविमूढत्वंचमास्तु व्यपगतभयःप्रीतमनाश्चसन्पुनस्त्वंतदेवेदंममरूपंप्रकर्षेणपश्य ॥ ४९ ॥ एवमुक्त्वा प्राक्तन्मेवरूपंदर्शितवानितिसंजयउवाच इतीति श्रीवासुदेवोऽर्जुनमेवमुक्त्वायथापूर्वमासीत्तथैवकिरीटादियुक्तंचतुर्भुजंस्वीयंरूपंपुन

दर्शयानास एनमर्जुनमीतमेवप्रसन्नवपुर्भूत्वापुनरप्याश्वासितवान् महात्माविश्वरूपःकृपालुरितिवा ॥ ९० ॥ ततोनिर्भयःसन्नर्जुन
उवाच दृष्ट्वेति सचेताः प्रसन्नचित्तइदानींसंवृत्तः जातोऽस्मि प्रकृतिंस्वास्थ्यंचप्राप्तोऽस्मि शेषंस्पष्टम् ॥ ९१ ॥ स्वकृतस्यानुग्रह
स्यातिदुर्लभत्वंदर्शयन् श्रीभगवानुवाच सुदुर्दर्शमिति यन्ममविश्वरूपंत्वंदृष्टवानसि इदंसुदुर्दर्शमत्यंतंद्रष्टुमशक्यम् अतोदेवाअप्यस्य

॥ अर्जुन उवाच ॥ दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन॥इदानीमस्मि संवृत्तः सचेताः प्रकृतिंगतः
॥५१॥श्रीभगवानुवाच॥सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम॥देवा अप्यस्य रूपस्य नित्यं दर्शनकां
क्षिणः ॥ ५२ ॥ नाहं वेदैर्न तपसा न दानेन नचेज्यया ॥ शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा
॥ ५३ ॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन॥ ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५४ ॥
मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः ॥ निर्वैरः सर्वभूतेषु यः स मामेति पांडव ॥ ५५ ॥

रूपस्यसर्वदादर्शनमिच्छंति नकेवलंपुनरिदंपश्यंति ॥ ९२ ॥ तत्रहेतुः नाहमितिस्पष्टार्थः ॥ ९३ ॥ केनोपायेनतर्हिद्रष्टुंशक्यइ
ति तत्राह भक्त्येति अनन्ययामदेकनिष्ठयाभक्त्यातुएवंभूतोविश्वरूपोऽहंतत्त्वेनपरमार्थतोज्ञातुंशक्यःशास्त्रतः द्रष्टुंप्रत्यक्षतःप्रवेष्टुंच
तादात्म्येनशक्यः नान्यैरुपायैः ॥ ९४ ॥ अतःसर्वशास्त्रसारंपरमंरहस्यंशृण्वित्याह मत्कर्मकृदिति मदर्थंकर्मकरोतीतिमत्कर्मकृत

अहमेवपरमःपुरुषार्थोयस्यसः मम्नैवभक्तोमामेवाश्रितः पुत्रादिषुसंगवर्जितोनिर्वैरश्चसर्वभूतेषु एवंभूतोयःसमांप्राप्नोति नान्यइति॥५५॥ देवैरपिसुदुर्दर्शंतपोज्ञानादिकोटिभिः ॥ भक्तायभगवानेवंविश्वरूपमदर्शयत् ॥ १ ॥ इतिसुबोधिन्यांटीकायामेकादशोऽध्यायः ॥ ११ ॥ निर्गुणोपासनस्यैवंसगुणोपासनस्यच ॥ श्रेयःकतरदित्येवंनिर्णेतुंद्वादशोद्यमः ॥ १ ॥ पूर्वाध्यायांतेमत्कर्मकृन्मत्परमइत्येवंभक्तिनिष्ठस्य श्रेष्ठत्वमुक्तम्कौंतेयप्रतिजानीहीत्यादिना तत्रतस्यैवश्रेष्ठत्वंवर्णितं तथातेषांज्ञानीनित्ययुक्तएकभक्तिर्विशिष्यतइत्यादिनासर्वंज्ञानप्लवे

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो नामैकादशो ऽध्यायः ॥ ११ ॥ अर्जुन उवाच ॥ एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते॥ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥ श्रीभगवानुवाच ॥ मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ॥ श्रद्धया परयोपेतास्ते मे युक्ततमा मताः॥२॥

नैववृजिनंसंतरिष्यसीत्यादिनाचज्ञाननिष्ठस्यश्रेष्ठत्वमुक्तम् एवमुभयोःश्रैष्ठ्येऽपिविशेषजिज्ञासयाभगवंतंप्रतिअर्जुनउवाच एवमिति एवंस र्वेकर्मार्पणादिनासततंयुक्तास्त्वन्निष्ठाःसंतोयेभक्तास्त्वांविश्वरूपंसर्वज्ञंसर्वशक्तिंपर्युपासतेध्यायंति येचाप्यक्षरंब्रह्मअव्यक्तंनिर्विशेषंउपास तेतेषांउभयेषांमध्येअतिशयेनकेयोगविदःश्रेष्ठाइत्यर्थः ॥ १ ॥ तत्रप्रथमाःश्रेष्ठाइत्युत्तरंश्रीभगवानुवाच मयीति मयिपरमेश्वरेसर्वज्ञ त्वादिगुणविशिष्टेमनआवेश्यैकाग्रंकृत्वा नित्ययुक्ताःमदर्थकर्मानुष्ठानादिनामन्निष्ठाःसंतःश्रेष्ठयाश्रद्धयायुक्तायेमामाराधयंति तेयुक्ततमा

मभा[illegible]मताः ॥ २ ॥ [illegible]हइतरेकिंनश्रेष्ठाइत्यतआह येत्वितिद्वाभ्याम् येत्वक्षरंपर्युपासतेध्यायंतितेतपिमामेवप्राप्नुवंतीतिद्वयोरन्वयःअक्ष
रस्यलक्षणमनिर्देश्यमित्यादि अनिर्देश्यंशब्देननिर्देष्टुमशक्यम् यतोऽव्यक्तंरूपादिहीनं सर्वत्रगंसर्वव्यापि अव्यक्तत्वादेवाचिंत्यं कूटस्थं
कूटेमायाप्रपंचेस्थितम् अधिष्ठानत्वेनास्थितं अचलंस्पंदनरहितम् अतएवध्रुवंनित्यम् वृद्ध्यादिरहितम् ॥ ३ ॥ संनियम्येति स्पष्टम्
॥ ४ ॥ ननुचतेऽपित्वामेवप्राप्नुवंति तर्हीतरेषांयुक्ततमत्वंकुतइत्यपेक्षायांक्लेशाक्लेशकृतंविशेषमाह क्लेशइतित्रिभिः अव्यक्तेनिर्विशेषेअक्षरे

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ॥ सर्वत्रगमचिंत्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥
सन्नियम्येंद्रियग्रामं सर्वत्र समबुद्धयः ॥ ते प्राप्नुवंति मामेव सर्वभूतहितेरताः ॥ ४ ॥
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ॥ अव्यक्ता हि गतिर्दुःखंदेहवद्भिरवाप्यते ॥ ५ ॥
ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ॥ अनन्येनैव योगेन मां ध्यायंत उपासते ॥ ६ ॥

आसक्तंचेतोयेषांतेषांक्लेशोऽधिकतरः हियस्मादव्यक्तविषयागतिर्निष्ठा देहाभिमानिभिःदुखंयथाभवत्येवमवाप्यते देहाभिमानिनांनित्यं
प्रत्यक्प्रवणत्वस्यदुर्घटत्वादितिभावः ॥ ५ ॥ मद्भक्तानांमत्प्रसादादनायासतएवसिद्धिर्भवतीत्याह येत्वितिद्वाभ्याम् मयिपरमेश्वरेसर्वा
णिकर्माणिसंन्यस्यसमर्प्यमत्पराभूत्वामांध्यायंतः अनन्येननविद्यतेअन्योभजनीयोयस्मिन्तेनैव एकांतभक्तियोगेनोपासतइत्यर्थः॥६॥

तेषामिति एवंमयिआवेशितंचेतोयैस्तेषांमृत्युयुक्तात्संसारसागरादहंसम्यगुद्धर्त्ताअचिरेणैवभवामि ॥७॥ यस्मादेवंतस्मात् मय्येवेति मय्येवसंकल्पविकल्पात्मकंमनआधत्स्व स्थिरीकुरु बुद्धिमपिव्यवसायात्मिकांमय्येवनिवेशय एवंकुर्वन्मत्प्रसादेनलब्धज्ञानःसन्नतऊर्ध्वंदेहांते मरणानंतरंमय्येवनिवसिष्यसि निवत्स्यसि मदात्मनावासं करिष्यसि नात्रसंशयः तथाचश्रुतिः देहांतेदेवस्तारकंपरंब्रह्मव्याचष्टइति ॥८॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ॥ भवामिनचिरात्पार्थमय्यावेशितचेतसाम् ॥ ७ ॥
मय्येवमन आधत्स्व मयि बुद्धिं निवेशय ॥ निवसिष्यसि मय्येव अतऊर्ध्वं न संशयः ॥ ८ ॥
अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ॥ अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥
अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ॥ मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥
अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ॥ सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

अत्राशक्तंप्रतिसुगमोपायमाह अथेति स्थिरंयथाभवत्येवंमयिचित्तंधारयितुंयदिशक्तोनभवसि तर्हिविक्षिप्तंचित्तंपुनः प्रत्याहृत्यममानुस्मरणलक्षणोयोगाभ्यासस्तेनमांप्राप्तुमिच्छप्रयत्नंकुरु ॥९॥ यदिपुनर्नैवंतत्राह अभ्यासइति अभ्यासेऽपियद्यशक्तोऽसितर्हिमत्प्रीत्यर्थानियानिकर्माणिएकादश्युपवासव्रतचर्यानामसंकीर्त्तनादीनितदनुष्ठानमेवपरमंयस्यताद्दशोभव एवंभूतानिकर्माण्यपिमदर्थंकुर्वन्मोक्षंप्राप्स्यसि ॥१०॥ अत्यंतंभगवद्धर्मपरिनिष्ठायामशक्तस्यपक्षांतरमाह अथैतदपीति अथैतदपिकर्त्तुमशक्तोऽसितर्हिमद्योगंमदेकशरणत्वमाश्रितः

सर्वेषांदृष्टादृष्टार्थानामावश्यकानांचाग्निहोत्रादिकर्मणांफलानिनियतचित्तोभूत्वापरित्यज एतदुक्तंभवति मयातावदीश्वराज्ञयायथाशक्ति कर्माणिकर्तव्यानिफलंपुनर्दृष्टमदृष्टंवापरमेश्वराधीनमित्येवंमयिभारमारोप्यफलासक्तिंपरित्यज्यवर्तमानोमत्प्रसादेनकृतार्थोभविष्यसीति तात्पर्यं॥११॥ तमिमंफलत्यागंस्तौति श्रेयोहीति सम्यग्ज्ञानरहितादभ्यासाद्युक्तिसहितोपदेशपूर्वकंज्ञानंश्रेष्ठंतस्मादपितत्पूर्वकंध्यानंश्रेष्ठं ततस्तुतंपश्यतिनिष्कलंध्यायमानइतिश्रुतेः तस्मादपिउक्तलक्षणःकर्मफलत्यागःश्रेष्ठः तस्मादेवंभूतात्कर्मफलत्यागात्कर्मसुतत्फलेषुचा

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते॥ ध्यानात्कर्मफलत्यागस्त्यागाच्छांतिरनंतरम्
॥ १२ ॥अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च॥ निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३॥
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ॥ मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः॥ १४॥

सक्तिनिवृत्त्यामत्प्रसादेनचसमनंतरमेवसंसारशांतिर्भवति ॥१२॥ एवंभूतस्यभक्तस्यक्षिप्रमेवपरमेश्वरप्रसादहेतून्धर्मानाह अद्वेष्टेत्यष्टभिः सर्वभूतानांयथायथमद्वेष्टामैत्रःकरुणश्च उत्तमेषुद्वेषशून्यः समेषुमित्रतयावर्त्ततइतिमैत्रःहीनेषुकृपालुरित्यर्थः निर्ममोनिरहंकारश्चकृपालु त्वादेवान्यैःसहसमेदुःखसुखेयस्यसः क्षमीक्षमावान् ॥ १३ ॥ संतुष्टइति सततंलाभेअलाभेचसंतुष्टःप्रसन्नचित्तःयोगीअप्रमत्तः यतात्मासं यतस्वभावःदृढोमद्विषयोनिश्चयोयस्यमय्यर्पितेमनोबुद्धीयेन एवंभूतोयोमद्भक्तःसमेप्रियः॥ १४ ॥ ॥ ६९ ॥ ॥

किंच यस्मादिति यस्मात्सकाशाल्लोकोजनोनोद्विजतेभयशंकयासंक्षोभंनप्राप्नोति यश्चलोकान्नोद्विजते यश्चस्वाभाविकैर्हर्षादिभिर्मुक्तः तत्रहर्षस्स्वस्येष्टार्थलाभेउत्साहः अमर्षःपरस्यलाभेऽसहनम् भयंत्रासः उद्वेगोभयादिनिमित्तचित्तक्षोभः एतैर्विमुक्तोयोमद्भक्तःसमेप्रियः ॥ १९ ॥ किंच अनपेक्षइति अनपेक्षोयदृच्छोपस्थितेऽप्यर्थेनिःस्पृहः शुचिर्बाह्याभ्यंतरशौचसंपन्नः दक्षोऽनलसः उदासीनःपक्षपातरहितः गतव्यथआधिशून्यः सर्वान्दृष्टादृष्टार्थानारंभानुद्यमान्परित्यक्तुंशीलंयस्यसः एवंभूतःसन् योमद्भक्तःसमेप्रियः ॥ १६ ॥ किंच

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ॥ हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ॥ सर्वारंभपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥
यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ॥ शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥१७॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ॥ शीतोष्णसुखदुःखेषु समः संगविवर्जितः ॥ १८ ॥

योनेति प्रियंप्राप्ययोनहृष्यति अप्रियंप्राप्ययोनद्वेष्टि इष्टार्थनाशेसतियोनशोचति अप्राप्तमर्थंयोनकांक्षति शुभाशुभेपुण्यपापेपरित्यक्तुंशीलंयस्यसएवंभूतोभूत्वा योमद्भक्तिमान्समेप्रियः ॥ १७ ॥ किंच समइति शत्रौचमित्रेचसमएकरूपः मानापमानयोरपितथा समएवहर्षविषादशून्यइत्यर्थः शीतोष्णयोःसुखदुःखयोश्चसमः संगविवर्जितःक्वचिदप्यनासक्तः ॥ १८ ॥ ॥ ॥

तुल्यज्ञात तुल्येनिंदास्तुतीयस्य मौनीसंयतवाक् येनकेनचिद्यथालब्धेनसंतुष्टः अनिकेतोनियतवासशून्यः स्थिरमतिःव्यवस्थितचित्तः एवंभूतोमद्भक्तिमान्यःसमेप्रियोनरः ॥ १९ ॥ उक्तंधर्मजातंसफलमुपसंहरति येत्विति यथोक्तमुक्तप्रकारंधर्मंएवामृतममृतत्वसाधनत्वा

तुल्यनिंदास्तुतिर्मौनी संतुष्टो येन केनचित् ॥ अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥
ये तु धर्मामृतमिदं यथोक्तं पर्युपासते ॥ श्रद्दधानामत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥
इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥ ॥ ॥ ॥

त् धर्म्यामृतमिदमितिकेचित्पठंति तद्येऽपासतेअनुतिष्ठंति श्रद्धांकुर्वंतोमत्परमाश्चसंतोमद्भक्ताःतेऽतीवमेप्रियाइति ॥ २० ॥ दुःखमव्यक्तवर्त्मैतद्बहुविघ्नमतोबुधः ॥ सुखंकृष्णपदांभोजभक्तिसत्पथमाभजेत् ॥ १ ॥ इतिसुबोधिन्यांटीकायांद्वादशोऽध्यायः ॥ १२ ॥

समाप्तमिदं द्वितीयं षट्कम् ॥

॥ अथ सटीकासु श्रीमद्भगवद्गीतासूपनिषत्सु तृतीयमध्यायषट्कम् १२--१८

श्री[illegible]नमः ॥ [illegible] ॥ [illegible]क्तानामहमुद्धर्त्तासंसारादित्यवादियत् त्रयोदशोऽथतत्सिद्ध्यैतत्त्वज्ञानमुदीर्यते ॥ १ ॥ तेषामहंसमुद्धर्त्तामृत्यु
संसारसागरात् भवामीतिपूर्वंप्रतिज्ञातं तच्चात्मज्ञानंविनासंसारादुद्धरणंसंभवति इतितत्त्वज्ञानोपदेशार्थंप्रकृतिपुरुषविवेकाध्यायआर
भ्यते तत्रयत्सप्तमेऽध्यायेअपराचपराचेतिप्रकृतिद्वयमुक्तं तयोरविवेकाज्जीवभावमापन्नस्यचिदंशस्यायंसंसारः याभ्यांचजीवोपभोगार्थ
मीश्वरःसृष्ट्यादिषुप्रवर्त्तते तदेवप्रकृतिद्वयंक्षेत्रक्षेत्रज्ञशब्दवाच्यंपरस्परंविविक्तंतत्त्वतोनिरूपयिष्यन्श्रीभगवानुवाच इदमिति इदंभोगाय
तनंशरीरंक्षेत्रमित्यभिधीयते संसारस्यप्ररोहभूमित्वात् एतद्योवेत्ति अहंममेतिमन्यते तंक्षेत्रज्ञइतिप्राहुः कृषीवलवत्तत्फलभोक्तृत्वात् त

श्रीभगवानुवाच ॥ इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते ॥ एतद्योवेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ॥ क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥२॥ तत्क्षेत्रं यच्च यादृक्च यद्वि
कारि यतश्च यत् ॥ स च यो यत्प्रभावश्च तत्समासेन मे शृणु॥ ३ ॥

द्विदःक्षेत्रक्षेत्रज्ञयोर्विवेकज्ञाः ॥ १॥
तदेवंसंसारिणःस्वरूपमुक्तं इदानींतस्यैवपारमार्थिकमसंसारिस्वरूपमाह क्षेत्रज्ञमिति तंचक्षेत्रज्ञंसंसारिणंजीवंवस्तुतःसर्वक्षेत्रेष्वनुगतं
मामेवविद्धि तत्त्वमसीतिश्रुत्युपलक्षितेनचिदंशेनमद्रूपस्योक्तत्वात् आदरार्थमेवतज्ज्ञानंस्तौति क्षेत्रक्षेत्रज्ञयोर्यद्वैलक्षण्येनज्ञानंतदेव
मोक्षहेतुत्वान्ममज्ञानंमतं अन्यत्तुवृथापांडित्यं बंधहेतुत्वादित्यर्थः तदुक्तं तत्कर्मयन्नबंधायसाविद्यायाविमुक्तये आयासायापरंकर्मविद्या
न्याशिल्पनैपुणमिति २ अत्रयद्यपिचतुर्विंशतिभेदैर्भिन्नाप्रकृतिःक्षेत्रमित्यभिप्रेतं तथापिदेहरूपेणपरिणतायामेवतस्यामहंभावेना।विवेकः

स्फुटइतितद्विवेकार्थमिदंशरीरंक्षेत्रमित्याद्युक्तं तदेतत्प्रपंचयिष्यन्प्रतिजानीते तत्क्षेत्रमिति यदुक्तंमया तत्क्षेत्रं यत्स्वरूपतोजडंदृश्यादिस्वभावं यादृक्‌यादृशंचेच्छादिधर्मकं यद्विकारियैरिंद्रियादिविकारैर्युक्तं यतश्चप्रकृतिपुरुषसंयोगाद्भवति यदिति यैःस्थावरजंगमादिभेदैर्भिन्नमित्यर्थः सचक्षेत्रज्ञोयःस्वरूपतःयत्प्रभावश्चअचिंत्यैश्वर्ययोगेनयैःप्रभावैःसंपन्नः तत्सर्वंसंक्षेपतोमत्तःशृणु ॥ ३ ॥ कैर्विस्तरेणोक्तस्यायंसंक्षेपइत्यपेक्षायामाहऋषिभिरिति ऋषिभिर्वसिष्ठादिभिर्योगशास्त्रेषुध्यानधारणादिविषयत्वेनवैराजादिरूपेणबहुधागीतंनिरूपितम् विविधैर्विचित्रैश्चनित्यनैमित्तिककाम्यविषयैश्छंदोभिर्वेदैर्नानायजनीयदेवतादिरूपेणगीतं ब्रह्मणःसूत्रैःपदैश्च ब्रह्मसूच्यतेसूच्यतेएभिरितिब्रह्मसूत्राणि यतोवाइमानिभूतानिजायंतइत्यादीनितटस्थलक्षणपराण्युपनिषद्वाक्यानि तथाचब्रह्मपद्यतेगम्यतेसाक्षाज्ज्ञा

ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ॥ ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥

यतेएभिरितिपदानिस्वरूपलक्षणपराणि सत्यंज्ञानमनंतंब्रह्मेत्यादीनितैश्चबहुधागीतं किंच हेतुमद्भिः सदेवसौम्येदमग्रआसीत्कथमसतःसज्जायेतेति तयाकोह्येवान्यात्कःप्राण्यात् यदेषआकाशआनंदोनस्यात् एषह्येवानंदयतीत्यादियुक्तिमद्भिः अन्यात्‌अपानचेष्टांकःकुर्यात् प्राण्यात्प्राणानांव्यापारंकोवाकुर्यादितिश्रुतिपदयोरर्थः विनिश्चितैरुपक्रमोपसंहारैकवाक्यतया असंदिग्धार्थप्रतिपादकैरित्यर्थः तदेवमेतैर्विस्तरेणोक्तंदुःसंग्रहंसंक्षेपतस्तुभ्यंकथयिष्यामितच्छृणिवत्यर्थः यद्वा अथातोब्रह्मजिज्ञासेत्यादीनिब्रह्मसूत्राणिगृह्यंतेतान्येवब्रह्मपदा[illegible]पदानि तैर्हेतुमद्भिः ईक्षतेर्नाशब्दं आनंदमयोऽभ्यासादित्यादिभिर्युक्तिमद्भिर्विनिश्चितार्थैः शेषंसमानं ॥ ४ ॥

तत्रक्षेत्रस्वरूपमाह महाभूतानीतिद्वाभ्यां महाभूतानिभूम्यादीनिपंच अहंकारस्तत्कारणभूतःबुद्धिर्विज्ञानात्मकंमहत्तत्त्वं अव्यक्तंमूलप्रकृ
तिःइंद्रियाणिबाह्यानिदश श्रोत्रत्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्रांघ्रिपायुइति एकंचमनः इंद्रियगोचराश्चपंचतन्मात्ररूपाएवशब्दादयः आ
काशादिविशेषगुणतयाव्यक्ताःसंतइंद्रियविषयाःपंच तदेवंचतुर्विंशतितत्त्वान्युक्तानि ॥५॥ इच्छेति इच्छादयःप्रसिद्धाःसंघातःशरीरं चेतना
ज्ञानात्मिकामनोवृत्तिः धृतिर्धैर्यम् एतेइच्छादयोदृश्यत्वान्नात्मधर्माअपितुमनोधर्माएव अतःक्षेत्रांतःपातिनएव उपलक्षणंचैतत्संकल्पा
दीनां तथाचश्रुतिः कामःसंकल्पोविचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वंमनएवेति अनेनचयादृगितिप्रतिज्ञाताः क्षेत्रध

महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ॥ इंद्रियाणि दशैकं च पंच चेंद्रियगोचराः ॥ ५ ॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ॥ एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥६॥
अमानित्वमदंभित्वमहिंसाक्षांतिरार्जवं ॥ आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥७॥

र्मादर्शिताः एतत्क्षेत्रंसविकारंइंद्रियादिविकारसहितंसंक्षेपेणतुभ्यंमयोक्तमितिक्षेत्रोपसंहारः ॥६॥ इदानीमुक्तलक्षणात्क्षेत्राद्विविक्ततयाज्ञे
यंशुद्धंक्षेत्रज्ञंविस्तरेणवर्णयिष्यन्तज्ज्ञानसाधनान्याह अमानित्वमितिपंचभिः अमानित्वंस्वगुणश्लाघाराहित्यम् अदंभित्वंदंभराहित्यं
अहिंसापरपीडावर्जनं क्षांतिःसहिष्णुत्वम् आर्जवमवक्रता आचार्योपासनंसद्गुरुसेवा शौचंबाह्यमाभ्यंतरंच तत्रबाह्यंमृज्जलादिना आ
भ्यंतरंचरागादिमलक्षालनम् तथाचस्मृतिः शौचंतुद्विविधंप्रोक्तंबाह्यमाभ्यंतरंतथा मृज्जलाभ्यांस्मृतंबाह्यंभावशुद्धिस्तथांतरमिति स्थैर्यं

सन्मार्गेप्रवृत्तस्यतदेकानिष्ठता आत्मविनिग्रहःशरीरसंयमः एतज्ज्ञानमितिप्रोक्तमितिपंचमेनान्वयः ॥७॥ किंच इंद्रियार्थेष्विति जन्मादि
षुदुःखदोषयोरनुदर्शनम् पुनः पुनरालोचनम् दुःखरूपस्यादोषस्यानुदर्शनमितिवा स्पष्टमन्यत् ॥८॥ किंच असक्तिरिति असक्तिःपुत्रादिप
दार्थेषुप्रीतित्यागः अनभिष्वंगः पुत्रादीनांसुखेदुःखेवाअहमेवसुखीदुःखीचेत्यध्यासातिरेकाभावः इष्टानिष्टयोरुपपत्तिषुप्राप्तिषुनित्यंसर्व
दासमचित्तत्वम् ॥९॥ किंच मयिचेति मयिपरमेश्वरेअनन्ययोगेनसर्वात्मदृष्ट्या अव्यभिचारिणीएकांतभक्तिःविविक्तःशुद्धचित्तप्रसादकरः

इंद्रियार्थेषु वैराग्यमनहंकार एव च ॥ जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥८॥ असक्तिरनभिष्वंगःपुत्रदारगृहा
दिषु ॥ नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु॥९॥मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ॥ विविक्तदेशसेवित्वम
रतिर्जनसंसदि ॥१०॥ अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ॥एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा॥११॥

तंदेशंसेवितुंशीलंयस्यतस्यभावस्तत्त्वम् प्राकृतानांजनानांसंसदिसभायांअरतिःरत्यभावः॥१०॥ किंच अध्यात्मेति आत्मानमधिकृत्य
वर्त्तमानंज्ञानंअध्यात्मज्ञानम् तस्मिन्नित्यत्वंनित्यभावः त्वंपदार्थशुद्धिनिष्ठत्वमित्यर्थः तत्त्वज्ञानस्यार्थः प्रयोजनंमोक्षः तस्यदर्शनं मोक्ष
स्यसर्वोत्कृष्टतालोचनमित्यर्थः एतदमानित्वमदंभित्वमित्यादिविंशतिसंख्यात्मकंयदुक्तमेतज्ज्ञानमितिप्रोक्तम् ज्ञानसाधनत्वात् अ
तोऽन्यथास्माद्विपरीतंमानित्वादियदेतदज्ञानमितिप्रोक्तंवासिष्ठादिभिः ज्ञानविरोधित्वात् अतःसर्वथात्याज्यमित्यर्थः ॥ ११ ॥ ॥ ॥

एभिःसाधनैर्यज्ज्ञेयंतदाह ज्ञेयमितिषड्भिः यज्ज्ञेयंतत्प्रवक्ष्यामि श्रोतुरादरसिद्ध्येज्ञानफलंदर्शयति यद्वक्ष्यमाणंज्ञात्वाऽमृतंमोक्षंप्राप्नोति किंतत् अनादिमत् आदिमन्नभवतीत्यनादिमत् परंनिरतिशयंब्रह्म अनादीत्येतावतैवबहुव्रीहिणाअनादिमत्त्वेसिद्धेऽपिपुनर्मतुपःप्रयोग श्छांदसः यद्वा अनादीतिमत्परमितिचपदद्वयं ममाविष्णोः परंनिर्विशेषंरूपंब्रह्मेत्यर्थः तदेवाह नसत्नचासदुच्यते विधिमुखेनप्रमाणस्य विषयःसच्छब्देनोच्यते निषेधस्यविषयस्त्वसच्छब्देनोच्यते इदंतुतदुभयविलक्षणंअविषयत्वादित्यर्थः॥ १२॥नन्वेवंब्रह्मणःसदसद्विलक्षण त्वेसति सर्वंखल्विदंब्रह्म ब्रह्मैवेदंसर्वमित्यादिश्रुतिभिर्विरुद्ध्येतेत्याशंक्य परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचेत्यादि

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ॥ अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ॥ सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥
सर्वेंद्रियगुणाभासं सर्वेंद्रियविवर्जितम् ॥ असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥

श्रुतिप्रसिद्ध्याचिंत्यशक्त्यासर्वात्मतांतस्यदर्शयन्नाह सर्वतइतिपंचभिः सर्वतःसर्वत्रपाणयःपादाश्चयस्यतत् सर्वतोऽक्षीणिशिरांसि मुखानिचयस्यतत् सर्वतःश्रुतिमच्छ्रवणेंद्रिययुक्तंसल्लोकेसर्वमावृत्यव्याप्यतिष्ठति सर्वप्राणिप्रवृत्तिभिःपाण्यादिभिरुपाधिभिःसर्वव्यव हारास्पदत्वेनतिष्ठतीत्यर्थः ॥ १३॥ किंच सर्वेंद्रियेति सर्वेषांचक्षुरादीनामिंद्रियाणांगुणेषुरूपाद्याकारासुवृत्तिषुतत्तदाकारेणभासतइतित था सर्वाणींद्रियाणिगुणांश्चतत्तद्विषयानाभासयतीतिवा सर्वेंद्रियैर्विवर्जितंच तथाचश्रुतिः अपाणिपादोजवनोग्रहीतापश्यत्यचक्षुःसशृ

णोत्यकर्णइत्यादि असक्तंसंगशून्यम् तथापिसर्वंबिभर्तीतिसर्वभृत् सर्वस्याधारभूतम् तदेवनिर्गुणंसत्त्वादिगुणरहितम् गुणभोक्तृगु
णानांसत्त्वादीनांभोक्तृचपालकम्॥१४॥किंच बहिरिति भूतानांचराचराणांस्वकार्याणांबहिश्चांतश्चतदेवसुवर्णमिवकटककुंडलादीनाम् ज
लतरंगाणामन्तर्बहिश्चजलमिव अचरंस्थावरंचरंजंगमंयद्भूतजातंतदेव कारणात्मकत्वात्कार्यस्य एवमपिसूक्ष्मत्वाद्रूपादिहीनत्वात्तद
विज्ञेयमिदंतदितिस्पष्टज्ञानार्हंनभवति अतएवाविदुषांयोजनलक्षांतरितमिवदूरस्थंचसविकारायाःप्रकृतेःपरत्वात् विदुषांपुनःप्रत्यगा
त्मत्वादंतिकेच तन्नित्यंसन्निहितम् तथाचमंत्रः यदेजतितन्नैजतितद्दूरेतदंतिकेतदंतरस्यसर्वस्य तदुसर्वस्यास्यबाह्यतइति एजतिचल

बहिरंतश्च भूतानामचरं चरमेव च ॥ सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चांतिके च तत् ॥ १५ ॥
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ॥ भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ॥ ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितं॥ १७ ॥

तिनैजतिनचलतितत्उअंतिकेइतिच्छेदः॥१५॥किंच अविभक्तमिति भूतेषुस्थावरजंगमात्मकेषु अविभक्तंकारणात्मनाअभिन्नं कार्यात्म
नाविभक्तंचभिन्नमिवावस्थितंच समुद्राज्जातंफेनादिसमुद्रादन्यन्नभवति तत्पूर्वोक्तंस्वरूपंचज्ञेयम् भूतानांभर्तृचपोषकंस्थितिकाले प्रलय
कालेचग्रसिष्णु ग्रसनशीलम् सृष्टिकालेचप्रभविष्णु नानाकार्यात्मनाप्रभवनशीलम्॥१६॥किंच ज्योतिषामिति ज्योतिषांचंद्रादित्यादी
नामप्रितज्ज्योतिः प्रकाशकंततोयेनसूर्यस्तपतितेजसेद्धःनतत्रसूर्योभातिनचंद्रतारकंनेमाविद्युतोभांतिकुतोऽयमग्निः तमेवभांतमनुभा

तिसर्वतस्थंनासि।सर्वामिदंविभातीत्यादिश्रुतेः अतएवतमसोऽज्ञानात्परं तेनासंस्पृष्टमुच्यते आदित्यवर्णंतमसःपरस्तादित्यादिश्रुतेः ज्ञा
नंचतदेवबुद्धिवृत्तावभिव्यक्तं तदेवरूपाद्याकारेणज्ञेयंच ज्ञानेनगम्यंच अमानित्वमदंभित्वमित्यादिलक्षणेनपूर्वोक्तेनज्ञानसाधनेनप्राप्यमि
त्यर्थः ज्ञानगम्यंविशिनष्टि सर्वस्यप्राणिमात्रस्यहृदिविष्ठितंविशेषेणाप्रच्युतस्वरूपेणनियंतृतयास्थितम् धिष्ठितमितिपाठेऽधिष्ठायस्थित
मित्यर्थः १७ उक्तंक्षेत्रादिकमधिकारिफलसहितमुपसंहरति इतीति इत्येवंक्षेत्रंमहाभूतादिधृत्यंतंतथाज्ञानंच अमानित्वादितत्त्वज्ञानार्थ
दर्शनांतम् ज्ञेयंच अनादिमत्परंब्रह्मेत्यादिविष्ठितमित्यंतम् वसिष्ठादिभिर्विस्तरेणोक्तंसर्वमपिमयासंक्षेपेणोक्तम् एतच्चपूर्वाध्यायोक्तलक्ष

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः॥ मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते॥ १८॥

प्रकृतिं पुरुषंचैव विद्ध्यनादी उभावपि॥ विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान्॥१९॥

णोमद्भक्तोविज्ञायमद्भावायब्रह्मत्वायउपपद्यतेयोग्योभवति॥ १८॥तदेवंतत्क्षेत्रंयच्चयादृक्चेत्येतावत्प्रपंचितम् इदानींतुयद्विकारियतश्चयत्
सचयोयत्प्रभावश्चेत्येतत्पूर्वंप्रतिज्ञातमेवप्रकृतिपुरुषयोःसंसारहेतुत्वकथनेनप्रपंचयति प्रकृतिमितिपंचभिः तत्रप्रकृतिपुरुषयोरादिमत्त्वे
तयोरपिप्रकृत्यंतरेणभाव्यमित्यनवस्थापत्तिःस्यात् अतस्तावुभावनादीविद्धि अनादेरीश्वरस्यशक्तित्वात्प्रकृतिरनादिः पुरुषोऽपितदंश
त्वादनादिरेव अत्रच परमेश्वरस्यतच्छक्तीनांचानादित्वंनित्यत्वंचश्रीमच्छंकरभगवद्भाष्यकृद्भिरतिप्रबंधेनोपपादितमितिग्रन्थबाहुल्या
न्नास्माभिःप्रतन्यते विकारांश्चदेहेंद्रियादीन् गुणांश्चगुणपरिणामान्सुखदुःखमोहादीन्प्रकृतेःसंभवान्संभूतान्विद्धि॥ १९॥ ॥

विकाराणांप्रकृतिसंभवत्वंदर्शयन्पुरुषस्यसंसारहेतुत्वंदर्शयति कार्यकारणेति कार्यंशरीरम् कारणानिसुखदुःखसाधनानींद्रियाणि तेषांक
र्तृत्वेतदाकारपरिणामे प्रकृतिर्हेतुरुच्यतेकपिलादिभिः पुरुषोजीवस्तत्कृतसुखदुःखानांभोक्तृत्वेहेतुरुच्यते अयंभावः यद्यप्यचेतनायाः
प्रकृतेःस्वतःकर्तृत्वंनसंभवति तथापुरुषस्याप्यविकारिणोभोक्तृत्वंनसंभवति तथापिकर्तृत्वंनामक्रियानिर्वर्त्तकत्वम् तच्चाचेतनस्यापिचे
तनादृष्टवशाच्चैतन्याधिष्ठितत्वात्संभवति यथावन्हेरूर्ध्वज्वलनम् वायोस्तिर्यग्गमनम् वत्सादृष्टवशात्स्तन्यपयसःक्षरणमित्यादि अतःपुरु
षसन्निधानात्प्रकृतेःकर्तृत्वमुच्यते भोक्तृत्वंचसुखदुःखसंवेदनम् तच्चेतनधर्मएवेतिसन्निधानात्पुरुषस्यभोक्तृत्वमुच्यतइति ॥२०॥तथाप्य

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ॥ पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २०॥ पु
रुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान्॥कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु॥२१॥
उपद्रष्टानुमंता च भर्त्ता भोक्ता महेश्वरः॥ परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः॥२२॥

विकारिणोजन्मरहितस्यचभोक्तृत्वंकथमित्यतआह पुरुषइति हियस्मात्प्रकृतिस्थःतत्कार्यदेहेतादात्म्येन स्थितःपुरुषः अतस्तज्जनितान्
सुखादीन्भुंक्ते अस्यचपुरुषस्यसतीषुदेवादियोनिषुअसतीषुतिर्यगादियोनिषुयानिजन्मानितेषुगुणसंगः गुणैःशुभाशुभकर्मकारिभिरिंद्रि
यैःसंगःकारणमित्यर्थः॥२१॥तदनेनप्रकारेणप्रकृत्याविवेकात्पुरुषस्यसंसारःनतुस्वरूपतइत्याशयेनतस्यस्वरूपमाह उपद्रष्टेति अस्मिन्प्रकृ
तिकार्येदेहेचवर्तमानोऽपिपुरुषः परोभिन्नएव नतद्गुणैर्युज्यतइत्यर्थः तत्रहेतवः यस्मादुपद्रष्टा पृथग्भूतएवसमीपेस्थित्वाद्रष्टासाक्षीत्यर्थः

तथानुमंता अनुमोदितासन्निधिमात्रेणानुग्राहकः साक्षीचेताकेवलोनिर्गुणश्चेत्यादिश्रुतेः तथाऐश्वरेणरूपेणभर्त्ताविधारकइतिचोक्तः भोक्तापालकइतिच महांश्चासावीश्वरश्चेति सब्रह्मादीनामधिपतिरितिच परमात्माअंतर्यामीतिचोक्तःश्रुत्या तथाचश्रुतिः एषभूताधिपतिरेषलोकेश्वरएषलोकपालइत्यादिः ॥ २२ ॥ एवंप्रकृतिपुरुषविवेकज्ञानिनंस्तौति यएवमिति एवमुपद्रष्टृत्वादिरूपेणपुरुषंयोवेत्ति प्रकृतिंचगुणैःसुखदुःखादिपरिणामैःसहितांयोवेत्ति सपुरुषःसर्वथाविधिमतिलंघ्यवर्त्तमानोऽपिपुनर्नाभिजायते मुच्यतएवेत्यर्थः ॥२३ ॥एवंभूतविविक्तात्मज्ञानेसाधनविकल्पानाह ध्यानेनेतिद्वाभ्यां ध्यानेनआत्माकारप्रत्ययावृत्त्याआत्मनिदेहे आत्मनामनसाएवमात्मानं

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैःसह ॥ सर्वथा वर्त्तमानोऽपि न स भूयोऽभिजायते ॥ २३॥ ध्यानेनात्मनि पश्यंति केचिदात्मानमात्मना ॥ अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥

अन्ये त्वेवमजानंतः श्रुत्वान्येभ्य उपासते ॥ तेऽपि चातितरंत्येव मृत्युं श्रुतिपरायणाः॥ २५ ॥

केचित्पश्यंति अन्येतुसांख्येनप्रकृतिपुरुषवैलक्षण्यालोचनेन योगेनाष्टांगेन अपरेचकर्मयोगेन पश्यंतीतिसर्वत्रानुषंगः एतेषांचध्यानादीनांयथायोगंक्रमसमुच्चयेसत्यपितत्तन्निष्ठाभेदाभिप्रायेणविकल्पोक्तिः॥२४॥अतिमंदाधिकारिणांनिस्तारोपायमाह अन्यइति अन्येतुसांख्ययोगादिमार्गेणैवंभूतमुपद्रष्टृत्वादिलक्षणमात्मानंसाक्षात्कर्त्तुमजानंतोऽन्येभ्यआचार्येभ्यउपदेशेनश्रुत्वाउपासते ध्यायंति तेच श्रद्धयाउपदेशश्रवणपरायणाःसंतोमृत्युंसंसारंशनैरतितरंत्येव ॥ २५ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तत्रकर्मयोगस्यतृतीयचतुर्थपंचमेषुप्रपंचितत्वात् ध्यानयोगस्यचषष्ठाष्टमयोः प्रपंचितत्वात् ध्यानादेश्चसांख्यविविक्तात्मविषयत्वात
सांख्यमेवप्रपंचयन्नाह यावदित्यादियावदध्यायसमाप्ति यावत्किंचित्वस्तुमात्रंसत्वमुत्पद्यते तत्सर्वंक्षेत्रक्षेत्रज्ञयोर्योगात् अविवेककृतात्ता
दात्म्याध्यासाद्भवतीतिजानीहि ॥ २६ ॥ अविवेककृतंसंसारोद्भवमुक्त्वातन्निवृत्तयेविविक्तात्मविषयंसम्यग्दर्शनमाह सममिति स्थाव
रजंगमात्मकेषुभूतेषुनिर्विशेषंसद्रूपेणसमंयथाभवत्येवंतिष्ठंतंपरमात्मानंयःपश्यति अतएव तेषुविनश्यत्स्वपि अविनश्यंतंयःपश्यति

यावत्संजायतेकिंचित्सत्वंस्थावरजंगमम् ॥ क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धिभरतर्षभ ॥ २६ ॥ समंसर्वेषुभूतेषुतिष्ठंतंपरमेश्व
रम् ॥ विनश्यत्स्वविनश्यंतं यःपश्यतिसपश्यति ॥ २७ ॥ समंपश्यन्हिसर्वत्रसमवस्थितमीश्वरम् ॥ नहिनस्त्यात्मना
त्मानंततोयातिपरांगतिं ॥२८॥ प्रकृत्यैवचकर्माणिक्रियमाणानिसर्वशः ॥ यःपश्यतितथात्मानमकर्तारंसपश्यति२९

सएवसम्यक्पश्यतिनान्यः २७ कुतइत्यतआह सममिति सर्वत्रभूतमात्रेसमंसम्यगप्रच्युतस्वरूपेणावस्थितं परमात्मानं पश्यन् हियस्मा
त् आत्मनास्वेनैवात्मानंनहिनस्ति अविद्ययासच्चिदानंदरूपमात्मानंतिरस्कृत्यनविनाशयति ततश्चपरांगतिंमोक्षमाप्नोति यस्त्वेवंनपश्य
ति सहिदेहात्मदर्शीदेहेनसहात्मानंहिनस्ति तथाचश्रुतिः असुर्यानामतेलोकाअंधेनतमसावृताः तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोज
नाइति ॥२८॥ननशुभाशुभकर्मकर्तृत्वेनवैषम्यदृश्यमानेकथमात्मनःसमत्वमित्याशंक्याह प्रकृत्यैवेति प्रकृत्यैवदेहेंद्रियाकारेणपरिणतया

सर्वशः सर्वैःप्रकारैःक्रियमाणानिकर्माणियःपश्यति तथात्मानंचाकर्तारं देहाभिमानेनैवात्मनःकर्तृत्वं नस्वतः इत्येवं यः पश्यति सएवस
म्यक्पश्यतिनान्यइत्यर्थः ॥ २९ ॥ इदानींतुभूतानांप्रकृतितावन्मात्रत्वेनाभेदाद्भूतभेदकृतमप्यात्मनोभेदमपश्यन्ब्रह्मत्वमुपैतीत्याह य
देति यदाभूतानांस्थावरजंगमानांपृथग्भावंभेदंपृथक्त्वं एकस्थंएकस्यामेवेश्वरशक्तिरूपायांप्रकृतौस्थितं प्रलयेअनुपश्यति आलोचयति त
तएवचतस्याएवप्रकृतेः सकाशाद्भूतानांविस्तारंसृष्टिसमयेऽनुपश्यतितदाप्रकृतितावन्मात्रत्वेनभूतानामप्यभेदंपश्यन्परिपूर्णंब्रह्मसंपद्यते
ब्रह्मैवभवतीत्यर्थः ॥ ३० ॥ तथापिपरमेश्वरस्यसंसारावस्थायांदेहकर्मसंबंधनिमित्तैःकर्मभिस्तत्फलैश्चसुखदुःखादिभिर्वैषम्यंदुष्परिहरमि

यदा भूतपृथग्भावमेकस्थमनुपश्यति ॥ तत एव च विस्तारं ब्रह्म संपद्यते तदा॥३०॥अनादि
त्वान्निर्गुणत्वात्परमात्मायमव्ययः ॥ शरीरस्थोऽपि कौंतेय न करोति न लिप्यते॥ ३१ ॥ यथा
सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ॥ सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥

ति कुतःसमदर्शनंतत्राह अनादित्वादिति यदुत्पत्तिमत् तदेवहिव्येति विनाशमेति यच्चगुणवद्वस्तुतस्यगुणनाशेव्ययोभवति अयंतुपरमा
त्मा अनादिर्निर्गुणश्चातोऽव्ययः अविकारीत्यर्थः तस्माच्छरीरेस्थितोऽपिकिंचिन्नकरोति नचकर्मफलैर्लिप्यतइति ॥ ३१ ॥ तत्रदृष्टांत
माहयथेति यथासर्वत्रपंकादिष्वपिस्थितमाकाशंसौक्ष्म्यादसंगत्वात्पंकादिभिर्नोपलिप्यते तथासर्वत्रउत्तमेमध्यमेऽधमेवादेहेअवस्थितोऽ
प्यात्मा नोपलिप्यतेदैहिकैर्गुणदोषैर्नयुज्यतइत्यर्थः ॥ ३२ ॥

असंगत्वाल्लेपोनास्तीत्याकाशदृष्टांतेनोक्तम् प्रकाशकत्वाच्चप्रकाश्यधर्मैर्नयुज्यतइतिरविदृष्टांतेनाह यथेति स्पष्टार्थः ॥३३॥अध्यायार्थमुप
संहरति क्षेत्रक्षेत्रज्ञयोरिति एवमुक्तप्रकारेणक्षेत्रक्षेत्रज्ञयोरंतरंभेदंविवेकज्ञानलक्षणेनचक्षुषायेविदुः तथाचेयमुक्ताभूतानांप्रकृतिस्तस्याःस
काशान्मोक्षंमोक्षोपायंध्यानादिकंचयेविदुःतेपरंपदंयांति॥३४॥विविक्तौयेनतत्त्वेनमिश्रौप्रकृतिपूरुषौ तंवंदेपरमानन्दनन्दनंदनमीश्वरं १ इ
तिसुबोधिन्यांटीकायांत्रयोदशोऽध्यायः ॥१३॥ पुंप्रकृत्योःस्वतंत्रत्वंवारयन्गुणसंगतः प्राहसंसारवैचित्र्यंविस्तरेणचतुर्दशे ॥ १ ॥ यावत्सं

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ॥ क्षेत्रं क्षत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥ क्षेत्रक्षेत्रज्ञयोरेव
मंतरं ज्ञानचक्षुषा ॥ भूतप्रकृतिमोक्षं च ये विदुर्यांति ते परम् ॥ ३४॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मवि
द्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे प्रकृतिपुरुषयोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥ श्रीभगवानुवाच ॥
परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ॥ यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥ ॥ ॥

जायतेकिंचित्सत्त्वंस्थावरजंगमम् क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धिभरतर्षभेत्युक्तम् सचक्षेत्रक्षेत्रज्ञयोःसंयोगोनिरीश्वरसांख्यानामिवनस्वातंत्र्ये
णकिंत्वीश्वरेच्छयैवेतिकथनपूर्वकं कारणंगुणसंगोऽस्यसदसद्योनिजन्मस्वित्यनेनोक्तंसत्त्वादिगुणकृतंसंसारवैचित्र्यंप्रपंचयिष्यन्एवंभूतं
वक्ष्यमाणमर्थंस्तौति श्रीभगवानुवाच परंभूयइतिद्वाभ्यां परंपरमार्थनिष्ठं ज्ञायतेऽनेनेतिज्ञानमुपदेशं भूयोऽपितुभ्यंप्रकर्षेणवक्ष्यामि कथं
भूतम् ज्ञानानांतपःकर्मादिविषयाणांमध्येउत्तमम् मोक्षहेतुत्वात् तदेवाह यज्ज्ञात्वाप्राप्यमुनयोमननशीलाःसर्वेइतोदेहबंधनात्परांसि

द्विगताः प्राप्ताः ॥१॥ किंच इदमिति इदंवक्ष्यमाणंज्ञानमुपाश्रित्यइदंज्ञानसाधनमनुष्ठायममसाधर्म्यंमद्रूपत्वंप्राप्ताःसंतःसर्गेऽपिब्रह्मादिषू त्पद्यमानेष्वपिनोत्पद्यंते तथाप्रलयेऽपिनव्यथंति प्रलयेदुःखानिनानुभवंति पुनर्नावर्त्तंतइत्यर्थः॥२॥तदेवंप्रशंसयाश्रोतारमभिमुखीकृत्य परमेश्वराधीनयोः प्रकृतिपुरुषयोःसर्वभूतोत्पत्तिप्रतिहेतुत्वं नतुस्वतंत्रयोरितीमंविवक्षितमर्थंकथयति ममेति देशतः कालतश्चानवच्छि न्नत्वान्महत् बृंहणत्वात्स्वकार्याणांवुद्धिहेतुत्वाद्वा ब्रह्म प्रकृतिरित्यर्थः तन्महत्ब्रह्ममम परमेश्वरस्ययोनिःगर्भाधानस्थानं तस्मिन्नहंगर्भं

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥ सर्गेऽपिनोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥
मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ॥ ॥ संभवःसर्वभूतानां ततो भवति भारत ॥ ३ ॥
सर्वयोनिषु कौंतेय मूर्त्तयः संभवंति याः ॥ तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥

जगद्विस्तारहेतुंचिदाभासंदधामि निक्षिपामि प्रलयेमयिलीनंसंतमविद्याकामकर्मानुशयवंतंक्षेत्रज्ञंसृष्टिसमयेभोग्येनक्षेत्रेणसंयोजयामी त्यर्थः ततोगर्भाधानात्सर्वभूतानांब्रह्मादीनांसंभवउत्पत्तिर्भवतीति ॥३॥ नकेवलंसृष्ट्युपक्रमएवमदधिष्ठिताभ्यांप्रकृतिपुरुषाभ्यामयंभूतो त्पत्तिप्रकारः अपितुसर्वदैवेत्याह सर्वयोनिष्विति सर्वासुयोनिषुमनुष्याद्यासुयामूर्त्तयः स्थावरजंगमात्मिकाउत्पद्यंते तासांमूर्तीनांमहद्ब्र ह्मप्रकृतिःयोनिर्मातृस्थानीया अहंचबीजप्रदः गर्भाधानादिकर्त्तापिता ॥ ४ ॥ ॥ ॥ ॥ ॥ ॥ ॥

तदेवं परमेश्वराधीनाभ्यांप्रकृतिपुरुषाभ्यांसर्वभूतोत्पत्तिंनिरूप्य इदानींप्रकृतिसंयोगेन पुरुषस्य संसारं प्रपंचयति सत्वमित्यादिचतुर्भिः सत्त्वंरजस्तमइतित्रयोगुणाः प्रकृतिसंभवा प्रकृतितः संभवउद्भवोयेषांतेतथोक्ताः गुणसाम्यंप्रकृतिस्तस्याः सकाशात्पृथक्त्वेनाभिव्यक्ताःसंतःप्रकृतिकार्येदेहेतादात्म्येनस्थितंदेहिनंचिदंशंवस्तुतोऽव्ययंनिर्विकारमेवसंतंनिबध्नंति स्वकार्यैः सुखदुःखमोहादिभिः संयोजयंतीत्यर्थः ॥ ५ ॥ तत्रसत्वस्यलक्षणंबंधकत्वप्रकारंचाह तत्रेति तत्रतेषांगुणानांमध्येसत्वंनिर्मलत्वात्स्वच्छत्वात्स्फटिकवत्प्रकाशकंभास्वरम्

सत्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ॥ निबध्नंति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥
तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ॥ सुखसंगेन बध्नाति ज्ञानसंगेन चानघ ॥ ६ ॥
रजो रागात्मकं विद्धि तृष्णासंगसमुद्भवम् ॥ तन्निबध्नाति कौंतेय कर्मसंगेन देहिनम्॥ ७ ॥

अनामयंचनिरुपद्रवंशांतमित्यर्थः अतःशांतत्वात्स्वकार्येणसुखेन यःसंगस्तेनबध्नाति प्रकाशकत्वाच्चस्वकार्येणज्ञानेनयः संगस्तेनचबध्नाति हेअनघ निष्पाप अहंसुखीज्ञानीचेतिमनोधर्मास्तदभिमानिनिक्षेत्रज्ञेसंयोजयतीत्यर्थः ६ रजसोलक्षणंबंधकत्वंचाह रजोरागेति रजःसंज्ञकंगुणंरागात्मकमनुरंजनरूपंविद्धि अतएवतृष्णासंगसमुद्भवम् तृष्णाअप्राप्तेर्थेऽभिलाषः संगःप्राप्तेऽर्थेप्रीतिःविशेषेणासक्तिःतयोस्तृष्णासंगयोः समुद्भवोयस्मात्तद्रजोदेहिनंदृष्टादृष्टार्थेषुकर्मसुसंगेनासक्त्यानितरांबध्नाति तृष्णासंगाभ्यांहिकर्मस्वासक्तिर्भवति ॥ ७ ॥ ॥ ॥

तमसो लक्षणबंधकत्वं चाह तमइति तमस्तुअज्ञानाज्जातं आवरणशक्तिप्रधानात्प्रकृत्यंशादुद्भूतंविद्धीत्यर्थः अतःसर्वेषांदेहिनांमोहनंभ्रां तिजनकं अतएवप्रमादेनालस्येननिद्रयाचतत्तमोदेहिनंनिबध्नाति तत्रप्रमादोऽनवधानं आलस्यमनुद्यमःनिद्राचित्तस्यावसादःलयः।८। सत्वादीनामेवंस्वस्वकार्यकरणेसामर्थ्यातिशयमाह सत्वमिति सत्वंसुखेसंजयतिसंश्लेषयति दुःखशोकादिकारणेसत्यपिसुखाभिमुख मेवदेहिनंकरोतीत्यर्थः एवंसुखादिकारणेसत्यपिरजःकर्मण्येवसंजयति तमस्तुमहत्संगेनोत्पद्यमानमपिज्ञानमावृत्याच्छाद्यप्रमादेसंजय ति महद्भिरुपदिश्यमानस्यार्थस्यानवधानेयोजयति उतअपिआलस्यादावपिसंयोजयतीत्यर्थः॥९॥तत्रहेतुमाह रजइति रजस्तमश्चेतिगु

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनां॥ प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥८॥ सत्वं सुखे संजयति रजःक र्मणि भारत ॥ ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥९॥ रजस्तमश्चाभिभूय सत्वं भवति भारत ॥ रजःसत्वं तमश्चै व तमःसत्वं रजस्तथा ॥ १० ॥ सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ॥ ज्ञानं यदा तदा विद्याद्विवृद्धं सत्वमित्युत ११

णद्वयमभिभूयतिरस्कृत्यसत्त्वंभवत्यदृष्टवशादुद्भवति ततःस्वकार्येसुखेज्ञानादौसंयोजयतीत्यर्थः एवंरजोपिसत्त्वंतमश्चेतिगुणद्वयमभि भूयोद्भवति ततःस्वकार्येतृष्णादौसंयोजयति एवंतमोऽपिसत्वंरजश्चाभिभूयोद्भवति ततश्चस्वकार्येप्रमादालस्यादौसंयोजयतीत्यर्थः १० इदानींसत्त्वादीनांवृद्धानांलिंगान्याह त्रिभिः सर्वद्वारेष्विति अस्मिन्आत्मनोभोगायतनेदेहेसर्वेष्वपिद्वारेषुश्रोत्रादिषुयदाशब्दादिज्ञाना त्मकःप्रकाशउपजायतेउत्पद्यतेतदाअनेनप्रकाशलिंगेनसत्वंविवृद्धंविद्याज्जानीयात् उतशब्दात्सुखादिलिंगेनापिजानीयादित्युक्तं ॥ ११ ॥

किंचलोभइति लोभः धनाद्यागमेबहुधाजायमानेऽपिपुनःपुनर्वर्धमानोऽभिलाषःप्रवृत्तिःनित्यंकुर्वद्रूपता कर्मणामारंभोगृहादिनिर्माणोद्य मःअशमइदंकृत्वाइदंकरिष्यामीत्यादिसंकल्पविकल्पानुपरमः स्पृहा उच्चावचेषुदृष्टमात्रेषुवस्तुष्वितस्ततोजिघृक्षा रजसिप्रवृद्धेसतिए तानिलिंगानिजायंते एतैर्लिंगैरजोगुणस्यवृद्धिंविद्यादित्यर्थः १२ किंच अप्रकाशइति अप्रकाशोविवेकभ्रंशः अप्रवृत्तिरनुद्यमः प्रमादःकर्त्त व्यार्थानुसंधानराहित्यं मोहोमिथ्याभिनिवेशः तमसिप्रवृद्धेएतानिलिंगानिचिन्हानिजायंतेएतैस्तमसोवृद्धिंजानीयादित्यर्थः १३ मरणस

लोभः प्रवृत्तिरारंभः कर्मणामशमः स्पृहा ॥ रजस्येतानि जायंते विवृद्धे भरतर्षभ ॥ १२ ॥ अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ॥ तमस्येतानि जायंते विवृद्धे कुरुनंदन ॥ १३ ॥ यदा सत्वे प्रवृद्धे तु प्रलयं याति देहभृत् ॥ तदोत्तमविदाँल्लोकानमलान्प्रतिपद्यते॥ १४॥ रजसि प्रलयं गत्वा कर्मसंगिषु जायते ॥ तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५॥ कर्मणः सुकृतस्याहुः सात्विकं निर्मलं फलम् ॥ रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥

मयएववृद्धानांसत्वादीनांफलविशेषमाह यदेतिद्वाभ्याम् सत्वेप्रवृद्धेसतियदाजीवोमृत्युंप्राप्नोति तदाउत्तमान्हिरण्यगर्भादीन्विदंतिउ पासतइत्युत्तमविदस्तेषांयेअमलाःप्रकाशमयालोकाःसुखोपभोगस्थानविशेषास्तान्प्रतिपद्यनेप्राप्नोति ॥ १४ ॥ किंचरजसीति रजसिप्रवृ द्धेसति मृत्युंप्राप्यकर्मासक्तेषुमनुष्येषुजायते तथातमसिप्रवृद्धेसतिप्रलीनोमृतोमूढयोनिषुपश्वादिषुजायते ॥ १५ ॥ इदानींसत्वादीनां स्वानरूपकर्मद्वारेणविचित्रफलहेतुमाह कर्मणइति सुकृतस्यसात्विककर्मणः सात्विकंसत्वप्रधानंनिर्मलंप्रकाशबहुलंसुखंफलमाहुः

कापिलादयः रजसइतिराजसस्यकर्मणइत्यर्थः कर्मफलकथनस्यप्राकृतत्वात्तस्यदुःखंफलमाहुः तमसइति तामसस्यकर्मणइत्यर्थः तस्या
ज्ञानंमूढत्वंफलमाहुःसात्विकादिकर्मलक्षणंचनियतंसंगरहितमित्यादिनाष्टादशेवक्ष्यति ॥ १६ ॥ तत्रैवहेतुमाह सत्वादिति सत्वाज्ज्ञानं
संजायते अतःसात्विकस्यकर्मणःप्रकाशबहुलंसुखंफलंभवति रजसोलोभोजायते तस्यचदुःखहेतुत्वात् तत्पूर्वकस्यकर्मणोदुःखंफलंभव
ति तमसस्तुप्रमादमोहाज्ञानानिभवंति ततस्तामसस्यकर्मणोऽज्ञानप्रापकंफलंभवतीतियुक्तमेवेत्यर्थः॥१७॥इदानींसत्वादिवृत्तिशीलानां
फलभेदमाह ऊर्ध्वमिति सत्वस्थाःसत्ववृत्तिप्रधानाऊर्ध्वंगच्छंति सत्वोत्कर्षतारतम्यादुत्तरोत्तरशतगुणानंदान्मनुष्यगंधर्वपितृदेवादिलो

सत्वात्संजायते ज्ञानं रजसो लोभ एव च ॥ प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥ ऊर्ध्वं
गच्छंति सत्वस्था मध्ये तिष्ठंति राजसाः ॥ जघन्यगुणवृत्तिस्था अधो गच्छंति तामसाः ॥ १८ ॥
नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ॥ गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥

कान्सत्यलोकपर्यंतान् प्राप्नुवंतीत्यर्थः राजसास्तुतृष्णाद्याकुलामध्येतिष्ठंति मनुष्यलोकेएवोत्पद्यंते जघन्योऽतिनिकृष्टस्तमोगुणस्तस्यवृ
त्तिःप्रमादमोहादिस्तत्रस्थिताः अधोगच्छंति तमोवृत्तितारतम्यात्तामिस्रादिषुनिरयेषूत्पद्यंते ॥१८॥ तदेवंप्रकृतिगुणसंगकृतंसंसारंसप्रपंच
मुक्त्वाइदानींतद्विवेकतोमोक्षंदर्शयति नान्यमिति यदातुद्रष्टाविवेकीभूत्वाबुद्ध्याद्याकारपरिणतेभ्योगुणेभ्योऽन्यंकर्तारंनानुपश्यति अ
पितुगुणाएवकर्माणिकुर्वंतीतिपश्यति गुणेभ्यश्चपरंव्यतिरिक्तंतत्साक्षिणमात्मानंवेत्ति सतुमद्भावंब्रह्मत्वमधिगच्छति प्राप्नोति ॥ १९ ॥

ततश्चगुणकृतसर्वानर्थनिवृत्त्याकृतार्थोभवतीत्याह गुणानिति देहाद्याकारःसमुद्भवःपरिणामोयेषांतेदेहसमुद्भवाः तानेतांस्त्रीनपिगुणान तीत्यातिक्रम्य तत्कृतैर्जन्मादिभिर्विमुक्तःसन्नमृतमश्नुते ब्रह्मानंदंप्राप्नोति ॥ २० ॥ गुणानेतानतीत्यामृतमश्नुतइत्येच्छ्रुत्वागुणातीतस्य लक्षणमाचारंगुणात्ययोपायंचसम्यग्बुभुत्सुरर्जुनउवाच कैर्लिंगैरिति हेप्रभो कैर्लिंगैः कीदृशैरात्मन्युत्पन्नैश्चिह्नैर्गुणातीतोदेहीभवतीतिल क्षणप्रश्नः कआचारोयस्येतिकिमाचारः कथंवर्त्ततइत्यर्थः कथंचकेनोपायेनैतांस्त्रीनपिगुणानतीत्यवर्त्तते तत्कथयेति ॥ २१ ॥ स्थितप्रज्ञस्य

गुणानेतानतीत्यत्रीन्देही देहसमुद्भवान् ॥ जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥ अर्जुनउ० ॥ कै लिंगैस्त्रीन् गुणानेतानतीतो भवति प्रभो ॥ किमाचारःकथं चैतांस्त्रीन् गुणानतिवर्त्तते ॥ २१ ॥ श्रीभगवा नु० ॥ प्रकाशं च प्रवृत्तिं च मोहमेव च पांडव ॥ न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥ २२ ॥ ॥

काभाषेत्यादिनाद्वितीयाध्यायेपृष्टमपिदत्तोत्तरमपिपुनर्विशेषबुभुत्सयापृच्छतीतिज्ञात्वाप्रकारांतरेणतस्यलक्षणादिकंश्रीभगवानुवाच प्र काशंचेत्यादिषड्भिः तत्रएकेनलक्षणमाह प्रकाशंचेति प्रकाशंचसर्वद्वारेषुदेहेऽस्मिन्नितिपूर्वोक्तंसत्वकार्यं प्रवृत्तिंचरजःकार्यम् मोहंचतम सःकार्यम् उपलक्षणमेतत सत्वादीनांसर्वाण्यपिकार्याणियथायथंसंप्रवृत्तानिस्वतःप्राप्तानिसंतिदुःखबुद्ध्यायोनद्वेष्टि निवृत्तानिचसंतिसु खबुद्ध्यानकांक्षति गुणातीतः सउच्यतेइतिचतुर्थेनान्वयः ॥ २२ ॥

तदेवस्वसंवेद्यंतस्यलक्षणमुक्त्वापरसंवेद्यंतस्यलक्षणंवकुंकिमाचारइतिद्वितीयप्रश्नस्योत्तरमाह उदासीनवदितित्रिभिः उदासीनवत्सा
क्षितयाआसीनःस्थितःसन् गुणैर्गुणकार्यैःसुखदुःखादिभिर्योनविचाल्यते स्वरूपान्नप्रच्याव्यते अपितुगुणाएवस्वकार्येषुवर्तंते एतैर्ममसं
बंधएवनास्तीतिविवेकज्ञानेनयस्तूष्णीमवतिष्ठति परस्मैपदमार्षम् नेंगते नचलति ॥२३॥ अपिच समेति समेसुखदुःखेयस्य यतः स्वस्थ
स्वरूपएवस्थितः अतएवसमानिलोष्टाश्मकांचनानियस्य तुल्येप्रियाऽप्रियेसुखदुःखहेतुभूतेयस्य धीरोधीमान् तुल्यानिंदाचआत्मस्तुति

उदासीनवदासीनो गुणैर्यो न विचाल्यते ॥ गुणावर्त्तंत इत्येव योऽवतिष्ठति नेंगते ॥२३॥सम
दुःखसुखःस्वस्थः समलोष्टाश्मकांचनः ॥ तुल्यप्रियाप्रियोधीरस्तुल्यनिंदात्मसंस्तुतिः ॥२४॥
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ॥सर्वारंभपरित्यागी गुणातीतः स उच्यते॥२५॥
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ॥ स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते॥२६॥

श्चयस्य ॥ २४ ॥ अपिच मानापमानयोरिति मानेअपमानेचतुल्यः मित्रपक्षेअरिपक्षेचतुल्यः सर्वान्दृष्टादृष्टार्थानारंभानुद्यमान्परित्य
कुंशीलं यस्य सएवंभूताचारयुक्तोगुणातीतउच्यते ॥ २५॥ कथंचैतांस्त्रीन्गुणानतिवर्ततइत्यस्यप्रश्नस्योत्तरमाह मांचेति चशब्दोऽवधार
णार्थः मामेवपरमेश्वरं श्रीनारायणमव्यभिचारेणएकांतभक्तियोगेनयःसेवते सएतान्गुणान्समतीत्यसम्यगतिक्रम्यब्रह्मभूयायब्रह्मभा
वायमोक्षायकल्पतेयोग्योभवति ॥ २६ ॥ ॥ ॥ ॥ ॥ ॥

तत्रहेतुमाह ब्रह्मणोहीति हियस्माद्ब्रह्मणोऽहंप्रतिष्ठाप्रतिमाघनीभूतंब्रह्मैवाहम् यथाघनीभूतःप्रकाशएवसूर्यमंडलंतद्वदेवेत्यर्थः तथाऽव्यय
स्यनित्यस्य अमृतस्यमोक्षस्यचनित्यमुक्तत्वात् तथातत्साधनस्यशाश्वतस्यचधर्मस्यशुद्धसत्वात्मकत्वात् तथाएकांतिकस्यअखंडितस्य
सुखस्यचप्रतिष्ठाहम् परमानंदैकरूपत्वात् अतोमत्सेविनोमद्भावस्यावश्यंभावित्वाद्युक्तमेवोक्तंब्रह्मभूयायकल्पतइति ॥२७॥ कृष्णाधीन
गुणासंगप्रसंजितभवांबुधिं सुखंतरातितद्भक्तइत्यभाणिचतुर्दशे॥१॥ इतिसुबोधिन्यांटीकायांचतुर्दशोऽध्यायः १४ वैराग्येणविनाज्ञानंनच
भक्तिरतःस्फुटं वैराग्योपस्कृतंज्ञानमीशःपंचदशेऽदिशत् ॥१॥ पूर्वाध्यायांतेमांचयोऽव्यभिचारेणभक्तियोगेनसेवतइत्यादिनापरमेश्वरमे

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ॥ शाश्वतस्य च धर्मस्य सुखस्यैकांतिकस्य च ॥ २७॥ इतिश्री
मद्भगव०गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥ श्रीभगवानुवाच ॥ ऊर्ध्वमूलमधःशाखम
श्वत्थंप्राहुरव्ययम् ॥ छंदांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥ ॥ ॥ ॥

कांतभक्त्याभजतस्तत्प्रसादलब्धज्ञानेनब्रह्मभावोभवतीत्युक्तम् नचैकांतभक्तिर्ज्ञानंवाविरक्तस्यसंभवतीतिवैराग्यपूर्वकंज्ञानमुपदेष्टुकामः
प्रथमंतावत्सार्द्धश्लोकाभ्यांसंसारस्वरूपंवृक्षरूपकालंकारेणवर्णयन् श्रीभगवानुवाच ऊर्ध्वमूलमिति ऊर्ध्वमुत्तमः क्षराक्षराभ्यामुत्कृष्टःपु
रुषोत्तमोमूलंयस्यतम् अधइतिततोऽर्वाचीनाःकार्योपाधयोहिरण्यगर्भादयोगृह्यंते तेतुशाखाइवशाखायस्यतम् विनश्वरत्वेनश्वःप्रभा
तपर्यंतमपिनस्थास्यतीतिविश्वासानर्हत्वादश्वत्थंप्राहुः प्रवाहरूपेणाविच्छेदादव्ययंचप्राहुः ऊर्ध्वमूलोऽवाक्शाखएषोऽश्वत्थःसनातनइ

त्याद्याःश्रुतयः छंदांसिवेदाःयस्यपर्णानि धर्माधर्मप्रतिपादनद्वारेणछायास्थानीयैःकर्मफलैः संसारवृक्षस्यसर्वजीवाश्रयणीयत्वापादनात्
पर्णस्थानीयावेदाः यस्तमेवंभूतमश्वत्थंवेद सएववेदार्थवित् संसारप्रपंचवृक्षस्यमूलमीश्वरःश्रीनारायणः ब्रह्मादयस्तदंशाः शाखास्थानी
याः सचसंसारवृक्षोविनश्वरःप्रवाहरूपेणनित्यश्च वेदोक्तैः कर्मभिः सेव्यतामापादितश्चेत्येतावानेवहिवेदार्थः अतएवविद्वान्वेदविदितिस्तू
यते।१।किंच अधश्चेति हिरण्यगर्भादयःकार्योपाधयोजीवाःशाखास्थानीयत्वेनोक्तास्तेषुचयेदुष्कृतिनस्तेऽधःपश्वादियोनिषुप्रसृताःविस्तारं
गताः सुकृतिनश्चोर्ध्वंदेवादियोनिषुप्रसृतास्तस्यसंसारवृक्षस्यशाखाः किंच गुणैःसत्वादिवृत्तिभिःजलसेचनैरिवयथायथंप्रवृद्धाःवृद्धिंप्राप्ताः

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः॥ अधश्च मूलान्यनुसंततानि कर्मानुबंधीनि मनुष्यलोके॥
॥२॥न रूपमस्येह तथोपलभ्यतेनांतो नचादिर्न च संप्रतिष्ठा॥अश्वत्थमेनं सुविरूढमूलमसंगशस्त्रेण दृढेन छित्त्वा॥३॥

किंच विषयाःरूपादयः प्रवालाः पल्लवस्थानीयाःयासांताः प्रशाखास्थानीयाभिःइंद्रियवृत्तिभिःसंयुक्तत्वात् किंचअधश्च चशब्दादूर्ध्वंचमू
लानिअनुसंततानिविरूढानि मुख्यंमूलंईश्वरएकएव इमानित्ववांतरमूलानितत्तद्भोगवासनालक्षणानि तेषांकार्यमाह मनुष्यलोकेक
र्मानुबंधीनिकर्मएवानुबंधि अनंतरभावियेषांतानि ऊर्ध्वाधोलोकेषुयदुपभुक्तंतत्तद्भोगवासनादिभिर्हिकर्मक्षयेणमनुष्यलोकंप्राप्तानांतत्त
दनुरूपेषुकर्मसुप्रवृत्तिर्भवति एतस्मिन्नेवहिकर्माधिकारोनान्येषुलोकेषु अतोमनुष्यलोकेइत्युक्तम् ॥२॥ किंच नरूपमस्येति इहसंसारेस्थि
तैःप्राणिभिःअस्यसंसारवृक्षस्यतथोर्ध्वमूलत्वादिप्रकारेणरूपंनोपलभ्यते नचांतःअवसानम् अपर्यंतत्वात् नचादिरनादित्वात् नचसं

प्रतिष्ठास्थितिः कथंतिष्ठतीतिनचोपलभ्यते यस्मादेवंभूतोयंसंसारवृक्षोदुरुच्छेद्यः अनर्थकरश्च तस्मादेनंदृढेनवैराग्येणशस्त्रेणछित्त्वात
त्त्वज्ञानेयतेतेत्याह अश्वत्थमेनमितिसार्द्धेन एनमश्वत्थंसुविरूढमूलमत्यंतंबद्धमूलंसंतम् असंगःसंगराहित्यं अहंममतात्यागस्तेनदृढेन
शस्त्रेणसम्यग्विचारेणछित्त्वापृथक्कृत्य ॥३॥ ततइति ततस्तस्यमूलभूतंतत्पदंवस्तुवैष्णवंपदंपरिमार्गितव्यंअन्वेष्टव्यम् कीदृशम् यस्मिन्
गता यत्पदंप्राप्ताःसंतोभूयोननिवर्त्तंति नआवर्त्तंतइत्यर्थः अन्वेषणप्रकारमाह यतएषापुराणीचिरंतनीसंसारप्रवृत्तिःप्रसृताविस्तृता त
मेवचाद्यंपुरुषंप्रपद्येशरणंव्रजामीत्येवमेकांतभक्त्यान्वेष्टव्यमित्यर्थः॥४॥ तत्प्राप्तौसाधनांतराणिदर्शयन्नाह निर्मानेति निर्गतौमानमोहौ

ततःपदं तत्परिमार्गित्तव्यं यस्मिन् गता न निवर्त्तंति भूयः॥ तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी
॥ ४ ॥ निर्मानमोहा जितसंगदोषा अध्यात्मनित्या विनिवृत्तकामाः॥ द्वंद्वैर्विमुक्ताःसुखदुःखसंज्ञैर्गच्छंत्यमूढाः पद
मव्ययं तत् ॥ ५ ॥ न तद्भासयते सूर्यो न शशांको न पावकः ॥ यद्गत्वा न निवर्त्तंते तद्धाम परमं मम ॥ ६ ॥ ॥

अहंकारमिथ्याभिनिवेशौयेभ्यस्ते जितःपुत्रादिसंगरूपोदोषोयैस्ते अध्यात्मेआत्मज्ञानेनित्याःपरिनिष्ठिताः विशेषेणनिवृत्तःकामोये
भ्यस्ते सुखदुःखहेतुत्वात् सुखदुःखसंज्ञानिशीतोष्णादीनिद्वंद्वानितैर्विमुक्ताः अतएवामूढाः निवृत्ताविद्याःसंतस्तदव्ययंपदंवैष्णवंगच्छंति
॥५॥तदेवगंतव्यंपदंविशिनष्टि नतदिति यत्पदंसूर्यादयोनप्रकाशयंति यत्प्राप्यननिवर्त्तंतेयोगिनः तद्धामस्वरूपंपरमंमम अमेनसूर्यादिप्र
काशाविषयत्वेनजडत्वशीतोष्णादिदोषप्रसंगोनिरस्तः ॥ ६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

६

ननुचत्वदीयंधामप्राप्ताः संतोयदिननिवर्त्तंते तर्हिंसनिसंपद्यनाविदुःसतिसंपद्यामहइत्यादिश्रुतेः सुषुप्तिप्रलयसमयेत्वत्प्राप्तिःसर्वेषाम
स्तीतिकोनामसंसारीस्यादित्याशंक्यसंसारिणंदर्शयति ममेतिपंचभिः ममैवांशोयोऽयमविद्ययाजीवभूतःसनातनःसर्वदासंसारित्वेन
प्रसिद्धः असौसुषुप्तिप्रलययोः प्रकृतौलीनतयास्थितानिमनःषष्ठंयेषांतानींद्रियाणिपुनर्जीवलोकसंसारेभोगार्थमाकर्षति एतच्चकर्मेंद्रि
याणांप्राणस्यचोपलक्षणार्थम् अयंभावः सत्यं सुषुप्तिप्रलययोरपिमदंशत्वात्सर्वस्यापिजीवमात्रस्यमयिलयादस्त्येवमत्प्राप्तिः तथाप्य
विद्ययावृतस्यसानुशयस्यसप्रकृतिकेमयिलयोनतुशुद्धे तदुक्तम् अव्यक्ताद्व्यक्तयःसर्वाःप्रभवंतीत्यादिना अतश्चपुनःसंसारायनिर्गच्छन्न

ममैवांशो जीवलोके जीवभूतः सनातनः ॥ मनःषष्ठानींद्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ॥ गृहीत्वैतानि संयाति वायुर्गंधानिवाशयात् ॥ ८ ॥
श्रोत्रं चक्षुःस्पर्शनं च रसनं घ्राणमेव च ॥ अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥

विद्वान्प्रकृतौलीनतयास्थितानिस्वोपाधिभूतानींद्रियाण्याकर्षति विदुषांतुशुद्धस्वरूपप्राप्तेर्नावृत्तिरिति॥७॥ तान्याकृष्यकिंकरोतीत्यत्राह
शरीरमिति यदाशरीरांतरंकर्मवशादवाप्नोति यतश्चशरीरादुत्क्रामति ईश्वरोदेहादीनांस्वामी तदापूर्वस्माच्छरीरादेतानिगृहीत्वातच्छरी
रांतरंसम्यग्याति शरीरेसत्यपींद्रियग्रहणेदृष्टांतः आशयात्स्वस्थानात् कुसुमादेःसकाशात्गंधान्गंधवतःसूक्ष्मानंशान्गृहीत्वायथावायु
र्गच्छतितद्वत्॥८॥तान्येवेंद्रियाणिदर्शयन्यदर्थंगृहीत्वागच्छतितदाह श्रोत्रमिति श्रोत्रादीनिबाह्येंद्रियाणिमनश्चान्तःकरणमाधिष्ठायाश्रित्य

शब्दादीन्विषयानयंजीवउपभुंक्ते॥ ९॥ननुचकार्यकारणसंघातव्यतिरेकेणैवंभूतमात्मानंसर्वोपिकिंनपश्यंतितत्राह उत्क्रामंतमिति उत्क्रामं तंदेहाद्देहांतरंगच्छन्तमृतस्मिन्नेवदेहेस्थितंवाविषयान्भुंजानंवागुणान्वितमिंद्रियादियुक्तंजीवंविमूढानानुपश्यंति नालोकयंति ज्ञानमे वचक्षुर्येषांतेविवेकिनःपश्यंति ॥ १० ॥ दुर्ज्ञेयश्चायंयतोविवेकिष्वपिकेचिदेवपश्यंतिकेचिन्नपश्यंतीत्याह यतंतइति यतंतःध्यानादिभिःप्रय तमानायोगिनःकेचिदेनमात्मानं आत्मनिदेहेऽवस्थितंविविक्तंपश्यंति शास्त्राभ्यासादिभिःप्रयत्नंकुर्वाणाअपिअकृतात्मानः अविशुद्ध

उत्क्रामंतं स्थितं वापि भुंजानं वा गुणान्वितम् ॥ विमूढा नानुपश्यंति पश्यंति ज्ञानचक्षुषः ॥ १० ॥
यतंतो योगिनश्चैनं पश्यंत्यात्मन्यवस्थितम् ॥ यतंतोऽप्यकृतात्मानो नैनं पश्यंत्यचेतसः ॥ ११ ॥
यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥ यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥
गामाविश्य च भूतानि धारयाम्यहमोजसा॥पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः॥१३॥

चित्ताः अतएवाचेतसोमंदमतयः एनंनपश्यंति ॥ ११ ॥ तदेवंनतद्भासयतेसूर्यइत्यादिनापरमेश्वरंपरंधामोक्तं तत्प्राप्तानांचापुनरावृतिरु क्तातत्रचसंसारिणोऽभावमाशंक्यसंसारिस्वरूपंदेहादिव्यतिरिक्तंदर्शितम् इदानींतदेवपारमेश्वरंरूपंअनंतशक्तित्वेननिरूपयति यदेत्यादि चतुर्भिः आदित्यादिषुस्थितंयदनेकप्रकारंतेजोविश्वंप्रकाशयति तत्सर्वंतेजोमदीयमेवजानीहि ॥ १२ ॥ किंच गामाविश्येति गांपृथ्वी मोजसाबलेनाधिष्ठायअहमेवचराचराणिभूतानिधारयामि अहमेवरसमयःसोमोभूत्वाव्रीह्याद्यौषधीःसर्वाःसंवर्धयामि ॥ १३ ॥

किंच अहमेवाग्निर्वैश्वानरो जाठरो भूत्वा प्राणिनां देहस्यांतः प्रविश्य प्राणापानाभ्यां तदुद्दीपकाभ्यां सहितः प्राणिभिर्भुक्तं भक्ष्यं भोज्यं लेह्यं चोष्यं चेति चतुर्विधमन्नं पचामि तत्र यद्दंतैरवखंड्यावखंड्य भक्ष्यते ऽपूपादि तद्भक्ष्यम् यत्तु केवलं जिह्वया विलोड्य निगीर्यते पायसादि तद्भोज्यम् यत्तु जिह्वायां निक्षिप्य रसास्वादेन क्रमशो निगीर्यते द्रवीभूतं गुडादि तल्लेह्यम् चतुर्दंष्ट्रादिभिः निष्पीड्य रसांशं निगीर्यावशिष्टं त्यज्यत इक्षुदंडादि तच्चोष्यमिति चतुर्विधभेदः ॥ १४ ॥ किंच सर्वस्येति सर्वस्य प्राणिजातस्य हृदि सम्यगंतर्यामिरूपेण प्रविष्टोऽहम् अतश्च मत्त एव हेतोः प्राणिमात्रस्य पूर्वानुभूतार्थविषया स्मृतिर्भवति ज्ञानं च विषयेंद्रियसंयोगजं भवति अपोहनं च तयोः प्रमोषो भवति वेदैश्च सर्वैस्तत्तद्देवतादिरूपेण

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ॥ प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥ सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ॥ वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहं ॥ १५ द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ॥ क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥१६॥

हमेव वेद्यः वेदांतकृत् तत्संप्रदायप्रवर्त्तकज्ञानदो गुरुरहमित्यर्थः वेदविदेव च वेदार्थविदहमेव ॥ १५ ॥ इदानीं तद्धाम परमं ममेति यदुक्तं तत्स्वकीयं सर्वोत्तमत्वं दर्शयति द्वाविमाविति त्रिभिः क्षरश्चाक्षरश्चेति द्वाविमौ पुरुषौ लोके प्रसिद्धौ तावेवाह तत्र क्षरः पुरुषो नाम सर्वाणि भूतानि ब्रह्मादिस्थावरांतानि शरीराणि अविवेकिलोकस्य शरीरेष्वेव पुरुषत्वप्रसिद्धेः कूटः शिलाराशिः पर्वत इव देहेषु नश्यत्स्वपि निर्विकारतया तिष्ठतीति कूटस्थः चेतनो भोक्ता स तु अक्षरः पुरुष इत्युच्यते विवेकिभिः ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

यदर्थमेतौलक्षितौतमाह उत्तमइति एताभ्यांक्षराक्षराभ्यामन्योविलक्षणस्तूत्तमःपुरुषःवैलक्षण्यमेवाह परमश्चासावात्मेतिचोदाहृतउक्तः
श्रुतिभिः आत्मत्वेनक्षरादचेतनाद्विलक्षणःपरमत्वेनाक्षराच्चेतनाद्भोक्तुःविलक्षणइत्यर्थः परमात्मत्वमेवदर्शयति योलोकत्रयमिति यईश्व
रईशनशीलः अव्ययश्चनिर्विकारएवसन्लोकत्रयंकृत्स्नमाविश्यबिभर्त्ति पालयति ॥१७॥ एवंभूतंपुरुषोत्तमत्वमात्मनोनामनिर्वचनेनदर्श
यति यस्मादिति यस्मात्क्षरंजडवर्गमतिक्रांतोऽहं नित्यमुक्तत्वात् अक्षराच्चेतनवर्गादप्युत्तमश्चनियंतृत्वात् अतोलोकेवेदेचपुरुषोत्तमइति

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः॥ योलोकत्रयमाविश्यबिभर्त्यव्ययईश्वरः॥१७॥यस्मात्क्षरमतीतोऽहमक्षराद
पिचोत्तमः ॥ अतोस्मिलोकेवेदेचप्रथितःपुरुषोत्तमः ॥ १८ ॥ योमामेवमसंमूढोजानातिपुरुषोत्तमम् ॥ ससर्वविद्भजति
मांसर्वभावेन भारत ॥१९॥ इतिगुह्यतमं शास्त्रमिदमुक्तं मयानघ॥एतद्बुद्ध्वा बुद्धिमान्स्यात् कृतकृत्यश्च भारत ॥२०॥

प्रथितः प्रख्यातोऽस्मि तथाचश्रुतिः सवाअयमात्मासर्वस्यवशीसर्वस्येशानःसर्वस्याधिपतिः सर्वमिदंप्रशास्तीत्यादिः ॥१८॥एवंभूतेश्वर
स्यज्ञातुःफलमाह योमामिति एवमुक्तप्रकारेणासंमूढोनिश्चितमतिःसन्योमांपुरुषोत्तमंजानाति ससर्वभावेनसर्वप्रकारेणमामेवभजति
ततःसर्ववित्सर्वज्ञोभवति॥१९॥अध्यायार्थमुपसंहरति इतीति इत्यनेनप्रकारेणगुह्यतमं अतिरहस्यंसंपूर्णशास्त्रमेवमयोक्तम् नपुनर्विंश
तिश्लोकमध्यायमात्रम् हेअनघव्यसनशून्य अतएतन्मदुक्तंशास्त्रं बुद्ध्वा बुद्धिमान्सम्यग्ज्ञानी कृतकृत्यश्चस्यादयोऽपिकोऽपि हेभारत

त्वंकृतकृत्याऽसींताकवक्तव्यमितिभावः॥ २१॥संसारशाखिनंछित्त्वास्पष्टंपंचदशेप्रभुः पुरुषोत्तमयोगाख्येपरंपदमुपादिशत् १ इतिसुबोधि
न्यांटीकायांपंचदशोऽध्यायः॥ १५॥आसुरींसंपदंत्यक्त्वादैवीमेवाश्रितानराः मुच्यंतइतिनिर्णेतुंतद्विवेकोऽथषोडशे १ पूर्वाध्यायांते एतद्बु
ध्वाबुद्धिमान्स्यात्कृतकृत्यश्चभारतेत्युक्तम् तत्रकएतत्तत्त्वंबुध्येतकोवानबुद्ध्यतइत्यपेक्षायांतत्त्वज्ञानेऽधिकारिणोऽनधिकारिणश्चविवेका
र्थं षोडशाध्यायारंभः निरूपितेहिकार्यार्थेऽधिकारिजिज्ञासाभवति तदुक्तंभट्टैः भारोयोयेनवोढव्यःसप्रागांदोलितोयदा तदाकस्तस्यवोढे
तिशक्यंकर्तुंनिरूपणमिति तत्राधिकारिविशेषणभूतांदैवींसंपदमाह श्रीभगवानुवाच अभयमितित्रिभिः अभयंभयाभावःसत्वस्यचित्त

इति श्रीमद्भगव० पुरुषोत्तमयोगो नाम पंचदशोऽध्यायः ॥ १५ ॥ ॥ श्रीभगवानुवाच ॥ अभयं सत्वसं
शुद्धिर्ज्ञानयोगव्यवस्थितिः ॥ दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥ अहिंसा सत्यम
क्रोधस्त्यागःशांतिरपैशुनम् ॥ दयाभूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥ ॥ ॥

स्य संशुद्धिः सुप्रसन्नता ज्ञानयोगेआत्मज्ञानोपायेव्यवस्थितिःपरिनिष्ठा दानंस्वभोज्यस्यान्नादेर्यथोचितंसंविभागः दमोबाह्येंद्रियसंयमः
यज्ञोयथाधिकारंदर्शपूर्णमासादिः स्वाध्यायोब्रह्मयज्ञादिर्जपयज्ञः तपउत्तराध्यायेवक्ष्यमाणंशारीरादि आर्जवमवक्रता॥१॥किंच अहिंसे
ति अहिंसापरपीडावर्जनम् सत्यंयथार्थभाषणं अक्रोधस्ताडितस्यापिचित्तेक्षोभानुत्पत्तिः त्यागऔदार्यम् शांतिश्चित्तोपरतिःपैशुनंपरोक्षे
परदोषप्रकाशनम् तद्वर्जनमपैशुनम् भूतेषुदीनेषुदया अलोलुप्त्वम् लोभाभावः अवर्णलोपआर्षः मार्दवंमृदुत्वमक्रूरता ह्रीःअकार्यप्रवृ

त्रौलोकलज्जा अचापलंव्यर्थक्रियाराहित्यम् ॥२॥ किंच तेजइति तेजः प्रागल्भ्यं क्षमापरिभवादिषूत्पद्यमानेषुक्रोधप्रतिबंधः धृतिर्दुःखा दिभिरवसीदतश्चित्तस्यस्थिरीकरणम् शौचंबाह्याभ्यंतरशुद्धिः अद्रोहोजिघांसाराहित्यं अतिमानिताआत्मन्यतिपूज्यत्वाभिमानस्तदभा वोनातिमानिता एतान्यभयादीनिषड्विंशतिप्रकाराणिदैवींसंपदमभिजातस्यभवंति देवयोग्यांसात्विकींसंपदमभिलक्ष्यतदाभिमुख्येन जातस्यभाविकल्याणस्यपुंसोभवंतीत्यर्थः॥३॥आसुरींसंपदमाह दंभइति दंभोधर्मध्वजित्वम् दर्पोधनविद्यादिनिमित्तश्चित्तस्योत्सेकःअ भिमानोव्याख्यातः क्रोधःप्रसिद्धः पारुष्यंनिष्ठुरत्वम् अज्ञानमविवेकः आसुरीमित्युपलक्षणम् असुराणांराक्षसानांचयासंपत् तामासुरी

तेजःक्षमा धृतिःशौचमद्रोहो नातिमानिता ॥ भवंति संपदं दैवी मभिजातस्य भारत ॥३॥दंभो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च॥अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम्॥४॥दैवीसंपद्विमोक्षाय निबंधायासुरीमता॥मा शुचःसंपदंदै वीमभिजातोऽसि पांडव ॥५॥द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च॥दैवो विस्तरशःप्रोक्त आसुरं पार्थ मेशृणु६॥

मभिलक्ष्यजातस्यैतानिदंभादीनिभवंतीत्यर्थः ॥ ४ ॥ एतयोःसंपदोःकार्यंदर्शयन्नाह दैवीसंपदिति दैवीयासंपत्तयायुक्तोमयोक्तेतत्त्वज्ञा नेऽधिकारी आसुर्यासंपदायुक्तस्तुनित्यंसंसारीत्यर्थः एतच्छ्रुत्वा किमहमत्राधिकारीनवेति संदेहव्याकुलचित्तमर्जुनमाश्वासयति हे पांडव माशुचः शोकंमाकार्षीः यतस्त्वंदैवींसंपदमभिजातोऽसि ५ आसुरीसंपत् सर्वात्मनावर्जयितव्येत्येतदर्थमासुरींसंपदंप्रपंचयितु माह द्वाविति द्वौद्विःप्रकारौभूतानांसर्गौमेमद्वचनाच्छृणु आसुरराक्षसप्रकृत्योरेकीकरणेनद्वावित्युक्तम् अतोराक्षसीमासुरींचैवप्रकृतिंमो

हिर्नीश्रिताइत्यादिनानवमाध्यायोक्तप्रकृतित्रैविध्येनाविरोधः स्पष्टमन्यत्॥६॥ आसुरींविस्तरतोनिरूपयति प्रवृत्तिंचेत्यादिद्वादशभिः ध
र्मेप्रवृत्तिं अधर्मान्निवृत्तिंच आसुरस्वभावाजनानजानंति अतःशौचमाचारःसत्यंचतेषुनास्त्येव॥७॥ननुवेदोक्तयोर्धर्माधर्मयोःप्रवृत्तिंनिवृ
त्तिंचकथंनविदुःकुतोवाधर्माधर्मयोरनंगीकारेजगतःसुखदुःखादिव्यवस्थास्यात् कथंवाशौचाचारादिविषयामीश्वराज्ञामतिवर्त्तेरन् ईश्वरानं
गीकारेचकुतोजगदुत्पत्तिःस्यादतआह असत्यमितिनास्तिसत्यंवेदपुराणादिप्रमाणंयस्मिन् तादृशंजगदाहुः वेदादीनांप्रामाण्यंनमन्यंतइ
त्यर्थः तदुक्तम् त्रयोवेदस्यकर्तारोभण्डधूर्तनिशाचराइत्यादि अतएवनास्तिधर्माधर्मरूपाप्रतिष्ठाव्यवस्थाहेतुर्यस्यतत् स्वाभाविकंजगद्वै

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ॥ न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥ अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ॥ प्रभवंत्युग्रकर्माणः क्षयाय जगतो हिताः ॥ ९ ॥

चित्र्यमाहुरित्यर्थः अतएवनास्तीश्वरःकर्ताव्यवस्थापकश्चयस्यतादृशंजगदाहुः तर्हिकुतोऽस्यजगतउत्पत्तिंवदंतीत्यतआह अपरस्परसंभू
तमिति अपरश्चपरश्चेत्यपरस्परं अपरस्परतः अन्योऽन्यतःस्त्रीपुरुषमिथुनात् संभूतंजगत् किमन्यत्कारणमस्य नास्त्यन्यत्किंचित् किंतुका
महैतुकम् स्त्रीपुरुषयोःकामएवप्रवाहरूपेणहेतुरस्येत्याहुरित्यर्थः॥८॥किंच एतामिति एतांलोकायतिकानांदृष्टिंदर्शनमाश्रित्यनष्टात्मानो
मलिनचित्ताःसंतोऽल्पबुद्धयः दृष्टार्थमात्रमतयः अतएवउग्रंहिंस्रंकर्मयेषांतेऽहितावैरिणोभूत्वाजगतःक्षयायप्रभवंतिउद्भवंतीत्यर्थः॥ ९ ॥

अपिच काममिति दुष्पूरयितुमशक्यंकाममाश्रित्यदंभादिभिर्युक्ताःसंतःक्षुद्रदेवताराधनादौप्रवर्त्तंते कथम् असद्ग्राहान्गृहीत्वानेनमं
त्रेणैतांदेवतामाराध्यमहाविधीन्साधयिष्यामइत्यादिदुराग्रहान्मोहमात्रेणस्वीकृत्यप्रवर्तंते अशुचिव्रताअशुचीनिमद्यमांसादिविषया
णिव्रतानियेषांते ॥१०॥ किंच चिंतामिति प्रलयोमरणमेवांतोयस्यास्ताम् अपरिमेयांपरिमातुमशक्यांचिंतामाश्रिताः नित्यंचिंतापराय
णाइत्यर्थः कामोपभोगएवपरमोयेषांते एतावदितिकामोपभोगएवपरमःपुरुषार्थोनान्यदस्तीतिकृतनिश्चयाः अर्थसंचयानीहंतइत्युत्तरेण।

काममाश्रित्यदुष्पूरंदंभमानमदान्विताः ॥ मोहाद्गृहीत्वासद्ग्राहान्प्रवर्तंतेशुचिव्रताः ॥१०॥ चिंतामपरिमेयांचप्रलयां
तामुपाश्रिताः॥कामोपभोगपरमाएतावदितिनिश्चिताः ॥११॥आशापाशशतैर्बद्धाःकामक्रोधपरायणाः॥ईहंतेकामभो
गार्थमन्यायेनार्थसंचयान् ॥१२॥इदमद्यमयालब्धमिदंप्राप्स्येमनोरथम्॥इदमस्तीदमपिमेभविष्यतिपुनर्धनम्॥१३॥

न्वयः तथाच बार्हस्पत्यंसूत्रम् कामएवैकःपुरुषार्थइतिचैतन्यविशिष्टःकामःपुरुषइतिच ॥११॥ अतएव आशेति आशाएवपाशास्तेषांश
तानितैर्बद्धाः इतस्ततआकृष्यमाणाः कामक्रोधौपरमयनमाश्रयोयेषांते कामभोगार्थमन्यायेनचौर्यादिनार्थानांसंचयान्राशीनीहंते
इच्छंति ॥ १२ ॥ तेषांमनोराज्यंकथयन्नरकप्राप्तिमाह इदमद्येतिचतुर्भिः प्राप्स्येप्राप्स्यामि मनोरथंमनसःप्रियम् शेषंस्पष्टम् एवंत्रया
णांश्लोकानामित्यज्ञानविमोहिताःसंतोनरकेपतंतीतिचतुर्थेनान्वयः ॥ १३ ॥ ॥ ॥ ॥ ॥ ॥

किंच असाविति सिद्धः कृतकृत्यः स्पष्टमन्यत्॥ १४॥ किंच आढ्यइति आढ्योधनादिसंपन्नः अभिजनवान्कुलीनः यक्ष्येयागाद्यनुष्ठानेनापि दीक्षितांतरेभ्यः सकाशान्महतींप्रतिष्ठांप्राप्स्यामि दास्यामिस्तावकेभ्यश्च मोदिष्येहर्षंप्राप्स्यामीत्येवमज्ञानेनविमोहिताः मिथ्याभिनिवेशं प्रापिताः॥ १५॥ एवंभूतायत्प्राप्नुवंतितच्छृणु अनेकेति अनेकेषुमनोरथेषुप्रवृत्तंचित्तमनेकाचित्तंतेन विभ्रांताः विक्षिप्ताः तेनैवमोहमयेनजालेनसमावृताः मत्स्याइवसूत्रमयेनजालेनयंत्रिताः एवंकामभोगेषुप्रसक्ताः अभिनिविष्टाः संतोऽशुचौकश्मलेनरकेपतंति ॥ १६॥ यक्ष्यइति

असौ मया हतः शत्रुर्हनिष्ये चापरानपि॥ ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४॥ आढ्यो
ऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया॥ यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः॥ १५॥
अनेकचित्तविभ्रांता मोहजालसमावृताः॥ प्रसक्ताः कामभोगेषु पतंति नरकेऽशुचौ॥ १६ ॥ आत्म
संभाविताः स्तब्धा धनमानमदान्विताः॥ यजंते नाम यज्ञैस्ते दंभेनाविधिपूर्वकम्॥ १७ ॥ ॥ ॥

चयस्तेषांमनोरथउक्तः सकेवलंदंभाहंकारादिप्रधानएव नतुसात्विकइत्यभिप्रायेणाह आत्मसंभाविताइतिद्वाभ्यां आत्मनैवसंभाविताः पूज्यतांनीताः नतुसाधुभिः कैश्चित् अतएवस्तब्धाअनम्राः धनेनयोमानः मदश्चताभ्यामान्विताः संतः ते नाममात्रेणयेयज्ञाः तेनामयज्ञाः यद्वा दीक्षितः सोमयाजीत्येवमादिनानाममात्रप्रसिद्धयेयेयज्ञास्तैर्यजंते कथम् दंभेननतुश्रद्धया अविधिपूर्वकंचयथाभवतितथा ॥ १७ ॥

अविधिपूर्वकत्वमेवप्रपंचयति अहंकारमिति अहंकारादिसंश्रिताःसंतः आत्मपरदेहेषुस्वदेहेषुपरदेहेषुचाचिदंशेनस्थितंमांप्रद्विषंतोयजंते दंभयज्ञेषुश्रद्धायाअभावात् आत्मनोवृथैवपीडाभवति तथापश्वादीनामपि अविधिनाहिंसायांचैतन्यद्रोहमात्रमेवावशिष्यतइतिप्रद्विषं तइत्युक्तं अभ्यसूयकाःसन्मार्गवर्तिनांगुणेषुदोषारोपकाः ॥ १८ ॥ तेषांकदाचिदप्यासुरस्वभावप्रच्युतिर्नभवतीत्याह तानितिद्वाभ्यां तानहं मांद्विषतःक्रूरान्संसारेषुजन्ममृत्युमार्गेषु तत्रापिआसुरीष्वेव अतिक्रूरासुव्याघ्रादियोनिषु अजस्रमनवरतंक्षिपामि तेषांपापकर्मणांतादृ

अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः॥मामात्मपरदेहेषु प्रद्विषंतोऽभ्यसूयकाः॥१८॥तानहं द्वि षतः क्रूरान् संसारेषु नराधमान् ॥ क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥ आसुरीं यो निमापन्ना मूढा जन्मनि जन्मनि ॥ मामप्राप्यैव कौंतेय ततो यांत्यधमां गतिम्॥२०॥त्रिविधं नर कस्येदं द्वारं नाशनमात्मनः ॥ कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥ ॥ ॥ ॥

शंफलंददामीत्यर्थः ॥ १९ ॥ किंच आसुरीमिति तेच मामप्राप्यैवेत्येवकारेणमत्प्राप्तिशंकाकुतस्तेषांयतोमत्प्राप्त्युपायंसन्मार्गमप्यप्राप्यततोऽ प्यधमांगतिंकृमिकीटादियोनिंयांतीत्युक्तं शेषंस्पष्टम् ॥ २० ॥ उक्तानामासुरदोषाणांमध्येसकलदोषमूलभूतंदोषत्रयंसर्वथावर्जनीयमित्याह त्रिविधमिति कामःक्रोधोलोभश्चेतीदंत्रिविधंनरकस्यद्वारम् अतएवात्मनोनाशनंनीचयोनिप्रापकं तस्मादेतत्त्रयंसर्वात्मनात्यजेत् ॥ २१ ॥

त्यागेचविशिष्टफलमाह एतैरिति तमसोनरकस्यद्वारभूतैरेतैस्त्रिभिःकामादिभिर्विमुक्तोनरः आत्मनःश्रेयः साधनंतपोयोगादिकमाचरति
ततश्चमोक्षंप्राप्नोति॥२२॥कामादित्यागश्चस्वधर्माचरणंविनानभवतीत्याह यइति शास्त्रविधिंवेदविहितंधर्ममुत्सृज्ययःकामकारतोयथेच्छं
वर्तते ससिद्धिंतत्त्वज्ञानंनप्राप्नोति नचसुखमुपशमं नचपरांगतिंमुक्तिंप्राप्नोति ॥ २३॥ फलितमाह तस्मादिति इदंकार्यमिदमकार्यमित्य
स्यांव्यवस्थायांतेतवशास्त्रंश्रुतिस्मृतिपुराणादिकमेवप्रमाणं अतःशास्त्रविधानोक्तंकर्मज्ञात्वाइहकर्माधिकारेवर्तमानोयथाऽधिकारंकर्मकर्तुं

एतैर्विमुक्तःकौंतेय तमोद्वारैस्त्रिभिर्नरः ॥ आचरत्यात्मनःश्रेयस्ततो याति परांगतिम् ॥ २२ ॥ यः शास्त्रविधि
मुत्सृज्य वर्त्तते कामकारतः ॥ न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥ तस्माच्छास्त्रं प्रमाणं ते कार्या
कार्यव्यवस्थितौ ॥ ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहार्हसि ॥ २४ ॥ ॥ इति श्रीमद्भगवद्गीतासूपनिषत्सुब्रह्म
विद्यायां योगशा०दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥ अर्जुन उवाच ॥ ये शास्त्रविधिमुत्सृज्य
यजंते श्रद्धयाऽन्विताः ॥ तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥

मर्हसि तन्मूलत्वात्सत्वशुद्धिसम्यग्ज्ञानमुक्तीनामित्यर्थः ॥२४॥ देवदैतेयसंपत्तिसंविभागेनषोडशे तत्त्वज्ञानेऽधिकारस्तुसात्विकस्येतिद
र्शितम्॥१॥इतिसुबोधिन्यांटीकायांश्रीधरस्वामिविरचितायांषोडशोऽध्यायः॥१६॥उक्ताधिकारहेतूनांश्रद्धामुख्यातुसात्त्विकी इतिसप्तदशे
गौणश्रद्धाभेदास्त्रिधोच्यते ॥१॥ पूर्वाध्यायांतेयःशास्त्रविधिमुत्सृज्यवर्ततेकामकारतः नससिद्धिमवाप्नोतीत्यनेनशास्त्रोक्तविधिमुत्सृज्यका

मकारेणवर्तमानस्यज्ञानेअधिकारोनास्तीत्युक्तं तत्रशास्त्रविधिमुत्सृज्यकामकारंविनाश्रद्धयावर्तमानानांकिमधिकारोऽस्तिनास्तिवेतिबु
भुत्सया अर्जुनउवाच यइति अत्रशास्त्रविधिमुत्सृज्ययजंतेइत्यनेनशास्त्रार्थंबुद्ध्वातमुल्लंघ्यवर्तमानाश्चगृह्यंते तेषांश्रद्धयायजनानुपपत्तेः
आस्तिक्यबुद्धिर्हिश्रद्धा नचासौशास्त्रज्ञानवतांशास्त्रविरुद्धेर्थेसंभवति तानेवाधिकृत्यत्रिविधाभवतिश्रद्धायजंतेसात्विकादेवानित्याद्युत्त
रानुपपत्तेश्च अतोनात्रशास्त्रातिलंविनोगृह्यंते अपितुक्लेशबुद्ध्याआलस्याद्वाशास्त्रार्थज्ञानेप्रयत्नमकृत्वाकेवलमाचारपरंपरावशेनश्रद्धया
क्वचिद्देवताराधनादौप्रवर्तमानागृह्यंते अतोयमर्थः येशास्त्रविधिमुत्सृज्यदुःखबुद्ध्याआलस्याद्वाअनादृत्यकेवलमाचारप्रामाण्येनश्रद्धया
न्विताःसंतोयजंते तेषांतुकानिष्ठाकास्थितिःकआश्रयः तामेवविशेषेणपृच्छति किंसत्वं आहोस्विद्रजः अथवातमइति तेषांतादृशीदे

श्रीभगवानुवाच ॥ ॥ त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा॥ सात्विकी राजसी चैव तामसी चेति तां शृणु२

वपूजादिप्रवृत्तिःकिंसत्वसंश्रितारजःसंश्रितावातमःसंश्रितावेत्यर्थः श्रद्धायाःसात्विकत्वात् क्लेशबुद्ध्याआलस्येनचशास्त्रानादरस्यचराज
सतामसत्वात्त्रेधासंदेहः यदिसत्वभावसंश्रितास्तर्हितेषामपिसात्विकत्वाद्यथोक्तात्मज्ञानेऽधिकारःस्यात् अन्यथानेतिप्रश्नतात्पर्यार्थः ॥१॥
अत्रोत्तरं श्रीभगवानुवाच त्रिविधेति अयमर्थः शास्त्रतत्त्वज्ञानतःप्रवर्तमानानांपरमेश्वरपूजाविषयासात्विकीएकविधैवश्रद्धा लोकाचार
मात्रेणतुप्रवर्तमानानांदेहिनांयाश्रद्धासातुसात्विकीराजसीतामसीचेतित्रिविधाभवति तत्रहेतुः स्वभावजा स्वभावःपूर्वकर्मसंस्कारःत
स्माज्जातास्वभावजास्वभावमन्यथाकर्तुंसमर्थंहिशास्त्रोक्तंविवेकज्ञानंतत्तुतेषांनास्ति अतःकेवलंस्वभावेनैवभवतीति श्रद्धात्रिविधाभवति

तामिमांत्रिविधांश्रद्धांशृणु तदुक्तम् व्यवसायात्मिकाबुद्धिरेकेहकुरुनंदनेत्यादिना ॥ २ ॥ ननुचश्रद्धासात्विक्येवसत्वकार्यत्वेनतत्रयैवभगव
ताउद्ववंप्रतिनिर्दिष्टत्वात् यथोक्तम् शमोदमास्तितिक्षेज्यातपःसत्यंदयास्मृतिः तुष्टिस्त्यागोऽस्पृहाश्रद्धाह्रीर्दयानिर्वृतिर्धृतिः इत्येताःसत्व
स्यवृत्तयइति अतःकथंतस्यास्त्रैविध्यमुच्यते सत्यम् तथाऽपिरजस्तमोयुक्तपुरुषाश्रयत्वेनरजस्तमोमिश्रत्वेनसत्वस्यत्रैविध्यात् श्रद्धाया
अपित्रैविध्यंघटतइत्याह सत्वानुरूपेति सत्वानुरूपासत्वतारतम्यानुसारिणीसर्वस्यविवेकिनोऽविवेकिनोवालोकस्यश्रद्धाभवति त
स्मादयंपुरुषः लौकिकः श्रद्धामयः श्रद्धाविकारः त्रिविधयाश्रद्धयाविक्रियतइत्यर्थः तदेवाह योयच्छ्रद्धः यादृशीश्रद्धायस्यसएवसः ता

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ॥ श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥ यजंते सात्विका दे
वान्यक्षरक्षांसि राजसाः॥प्रेतान्भूतगणांश्चान्ये यजंते तामसा जनाः॥४॥

दृश्याश्रद्धयायुक्तएवसःयःपूर्वंसत्वोत्कर्षेणसात्विक
श्रद्धयायुक्तःपुरुषःसपुनस्तादृशसत्वसंस्कारेणसात्विकश्रद्धयायुक्तएवभवति यस्तुरजसउत्कर्षेणराजसश्रद्धायुक्तः सपुनस्तादृशएवभव
ति यस्तुतमसउत्कर्षेणतामसश्रद्धयायुक्तःसपुनस्तादृशएवभवति इतिलोकाचारमात्रेणप्रवर्तमानेष्वेवंसात्विकराजसतामसश्रद्धाव्य
वस्था शास्त्रजनिताविवेकज्ञानयुक्तानांतुस्वभावविजयेनसात्विक्येकैवश्रद्धेतिप्रकरणार्थः॥ ३॥सात्विकादिभेदमेवकार्यभेदेनप्रपंचयति यजं
तइति सात्विकाजनाःसत्वप्रकृतीन्देवानेवयजंते पूजयंति राजसास्तुरजःप्रकृतीन्यक्षान्राक्षसांश्चयजंते एतेभ्योन्येतुविलक्षणास्ताम
साजनास्तामसानेवप्रेतान्भूतगणांश्चयजंतेसत्वादिप्रकृतीनांतत्तद्देवतानांतुपूजारुचिभिस्तत्तत्पूजकानांसात्विकत्वादिज्ञातव्यमित्यर्थः॥४

राजसतामसेषुपुनर्विशेषांतरमाह अशास्त्रविहितमितिद्वाभ्यां शास्त्रविधिमजानंतोपिकेचित्प्राचीनपुण्यसंस्कारेणोत्तमाःसात्विकाएवभ वंति केचित्तुमध्यमाराजसाभवंति अधमास्तुतामसाभवंति येपुनरत्यंतंमंदभाग्याः गतानुगत्यापाखंडसंगेनचतदाचारानुवर्तिनःसंतःअ शास्त्रविहितंघोरंभूतभयंकरंतपस्तप्यंते कुर्वंति तत्रहेतवः दंभाहंकाराभ्यांसंयुक्ताःतथाकामोऽभिलाषःरागःआसक्तिःबलमाग्रहः एतैरन्वि ताःसंतः तानासुरनिश्चयान्विद्धीत्युत्तरेणान्वयः ॥५॥ किंचकर्षयंतइतिशरीरस्थंप्रारंभकत्वेनदेहेस्थितंभूतानांपृथिव्यादीनांग्रामंसमूहंकर्षयं

अशास्त्रविहितं घोरं तप्यंते ये तपो जनाः ॥ दंभाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥
कर्षयंतः शरीरस्थं भूतग्राममचेतसः ॥ मांचैवांतःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥
आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ॥ यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥

तःवृथैवोपवासादिभिःकृशंकुर्वंतोऽचेतसोऽविवेकिनः मांचअंतर्यामितया अंतःशरीरस्थंदेहमध्येस्थितं मदाज्ञालंघनेनैवकर्षयंतःसंतएव येतपश्चरंति तानासुरनिश्चयानासुरोऽतिक्रूरोनिश्चयोयेषांतान्विद्धि ॥६॥ आहारादिभेदादपिसात्विकादिभेदंदर्शयितुमाह आहारस्त्वित्यत्या दित्रयोदशभिः सर्वस्यापिजनस्ययआहारोन्नादिःसतुयथायथंत्रिविधःप्रियोभवति तथायज्ञतपोदानानिचत्रिविधानिभवंति तेषांचवक्ष्य माणमिमंभेदंशृणु एतच्चराजसतामसाहारयज्ञादिपरित्यागेनसात्विकाहारयज्ञादिसेवयासत्ववृद्ध्यैयत्नःकर्त्तव्यइत्येतदर्थंकथ्यते ॥ ७ ॥

तत्राहारत्रैविध्यमाह आयुरितित्रिभिः आयुर्जीवितम् सत्वमुत्साहः बलंशक्तिः आरोग्यंरोगराहित्यम् सुखंचित्तप्रसादः प्रीतिरभिरुचिः
आयुरादीनांविवर्द्धनाः विशेषेणवृद्धिकराः तेचरस्यारसवंतःस्निग्धाःस्नेहयुक्ताः स्थिरादेहेसारांशेनचिरकालावस्थायिनःहृद्यादृष्टमात्राएवहृ
दयंगमाःएवंभूताआहाराभक्ष्यभोज्यादयःसात्विकप्रियाः ॥८॥ तथा कट्विति अतिशब्दः कट्वादिषुसप्तस्वपिसंबध्यते अतिकटुर्निंबादिःअत्य
म्लोऽतिलवणोत्युष्णश्चप्रसिद्धः अतितीक्ष्णोमरीचादिःअतिरूक्षःकंगुकोद्रवादिः अतिविदाहीसर्षपादिः अतिकट्वादयआहाराराजसस्येष्टाः

आयुःसत्वबलारोग्यसुखप्रीतिविवर्धनाः ॥ रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्विकप्रियाः
॥ ८ ॥ कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ॥ आहारा राजसस्येष्टा दुःखशोकामयप्रदाः
॥ ९॥ यातयामं गतरसं पूति पर्युषितं च यत् ॥ उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥१०॥
अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते ॥ यष्टव्यमेवेति मनः समाधाय स सात्विकः ॥ ११ ॥

प्रियाः दुःखंतात्कालिकम् हृदयसंतापादिः शोकःपश्चाद्भाविदौर्मनस्यं आमयोरोगःएतान्प्रददतिप्रयच्छंतीतितथा॥९॥तथा यातयाममिति
यातोयामःप्रहरोयस्यपक्वस्योदनादेस्तद्यातयामंशैत्यावस्थांप्राप्तमित्यर्थः गतरसंनिष्पीडितसारम् पूतिदुर्गंधं पर्युषितंदिनांतरपक्वम् उ
च्छिष्टं अन्यभुक्तावशिष्टम् अमेध्यंअभक्ष्यंकलंजादि एवंभूतंभोजनंभोज्यंतामसस्यप्रियम् ॥१०॥ यज्ञोऽपित्रिविधः तत्रसात्विकंयज्ञमाह
अफलाकांक्षिभिरितित्रिभिः फलाकांक्षारहितैःपुरुषैर्विधिनादृष्टःआवश्यकतयाविहितोयोयज्ञइज्यते अनुष्ठीयते ससात्विकोयज्ञः कथ

मिज्यते यष्टव्यमेवेतियज्ञानुष्ठानमेवकार्यंनान्यत्फलंसाधनीयमित्येवंमनःसमाधायएकाग्रंकृत्वेत्यर्थः ॥ ११॥ राजसंयज्ञमाह अभिसंधाये
ति फलमभिसंधायउद्दिश्ययस्त्विज्यते यज्ञःक्रियते दंभार्थंस्वमहत्त्वख्यापनार्थंतंयज्ञंराजसंविद्धि॥ १२॥तामसंयज्ञमाह विधिहीनमिति
विधिहीनं शास्त्रोक्तविधिशून्यम् असृष्टान्नंब्राह्मणादिभ्योनसृष्टंननिष्पादितमन्नंयस्मिंस्तम् मंत्रहीनंयथोक्तदक्षिणारहितंच श्रद्धाशून्यंयज्ञं
तामसंपरिचक्षते कथयंतिशिष्टाः॥ १३॥तपसःसात्विकादिभेदंदर्शयितुंप्रथमंतावच्छारीरादिभेदेनतस्यत्रैविध्यमाह देवद्विजेतित्रिभिःप्रा

अभिसंधाय तु फलं दंभार्थमपि चैव यत्॥ इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥ विधिहीनमसृष्टा
न्नं मंत्रहीनमदक्षिणम्॥श्रद्धाविरहितं यज्ञं तामसं परिचक्षते॥ १३॥ देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्॥ ब्रह्म
चर्यमहिंसा च शारीरं तप उच्यते॥ १४॥अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्॥ स्वाध्यायाभ्यसनं चैव वाङ्म
यं तप उच्यते॥ १५॥मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः॥भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥

ज्ञागुरुव्यतिरिक्ताः अन्येपितत्त्वविदःदेवब्राह्मणादिपूजनंशौचादिकंशारीरंशरीरनिर्वर्त्यंतपउच्यते॥ १४॥ वाचिकंतपआह अनुद्वेगेति उद्वेगं
भयंनकारोतीत्यनुद्वेगकरंवाक्यं सत्यंच श्रोतुःप्रियंच हितंचपरिणामेसुखकरम् स्वाध्यायाभ्यसनंवेदाभ्यासश्चवाङ्मयम् वाचानिर्वर्त्यंतपः
॥ १५॥ मानसंतपआह मनःप्रसादइति मनसःप्रसादःस्वस्थता सौम्यत्वमक्रूरता मौनंमुनेर्भावःमननमित्यर्थः आत्मनोमनसोविनिग्रहः
विषयेभ्यःप्रत्याहारः भावसंशुद्धिः व्यवहारेमायाराहित्यम् इत्येतन्मानसंतपः ॥ १६ ॥ ॥ ॥ ॥

तदेवंशरीरेवाङ्मनोभिर्निर्वर्त्यंत्रिविधंतपोदर्शितं त्रिविधस्यापितपसःसात्विकादिभेदेनत्रैविद्ध्यमाह श्रद्धयेतित्रिभिः त्रिविधमपितपःश्रे
ष्ठयाश्रद्धयाफलाकांक्षाशून्यैर्युक्तैरेकाग्रचित्तैर्नरैस्तप्तंतत्सात्विकंकथयंति १७राजसंतपआह सत्कारेति सत्कारः साधुकारःसाधुरयमितिता
पसइत्यादिवाक्पूजा मानःप्रत्युत्थानाभिवादनादिर्दैहिकीपूजाऽर्थलाभादिःएतदर्थंदंभेनचयत्तपःक्रियते अतएवचलंआनियतंअध्रुवंचक्ष
णिकंयदेवंभूतंतपःतादिहराजसंप्रोक्तम् ॥ १८ ॥ तामसंतपआह मूढेति मूढग्राहेणाविवेककृतेनदुराग्रहेणात्मनःपीडयायत्तपःक्रियते परस्यो

श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः॥अफलाकांक्षिभिर्युक्तैः सात्विकं परिचक्षते॥१७॥सत्कारमानपूजार्थं तपो दंभेन
चैव यत्॥क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम्॥१८॥मूढग्राहेणात्मनो यत्पीडया क्रियते तपः॥परस्योत्सादनार्थं वा
तत्तामसमुदाहृतम्॥१९॥दातव्यमिति यद्दानं दीयतेऽनुपकारिणे॥देशे काले च पात्रे च तद्दानं सात्विकं स्मृतम्॥२०॥

त्सादनार्थंवाऽन्यस्यविनाशार्थंआभिचाररूपं तत्तामसमुदाहृतम् कथितम् ॥१९॥ पूर्वंप्रतिज्ञातमेवदानस्यत्रैविध्यमाह दातव्यमिति दात
व्यमित्येवंनिश्चयेनयद्दानंदीयते अनुपकारिणेप्रत्युपकारासमर्थाय देशेकुरुक्षेत्रादौ कालेग्रहणादौ पात्रेचेतिदेशकालादिसाहचर्या
त्सप्तमीप्रयुक्ता पात्रभूताय तपःश्रुतादिसंपन्नायब्राह्मणायेत्यर्थः यद्वा पात्रइतिचतुर्थ्यैवैषापात्रेइतितृजंतंरक्षकायेत्यर्थःसहिसर्वस्मादापद्र
णाद्दातारंपातीति यदेवंभूतंदानंतत्सात्विकम् ॥ २० ॥ ॥ ॥ ॥ ॥ ॥ ॥

राजसंदानमाह यत्त्विति कालांतरेऽयंमांप्रत्युपकारंकरिष्यतीत्येवमर्थम् फलंवास्वर्गादिकमुद्दिश्ययत्पुनर्दानंदीयते परिक्लिष्टंचित्तक्लेश
युक्तंयथाभवत्येवंभूतं तद्दानंराजसमुदाहृतंकथितम् ॥ २१ ॥ तामसंदानमाह अदेशेति अदेशेअशुचिस्थाने अकालेआशौचसमये अपात्रे
भ्योविटनटनर्तकादिभ्योयद्दानंदीयते देशकालपात्रसंपत्तावपि असत्कृतंपादप्रक्षालनादिसत्काररशून्यम् अवज्ञातंतिरस्कारयुक्तं एवंभूतं
दानंतामसमुदाहृतम् ॥ २२ ॥ ननुचैवंविचार्यमाणेसर्वमपियज्ञतपोदानादिराजसतामसप्रायमेवेतिव्यर्थोयज्ञादिप्रयासइत्याशंक्यतथावि
धस्यापिसात्विकत्वापादानप्रकारंदर्शयितुमाह ओमिति ॐतत्सदित्येवंत्रिविधोब्रह्मणः परमात्मनोनिर्देशोनामव्यपदेशः स्मृतः शिष्टैः त

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ॥ दीयते च परिक्लिष्टं तद्राजसमुदाहृतं ॥ २१ ॥ अदे
शकाले यद्दानमपात्रेभ्यश्च दीयते ॥ असत्कृतमवज्ञानं तत्तामसमुदाहृतं ॥ २२ ॥ ॐतत्स
दिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ॥ ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥

त्रतावदोमितित्रिवृद्ब्रह्मेत्यादिश्रुतिप्रसिद्धेरोमितिब्रह्मणोनामजगत्कारणत्वेनातिप्रसिद्धत्वात् अविदुषांपरोक्षत्वाच्चतच्छब्दोऽपिब्रह्मणो
नाम परमार्थसत्त्वसाधुत्वप्रशस्तत्वादिभिःसच्छब्दोब्रह्मणोनाम सदेवसौम्येदमग्रआसीदित्यादिश्रुतेःअयंत्रिविधोऽपिनामनिर्देशोविगुण
मपिसगुणीकर्तुंसमर्थइत्याशयेनस्तौति तेनत्रिविधेनब्रह्मणोनिर्देशेनब्राह्मणाश्चवेदाश्चयज्ञाश्चपूर्वंसृष्ट्यादौविहिताः विधात्रानिर्मिताः सगु
णीकृतावायद्वा यस्यायंत्रिविधोनिर्देशस्तेनपरमात्मनाब्राह्मणादयःपवित्रतमाःसृष्टाःतस्मात्तस्यायंत्रिविधोनिर्देशोऽतिप्रशस्तइत्यर्थः २३

इदानींप्रत्येकमोंकारादीनांप्राशस्त्यंदर्शयिष्यन्नोंकारस्यतदेवाह तस्मादिति यस्मादेवंब्रह्मणोनिर्देशस्तस्मादोमित्युदाहृत्यउच्चार्यब्र
तावेदवादिनांयज्ञाद्याःशास्त्रोक्ताःक्रियाःसततंसर्वदा अंगवैकल्येऽपिप्रकर्षेणवर्त्तंते सगुणाभवंतीत्यर्थः॥२४॥किंच द्वितीयंनामप्रस्तौति तदि
ति उदाहृत्येतिपूर्वस्यानुषंगः तदित्युदाहृत्यशुद्धचित्तैर्मोक्षकांक्षिभिःपुरुषैःफलाभिसंधिमकृत्वायज्ञाद्याःक्रियाःक्रियंते अतश्चित्तशोधन
द्वारेणफलसंकल्पत्याजनेनमुमुक्षुत्वसंपादकत्वात्तच्छब्दानिर्देशःप्रशस्तइत्यर्थः॥३५॥सच्छब्दस्यप्राशस्त्यमाह सद्भावइतिद्वाभ्याम् सद्भा

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः॥ प्रवर्तंते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥
तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः॥ दानक्रियाश्च विविधाः क्रियंते मोक्षकांक्षिभिः॥ २५ ॥
सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते॥ प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते॥ कर्म चैव तदर्थीयं सदित्येवाभिधीयते॥ २७ ॥

वेअस्तित्वे देवदत्तस्यपुत्रादिकमस्तीत्यस्मिन्नर्थे साधुभावेचसाधुत्वे देवदत्तस्यपुत्रादिश्रेष्ठमित्यस्मिन्नर्थेसदित्येतत्पदंप्रयुज्यते प्रशस्ते
मांगलिकेविवाहादिकर्मणिचसदिदंकर्मेतिसच्छब्दोयुज्यतेप्रयुज्यतेसंगच्छतइतिवा॥ २६ ॥ किंच यज्ञइतियज्ञादिषुयास्थितिस्तात्पर्येणा
वस्थानंतदपिसदित्युच्यते यस्यचेदंनामत्रयंसएवपरमात्मा अर्थःफलंयस्यतत्तदर्थंकर्मपूजोपहारगृहांगणपरिमार्जनोपलेपरंगमांगलिकादि
क्रिया तत्सिद्धयेयदन्यत्कर्मक्रियतेउद्यानशालिक्षेत्रधनार्जनादिविषयं तत्कर्मतदर्थीयं तच्चातिव्यवहितमपिसदित्येवाभिधीयते यस्मा

द्वमतिप्रशस्तमेतन्नामत्रयंतस्मादेतत्सर्वकर्मसाद्गुण्यार्थंकीर्त्तयेदितितात्पर्यार्थः अत्रचार्थवादानुपपत्त्याविधिःकल्प्यते विधेयंस्तूयतेव
स्त्वितिन्यायात् अपरेतु प्रवर्त्ततेविधानोक्ताःक्रियंतेमोक्षकांक्षिभिरित्यादिवर्त्तमानोपदेशः समिधोयजतीत्यादिवद्विधितयापरिणमनीय
इत्याहुः तत्तुसद्भावेसाधुभावेचेत्यादिषुप्राप्तार्थत्वान्नसंगच्छतइतिपूर्वोक्तक्रमेणविधिकल्पनैवज्यायसी ॥२७॥ इदानींसर्वकर्मसुश्रद्धयैवप्रवृ
त्त्यर्थमश्रद्धाकृतंसर्वंनिंदति अश्रद्धयेति अश्रद्धया हुतंहवनं दत्तंदानं तप्तंनिर्वर्त्तितंतपः यच्चान्यदपिकृतंकर्म तत्सर्वंअसदित्युच्यते यतस्त
त्प्रेत्यलोकांतरेनफलतिविगुणत्वान्नोइहनचास्मिन्लोकेफलतिअयशस्करत्वात्॥२८॥रजस्तमोमयींत्यक्त्वाश्रद्धांसत्वमयींश्रितः तत्त्वज्ञा

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ॥ असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥२८॥इति
श्रीमद्भगव० श्रद्धात्रययोगो नाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ अर्जुन उवाच ॥ संन्यासस्य
महाबाहो तत्त्वमिच्छामि वेदितुम् ॥ त्यागस्य च हृषीकेश पृथक्केशिनिषदन ॥ १ ॥ ॥ ॥ ॥

नेऽधिकारीस्यादितिसप्तदशेस्थितम्॥१॥इतिसुबोधिन्यांटीकायांसप्तदशोऽध्यायः॥१७॥न्यासत्यागविभागेनसर्वगीतार्थसंग्रहम् स्पष्टमष्टा
दशेप्राहपरमार्थविनिर्णये अत्रचसर्वकर्माणिमनसासंन्यस्यास्तेसुखंवशी संन्यासयोगयुक्तात्मेत्यादिषुकर्मसंन्यासउपदिष्टः तथा त्य
क्त्वाकर्मफलासंगंनित्यतृप्तोनिराश्रयः सर्वकर्मफलत्यागंततःकुरुयतात्मवानित्यादिषुचफलमात्रत्यागेनकर्मानुष्ठानमुपदिष्टम् नचपर
स्परंविरुद्धंसर्वज्ञःपरमकारुणिकोभगवानुपदिशेत् अतःकर्मसंन्यासस्यतदनुष्ठानस्यचाविरोधप्रकारंबुभुत्सुरर्जुनउवाच संन्यासस्येति

भोहृषीकेशसर्वेंद्रियनियामक हेकेशिनिषूदन केशिनाम्नोहिमहतोहयाकृतेर्दैत्यस्ययुद्धेमुखंव्यादायभक्षयितुमागच्छतोऽत्यंतंव्यात्तेमुखे
वामबाहुंप्रवेश्यतत्क्षणमेवविवृद्धेनतेनैवबाहुनाकर्कटिकाफलवत्तंविदार्यनिषूदितवान् अतएवहेमहाबाहोइतिसंबोधनं संन्यासस्यत्या
गस्यचतत्त्वंपृथक्विवेकेनवेदितुमिच्छामि ॥१॥ तत्रोत्तरंश्रीभगवानुवाच काम्यानामिति पुत्रकामोयजेतस्वर्गकामोयजेतेत्येवमादिकामो
पबंधेनविहितानांकाम्यानांकर्मणांन्यासंपरित्यागंसंन्यासंकवयोविदुःसम्यक्फलैःसहसर्वकर्मणामपिन्यासंसंन्यासंपंडिताविदुः जानंती
त्यर्थः सर्वेषांकाम्यानांनित्यनैमित्तिकानांचकर्मणांफलमात्रत्यागंप्राहुस्त्यागंविचक्षणानिपुणाः नतुस्वरूपतः कर्मत्यागम् ननुनित्यनैमि
त्तिकानांफलाश्रवणादविद्यमानस्यफलस्यकथंत्यागःस्यात नहिवंध्यायाःपुत्रत्यागःसंभवति उच्यते यद्यपिस्वर्गकामःपशुकामइत्यादि

श्रीभगवानुवाच ॥ ॥ काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ॥सर्व कर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः॥२॥

वदहरहःसंध्यामुपासीत यावज्जीवमग्निहोत्रंजुहोतीत्यादिषुफलविशेषोनश्रूयतेतथाप्यपुरुषार्थेव्यापारेप्रेक्षावंतंप्रवर्त्तयितुमशक्नुवन्विवि
धिर्विश्वजितायजेतेत्यादिष्विवसामान्यतःकिमपिफलमाक्षिपत्येव नचातीवगुरुमतः श्रद्धयास्वसिद्धिरेवंविधेःप्रयोजनमितिमंतव्यं पुरु
षप्रवृत्त्यनुपपत्तेर्दुष्परिहरत्वात् श्रूयतेचनित्यादिष्वपिफलम् सर्वएतेपुण्यलोकाभवंतीतिकर्मणापितृलोकइतिधर्मेणपापमपनुदतीत्येव
मादिषु तस्माद्युक्तमुक्तम् सर्वकर्मफलत्यागंप्राहुस्त्यागंविचक्षणाइति ननुफलत्यागेनपुनरपिनिष्फलेषुकर्मस्यप्रवृत्तिरेवस्यात्तन्न सर्वेषा
मपिकर्मणांसंयोगपृथक्त्वेनविविदिषार्थंतयाविनियोगात् तथाचश्रुतिः तमेतमात्मानंवेदानुवचनेनब्राह्मणाविविदिषंति यज्ञेनदानेनतप

सानाशकेनेति अतःप्रतिपदोक्तंसर्वंफलंबंधकत्वेनत्यक्त्वाविविदिषार्थंसर्वकर्मानुष्ठानंघटतएवविविदिषाचानित्यानित्यवस्तुविवेकेननिवृ
त्तदेहाद्यभिमानतयाबुद्धेः प्रत्यक्प्रवणता तावत्पर्यंतंचसत्त्वशुद्ध्यर्थंज्ञानाविरुद्धंयथोचितमावश्यकंकर्मकुर्वतस्तत्फलत्यागएवकर्मत्यागो
नाम नस्वरूपेण तथाचश्रुतिः कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमाइति ततःपरंतुसर्वकर्मनिवृत्तिःस्वतएवभवति तदुक्तंनैष्कर्म्यसिद्धौ
प्रत्यक्प्रवणताबुद्धेःकर्माण्युत्पाद्यशुद्धितःकृतार्थान्यस्तमायांतिप्रावृडंतेघनाइवेति उक्तंचभगवता यस्त्वात्मरतिरेवस्यादात्मतृप्तश्चमानवः
आत्मन्येवचसंतुष्टस्तस्यकार्यंनविद्यतइति वसिष्ठेनचोक्तं नकर्माणित्यजेद्योगीकर्मभिस्त्यज्यतेह्यसौ कर्मणोमूलभूतस्यसंकल्पस्यैवनाश
तइति ज्ञाननिष्ठाविक्षेपकत्वमालक्ष्यत्यजेद्वा तदुक्तंभागवते तावत्कर्माणिकुर्वीतननिर्विद्येतयावता मत्कथाश्रवणादौवाश्रद्धायावन्नजाय

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ॥ यज्ञदानतपः कर्म न त्याज्यमिति चापरे ॥ ३ ॥

ते ज्ञाननिष्ठोविरक्तोवामद्भक्तोवानपेक्षकः सलिंगानाश्रमांस्त्यक्त्वाचरेदविधिगोचरइत्यादि अलमतिप्रसंगेन प्रकृतमनुसरामः २ अविदुषः
फलत्यागमात्रमेवत्यागशब्दार्थोनकर्मत्यागइत्येतदेवमतांतरनिरासेनदृढीकर्तुंमतभेदंदर्शयति त्याज्यमिति दोषवद्धिंसादिदोषवत्त्वेनबं
धकमितिहेतोःसर्वमपिकर्मत्याज्यमित्येकेसांख्याःप्राहुर्मनीषिणइत्यस्यायंभावःनहिंस्यात्सर्वभूतानीतिनिषेधःपुरुषस्यानर्थहेतुर्हिंसेत्या
हअग्नीषोमीयंपशुमालभेतेत्यादिप्राकरणिकोविधिस्तुहिंसायाःक्रतूपकारकत्वमाह अतोभिन्नविषयत्वेनसामान्यविशेषन्यायागोचरत्वा
द्द्रव्यसाध्येषुसर्वेष्वपिकर्मसुहिंसादेःसंभवात्सर्वमपिकर्मत्याज्यमेवेति तदुक्तम् दृष्टवदानुश्रविकःसह्यविशुद्धिक्षयातिशययुक्तः अस्यार्थः

उपायोज्योतिष्टोमादिःसोऽपिदृष्टोपायवत् गुरुपाठादनुश्रूयतइत्यनुश्रवोवेदस्तद्बोधितः तत्राविशुद्धिर्हिंसातयाक्षयोविनाशः अग्निहोत्र
ज्योतिष्टोमादिजन्यस्वर्गेषुतारतम्यंचवर्त्तते परोत्कर्षस्तुसर्वान्दुःखीकरोति अपरेतुमीमांसकाः यज्ञादिकंकर्मनत्याज्यमितिप्राहुः अयं
भावःक्रत्वर्थापिसतीयंहिंसापुरुषेणैवकर्तव्यासाचान्योद्देशेनापिकृतापुरुषस्यप्रत्यवायहेतुरेव तथाहिविधिर्विधेयस्यतदुद्देशेनानुष्ठानंविध
त्तेतादर्थ्यलक्षणत्वाच्छेषत्वस्य नत्वेवंनिषेधोनिषेध्यस्यतादर्थ्यमपेक्षते प्राप्तिमात्रोपेक्षितत्वात् अन्यथाज्ञानप्रमादादिकृतेदोषाभावप्रसं
गात्तदेवंसमानविषयत्वेनसामान्यशास्त्रस्यविशेषेणवाधान्नास्तिदोषवत्त्वमतोनित्यंयज्ञादिकर्मनत्याज्यमिति ॥३॥ एवंमतभेदमुपन्यस्य

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ॥ त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४ ॥
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ॥ यज्ञो दानं तपश्चैव पावनानि मनीषिणां ॥ ५ ॥
एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च ॥ कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमं ॥ ६॥

स्वमतंकथयितुमाह निश्चयमिति तत्रैवंविप्रतिपन्नेत्यागेनिश्चयंमेवचनाच्छृणु त्यागस्यलोकप्रसिद्धत्वात्किमत्रश्रोतव्यमितिमावमंस्थाइ
त्याह हेपुरुषव्याघ्रपुरुषश्रेष्ठ त्यागोऽयंदुर्बोधः हियस्मादयंकर्मत्यागस्तत्त्वविद्भिस्तामसादिभेदेनत्रिविधःसम्यग्विवेकेनप्रकीर्त्तितः त्रैविध्यं
चनियतस्यतुसंन्यासःकर्मणइत्यादिनावक्ष्यति ॥४॥ प्रथमंतावन्निश्चयमाह यज्ञदानेतिद्वाभ्यां मनीषिणांविवेकिनांपावनानिचित्तशुद्धिक
राणि॥५॥येनप्रकारेणकृतान्येतानिपावनानिभवंतितंप्रकारंदर्शयन्नाह एतानीति यानियज्ञादिकर्माणिमयापावनानीत्युक्तम् एतान्येवक

र्तव्यानि कथं संगंकर्तृत्वाभिनिवेशंत्यक्त्वाकेवलमीश्वराराधनतयाकर्तव्यानिफलानिचत्यक्त्वाकर्तव्यानीतिचनिश्चितंमेमतम् अतए
वोत्तमम्॥६॥प्रतिज्ञातंत्यागस्यत्रैविध्यमिदानींदर्शयति नियतस्येतित्रिभिः काम्यस्यकर्मणोबंधकत्वात्संन्यासोयुक्तः नियतस्यतुनित्य
स्यपुनःकर्मणःसंन्यासस्त्यागोनोपपद्यतेसत्वशुद्धिद्वारामोक्षहेतुत्वात् अतस्तस्यपरित्यागः उपादेयेऽपित्याज्यमित्येवंलक्षणान्मोहादेव
भवेत् सचमोहस्यतामसत्वात्तामसःपरिकीर्तितः ॥ ७ ॥ राजसंत्यागमाह दुःखमिति यःकर्त्तात्मबोधंविनाकेवलंदुःखमित्येवंज्ञात्वाशरीरा

नियतस्य तु संन्यासः कर्मणो नोपपद्यते ॥ मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत्॥ स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥
कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ॥ संगं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥
न द्वेष्ट्यकुशलं कर्म कुशलेनानुषज्जते ॥ त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥

यासभयान्नित्यंकर्मत्यजेदितियत्ताद्दशस्त्यागोराजसः दुःखस्यराजसत्वात् अतस्तंराजसंत्यागंकृत्वा राजसःपुरुषस्त्यागस्यफलंज्ञाननि
ष्ठालक्षणंनैवलभतइत्यर्थः ॥८॥ सात्विकंत्यागमाह कार्यमिति कार्यमित्येवंबुद्ध्यानियतमवश्यकर्त्तव्यतयाविहितंकर्म संगंफलंचत्यक्त्वा
क्रियतइतियत्सताद्दशस्त्यागः सात्विकोमतः ॥९॥ एवंभूतसात्विकत्यागपरिनिष्ठितस्यलक्षणमाह नद्वेष्टीति सत्वसमाविष्टः सत्वेनसं
व्याप्तः सात्विकत्यागीअकुशलंदुःखावहंशिशिरेप्रातःस्नानादिकंकर्मनद्वेष्टि कुशलेचसुखकरेकर्मणिनिदाघेमाध्याह्नस्नानादौनानुषज्जते

प्रीतिंनकरोति तत्रहेतुः मेधावीस्थिरबुद्धिः यत्रपरपरिभवादिमहदपिदुःखंसह्यते स्वर्गादिसुखंचत्यज्यते तत्रकियदेतत्तात्कालिकंसुखंदुः
खंचेत्येवमनुसंधानवानित्यर्थः अतएवछिन्नःसंशयोमिथ्याज्ञानंदैहिकंसुखदुःखयोरुपादित्सापरिजिहीर्षालक्षणंयस्यसः॥१०॥ नन्वेवंभू
तात्कर्मफलत्यागाद्वरंसर्वकर्मत्यागस्तथासतिकर्मविक्षेपाभावेनज्ञाननिष्ठासुखंसंपद्यतेतत्राह नेति देहभृतादेहात्माभिमानवता निःशेषे
णसर्वाणिकर्माणित्यक्तुंनहिशक्यं तदुक्तं नहिकश्चित्क्षणमपिजातुतिष्ठत्यकर्मकृदित्यादिना तस्माद्यस्तुकर्माणिकुर्वन्नेवकर्मफलत्यागीस
एवमुख्यत्यागीत्यभिधीयते॥११॥एवंभूतस्यकर्मफलत्यागस्यफलमाह अनिष्टमिति अनिष्टंनारकित्वं इष्टंदेवत्वं मिश्रंमनुष्यत्वं एवंत्रिवि

नहि देहभृता शक्यं त्यक्तुंकर्माण्यशेषतः ॥ यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥
अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलं ॥ भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित्॥१२॥
पंचैतानि महाबाहो कारणानि निबोध मे ॥ सांख्ये कृतांते प्रोक्तानि सिद्धये सर्वकर्मणाम्॥ १३॥

धंपापस्यपुण्यस्यचोभयमिश्रस्यचकर्मणोयत्फलंप्रसिद्धंतत्सर्वमत्यागिनांसकामानामेवप्रेत्यपरत्रभवाति तेषांत्रिविधकर्मसंभवत्वात् न
तुसंन्यासिनांक्वचिदपिभवति संन्यासिशब्देनात्रफलत्यागसाम्यात्प्रकृताःकर्मफलत्यागिनोऽपिगृह्यंते अनाश्रितःकर्मफलंकार्यंकर्मकरो
तियःससंन्यासीचयोगीचेत्येवमादौकर्मफलत्यागिषुसंन्यासिशब्दप्रयोगदर्शनात्तेषांसात्विकानांपापासंभवात् ईश्वरार्पणेनचपुण्यफल
स्यत्यक्तत्वात् त्रिविधमपिकर्मफलंनभवतीत्यर्थः १२ ननुकर्मकुर्वतःकर्मफलंकथंनभवेदित्याशंक्यसंगत्यागिनोनिरहंकारस्यसतःकर्मफले

नलेपोनास्तीत्युपपादयितुमाह पंचैतानीतिपंचभिः सर्वकर्मणांसिद्धयेनिष्पत्तयेइमानिवक्ष्यमाणानिपंचकारणानिमेवचनान्निबोधजा
नीहि आत्मनःकर्तृत्वाभिमाननिवृत्त्यर्थमवश्यमेतानिज्ञातव्यानीत्येवंतेषांस्तुत्यर्थमाह सांख्यइति सम्यक्ख्यायतेज्ञायतेपरमात्मानेतिसांख्यं तत्त्वज्ञानंतस्मिन् कृतंकर्मतस्यांतःसमाप्तिरस्मिन्निति कृतांतस्तस्मिन्वेदांतसिद्धांतइत्यर्थः यद्वा संख्यायंतेगण्यंतेतत्त्वान्यस्मिन्निति सांख्यं कृतःअंतोनिर्णयोयस्मिन्निति कृतांतंसांख्यशास्त्रमेवतस्मिन्प्रोक्तानिअतःसम्यग्निबोधेत्यर्थः १३ तान्येवाह अधिष्ठानमिति
अधिष्ठानंशरीरं कर्त्ताचिज्जडग्रंथिरहंकारः पृथग्विधमनेकप्रकारंकरणंचक्षुःश्रोत्रादि विविधाःकार्यतःस्वरूपतश्चपृथग्भूताश्चेष्टाःप्राणापाना

अधिष्ठानं तथा कर्त्ता करणं च पृथग्विधम् ॥ विविधाश्च पृथक्चेष्टा दैवं चैवात्र पंचमम् ॥ १४ ॥
शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ॥ न्याय्यं वा विपरीतं वा पंचैते तस्य हेतवः ॥ १५ ॥
तत्रैवं सति कर्त्तारमात्मानं केवलं तु यः ॥ पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥

दीनांव्यापाराः अत्रचैतेष्वेवपंचमंदैवंचकारकंचक्षुराद्यनुग्राहकमादित्यादिसर्वप्रेरकोऽतर्यामीवा॥ १४ एतेषामेवसर्वकर्महेतुत्वमाह शरीरेति
यथोक्तैःपंचभिः प्रारभ्यमाणंकर्मत्रिष्वेवांतर्भाव्यम् शरीरवाङ्मनोभिरित्युक्तंशारीरंवाचिकंमानसंचत्रिविधंकर्मेतिप्रसिद्धेः शरीरादिभिर्यद्यत्कर्मधर्म्यंवाधर्म्यंवाकरोतिनरस्तस्यसर्वस्यकर्मणएतेपंचहेतवः ॥१५॥ततःकिमतआह तत्रेति तत्रसर्वस्मिन्कर्मणिएतेपंचहेतवइत्येवं
सतिकेवलंनिरुपाधिकमसंगमात्मानंतुयःकर्त्तारंपश्यंति शास्त्राचार्योपदेशत्यागेनासंस्कृतबुद्धित्वाद्दुर्मतिरसौसम्यक्नपश्यति ॥ १६ ॥

कस्तर्हिसुमतिः यस्यकर्मलेपोनास्तीत्युक्तमित्यपेक्षायामाह यस्येति अहमिति कृतोऽहंकर्तेत्येवंभूताभावोऽभिप्रायोयस्यनास्ति यद्वा अ
हंकृतोऽहंकारस्यभावःकर्तृत्वाभिनिवेशोयस्यनास्ति शरीरादीनामेवकर्मकर्तृत्वालोचनादित्यर्थः अतएवयस्यबुद्धिर्नलिप्यते इष्टानिष्ट
बुद्ध्याकर्मसुनसज्जते सएवंभूतोदेहादिव्यतिरिक्तात्मदर्शीइमाँल्लोकान्सर्वानपिप्राणिनो लोकदृष्ट्याहत्वापिविविक्ततयास्वदृष्ट्यानहंति
नचतत्फलैर्निबद्ध्यतेबंधनंनप्राप्नोति किंपुनःसत्वशुद्धिद्वारापरोक्षज्ञानोत्पत्तिहेतुभिःकर्मभिस्तस्यबंधशंकेत्यर्थः तदुक्तम् ब्रह्मण्याधायक
र्माणिसंगंत्यक्त्वाकरोतियः लिप्यतेनसपापेनेति ॥ १७ ॥ हत्वापिनहंतिननिबद्ध्यतइत्येतदेवोपपादयितुंकर्मचोदनायाःकर्माश्रयस्यच

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ॥ हत्वापि स इमाँल्लोकान्न हंति न निबध्यते ॥ १७ ॥
ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ॥ करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥

कर्मफलादीनांचत्रिगुणात्मकत्वान्निर्गुणस्यात्मनस्तत्संबंधोनास्तीत्यभिप्रायेणकर्मचोदनांकर्माश्रयंचाह ज्ञानमिति ज्ञानमिष्टसाधनमे
तदितिबोधः ज्ञेयमिष्टसाधनंकर्म परिज्ञाताएवंभूतज्ञानाश्रयः एवंत्रिविधाकर्मचोदना चोद्यतेप्रवर्त्यतेऽनयेतिचोदना ज्ञानादित्रितयं
कर्मप्रवृत्तिहेतुरित्यर्थः यद्वा चोदनेतिविधिरुच्यते तदुक्तंभट्टैः चोदनाचोपदेशश्चविधिश्चैकार्थवाचिनइति ततश्चायमर्थः उक्तलक्षणंत्रिगु
णात्मकंज्ञानादित्रयमवलंब्यकर्मविधिःप्रवर्ततइति तदुक्तम् त्रैगुण्यविषयावेदाइति तथाचकरणंसाधकतमं कर्मचकर्तुरीप्सिततमम् क
र्ताक्रियानिर्वर्तकः कर्मसंगृह्यतेऽस्मिन्नितिकर्मसंग्रहः करणादित्रिविधंकारकंक्रियाश्रयइत्यर्थः संप्रदानादिकारकत्रयंतुपरंपरयाक्रियानि

र्वर्तकमेवकेवलंनतुसाक्षात्क्रियायाआश्रयः अतःकरणादित्रितयमेवक्रियाश्रयइत्युक्तम् ॥ १८ ॥ ततःकिमतआह ज्ञानमिति गुणाःसम्य क्कार्यभेदेनख्यायंतेप्रतिपाद्यंतेऽस्मिन्नितिगुणसंख्यानंसांख्यशास्त्रं तस्मिन् ज्ञानंचकर्मचकर्ताच प्रत्येकंसत्वादिगुणभेदेनत्रिधैवोच्यते तान्यपिज्ञानादीनिवक्ष्यमाणानियथावच्छृणु त्रिधैवेत्येवकारोगुणत्रयोपाधिव्यतिरेकेणात्मनःस्वतःकर्तृत्वादिप्रतिषेधार्थः चतुर्दशेऽध्यायेत त्रसत्वंनिर्मलत्वादित्यादिनागुणानांबंधकत्वप्रकारोनिरूपितः सप्तदशेऽध्याये यजंयेसात्विकादेवानित्यादिनागुणकृतात्रिविधस्वभावनि रूपणेनरजस्तमःस्वभावंपरित्यज्यसात्विकाहारादिसेवयासात्विकस्वभावःसंपादनीयइत्युक्तम् इहतु क्रियाकारकफलादीनामात्मसंबं

ज्ञानं कर्म च कर्त्ता च त्रिधैव गुणभेदतः ॥ प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥
सर्वभूतेषु येनैकं भावमव्ययमीक्षते ॥ अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकं ॥ २० ॥
पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ॥ वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसं ॥ २१ ॥

धोनास्तीतिदर्शयितुंसर्वेषांत्रिगुणात्मकत्वमुच्यतइतिविशेषोज्ञातव्यः ॥ १९ ॥ तत्रज्ञानस्यसात्विकादित्रैविध्यमाह सर्वभूतेष्वितित्रि भिःसर्वेषुभूतेषुब्रह्मादिस्थावरांतेषुविभक्तेषुपरस्परंव्यावृत्तेषुअविभक्तमनुस्यूतंएकमव्ययंनिर्विकारंभावंपरमात्मतत्त्वंयेनज्ञानेनेक्षते आ लोचयति तज्ज्ञानंसात्विकंविद्धि ॥ २० ॥ राजसंज्ञानमाह पृथक्त्वेनेति पृथक्त्वेनतुयज्ज्ञानं इत्यस्यैवविवरणं सर्वेषुभूतेषुदेहेषुनानाभा वान्वस्तुतएवानेकान्क्षेत्रज्ञान्पृथग्विधान्सुखीत्यादिरूपेणविलक्षणान्येनज्ञानेनवेत्तितज्ज्ञानंराजसंविद्धि ॥ २१ ॥ ॥ ॥

तामसंज्ञानमाह यत्त्विति एकस्मिन्कार्ये देहे प्रतिमादौ वा कृत्स्नवत्परिपूर्णवत्सक्तमेतावानेवात्माईश्वरोवेत्यभिनिवेशयुक्तम् अहेतुकंनिरु पपत्तिकम् अतत्त्वार्थवत् परमार्थावलंबनशून्यम् अतएवाल्पंतुच्छम् अल्पविषयत्वादल्पफलत्वाच्च यदेवंभूतंज्ञानंतत्तामसमुदाहृतम् ॥ २२ ॥ इदानींत्रिविधंकर्माह नियतमितित्रिभिः नियतंनित्यतयाविहितं संगरहितमभिनिवेशशून्यं अरागद्वेषतः पुत्रादिप्रीत्यावाशत्रु द्वेषेणवा यत्कृतंनभवति फलंप्राप्तुमिच्छतीतिफलप्रेप्सुस्तद्विलक्षणेननिष्कामेणकर्त्रायत्कृतंकर्मतत्सात्विकमुच्यते २३ राजसंकर्माह य

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ॥ अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥<br>
नियतं संगरहितमरागद्वेषतः कृतम् ॥ अफलप्रेप्सुना कर्म यत्तत्सात्विकमुच्यते ॥ २३ ॥<br>
यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ॥ क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥२४॥<br>
अनुबंधं क्षयं हिंसामनवेक्ष्य च पौरुषम् ॥ मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥

त्त्विति यत्तुकर्म कामेप्सुनाफलंप्राप्तुमिच्छता साहंकारेणवामत्समःकोऽन्यःश्रोत्रियोऽस्तीत्येवंनिरूढाहंकारयुक्तेनचक्रियते यच्चपुनर्बहुला यासमतिक्लेशयुक्तं तत्कर्मराजसमुदाहृतम् ॥ २५ ॥ तामसंकर्माह अनुबंधमिति अनुबध्यतेइत्यनुबंधःपश्चाद्भाविशुभाशुभम् क्षयंवित्तव्य यं हिंसांपरपीडांच पौरुषंस्वसामर्थ्यंवा अनवेक्ष्यअपर्यालोच्य केवलंमोहादेवयत्कर्मारभ्यतेतत्तामसमुच्यते ॥ २५ ॥ ॥ ॥

कर्त्तारंत्रिविधमाह मुक्तसंगइतितिभिः मुक्तसंगस्त्यक्ताभिनिवेशः अनहंवादीगर्वोक्तिरहितः धृतिर्धैर्यम् उत्साहउद्यमः ताभ्यांसमन्वितो युक्तःआरब्धस्यकर्मणःसिद्धावसिद्धौचानिर्विकारोहर्षविषादशून्यःएवंभूतःकर्तासात्विकउच्यते॥२६॥ राजसंकर्तारमाह रागीति रागीपुत्रा दिप्रीतिमान्कर्मफलप्रेप्सुःकर्मफलकामी लुब्धःपरस्वाभिलाषी हिंसात्मकोमारकस्वभावःअशुचिर्विहितशौचशून्यःलाभालाभयोर्हर्षशो काभ्यामन्वितःकर्त्ताराजसः॥२७॥तामसंकर्त्तारमाह अयुक्तइति अयुक्तोऽनवहितः प्राकृतोविवेकशून्यःस्तब्धोऽनम्रः शठःशक्तिगूहनकारी

मुक्तसंगोऽनहंवादी धृत्युत्साहसमन्वितः ॥ सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्विक उच्यते ॥ २६ ॥
रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ॥ हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥
अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ॥ विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ॥ प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९ ॥
प्रवृत्तिं च निवृत्तिंच कार्याकार्ये भयाभये ॥ बंधं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥

नैष्कृतिकःपरावमानी अलसोऽनुद्यमशीलः विषादीशोकशीलः यदद्यवाश्वोवाकार्यंतन्मासेनापिनसंपादयतियःसदीर्घसूत्री एवंभूतःकर्त्ता तामसः कर्तृत्रैविध्येनैवज्ञातुरपित्रैविध्यमुक्तम् कर्मत्रैविध्येनचज्ञेयस्यापित्रैविध्यमुक्तंवेदितव्यं बुद्धेस्त्रैविध्येनकरणस्याप्युक्तंभविष्य ति॥२८॥इदानींबुद्धेर्धृतेश्चापित्रैविध्यंप्रतिजानीतेबुद्धेरिति स्पष्टार्थः॥२९॥तत्रबुद्धेस्त्रैविध्यमाह प्रवृत्तिंचेतितिभिः प्रवृत्तिंचधर्मे निवृत्तिंचा

धर्मं यस्मिन्देशेकालेचयत्कार्यमकार्यंच भयाभयेकार्याकार्यनिमित्तावर्थानर्थौ कथंबंधःकथंवामोक्षइतियाबुद्धिरंतःकरणंवेत्ति सासात्वि
की ययापुमान्वेत्तीतिवक्तव्येकरणेकर्तृत्वोपचारःकाष्ठानिपचंतीतिवत् ॥ ३० ॥ राजसींबुद्धिमाह ययेति अयथावत्संदेहास्पदत्वेनेत्यर्थःस्प
ष्टमन्यत् ॥ ३१ ॥ तामसींबुद्धिमाह अधर्ममिति विपरीतग्राहिणीबुद्धिस्तामसीत्यर्थः बुद्धिरंतःकरणंपूर्वोक्तम् ज्ञानंतुतद्वृत्तिःधृतिरपितद्वृत्ति
रेव यद्वा अंतःकरणस्यधर्मिणोबुद्धिरप्यध्यवसायलक्षणावृत्तिरेव इच्छाद्वेषादीनांतद्वृत्तीनांबहुत्वेऽपिधर्माधर्मभयाभयसाधनत्वेनप्राधा

यया धर्ममधर्मं च कार्यं चाकार्यमेव च ॥ अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥
अधर्मं धर्ममिति या मन्यते तमसावृता ॥ सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥
धृत्या यया धारयते मनः प्राणेंद्रियक्रियाः॥योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्विकी॥३३॥
यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ॥ प्रसंगेन फलाकांक्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥

न्यादेतासांत्रैविध्यमुक्तं उपलक्षणंचैतदन्यासाम् ॥३२॥ इदानींधृतेस्त्रैविध्यमाह धृत्येतित्रिभिः योगेनचित्तैकाग्र्येणहेतुनाव्यभिचारिण्या
विषयांतरमधारयंत्याययाधृत्यामनसःप्राणस्येंद्रियाणांचक्रियाधारयतेनियच्छति साधृतिः सात्विकी ॥३३॥ राजसींधृतिमाह ययात्वि
ति ययातुधृत्याधर्मार्थकामान्प्राधान्येनधारयते नविमुंचति तत्प्रसंगेनफलाकांक्षीचभवति साराजसीधृतिः ॥ ३४ ॥ ॥ ॥

तामसीं धृतिमाह ययेति दुष्टा अविवेकबहुला मेधा यस्य सः दुर्मेधाः पुरुषः यया धृत्या स्वप्नादीन्न विमुंचति पुनः पुनरावर्त्तयति स्वप्नोऽत्र निद्रा
सा धृतिस्तामसी ३५ सुखस्य त्रैविध्यं प्रतिजानीते अर्धेन सुखमिति स्पष्टार्थः तत्र सात्विकं सुखमाह अभ्यासादिति सार्द्धेन यत्र यस्मिन्सुखे
अभ्यासादतिपरिचयाद्रमते नतु विषयसुख इव सहसा रतिं प्राप्नोति यस्मिन्रममाणश्च दुःखस्यांतमवसानं नितरां गच्छति प्राप्नोति ॥ ३६॥
कीदृशं तत् यत्तादिति यत्तत्किमपि अग्रे प्रथमं विषमिव मनःसंयमाधीनत्वाद्दुःखावहमिव भवति परिणामे त्वमृतसदृशं आत्मविषया बुद्धिरा

यया स्वप्नं भयं शोकं विषादं मदमेव च॥ न विमुंचति दुर्मेधा धृतिः सा पार्थ तामसी ॥३५॥ सुखं त्विदानीं त्रिविधं शृ
णु मे भरतर्षभ ॥ अभ्यासाद्रमते यत्र दुःखांतं च निगच्छति॥३६॥ यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ॥ तत्सुखं सा
त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥ विषयेंद्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ॥ परिणामे विषमिव तत्सुखं राज
सं स्मृतम् ॥ ३८ ॥ यदग्रे चानुबंधे च सुखं मोहनमात्मनः ॥ निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥

त्मबुद्धिस्तस्याः प्रसादेन रजस्तमोमलत्यागेन स्वच्छतयावस्थानं ततो जातं यत् सुखं तत्सात्विकं प्रोक्तं योगिभिः ॥३७॥ राजसं सुखमाह विषयें
द्रियेति विषयाणामिंद्रियाणां च संयोगाद्यत्तत्प्रसिद्धं स्त्रीसंगादिसुखं अमृतमुपमा यस्य तादृशं भवत्यग्रे प्रथमं परिणामे तु विषतुल्यं इहामु
त्र च दुःखहेतुत्वात् तत्सुखं राजसं स्मृतम् ॥३८॥ तामसं सुखमाह यदिति अग्रे प्रथमक्षणे अनुबंधे च पश्चादपि यत्सुखमात्मनो मोहकरम् तदे
वाह निद्राचालस्यं च प्रमादश्च कर्त्तव्यार्थावधानराहित्येन मनोराज्यमेतेभ्य उत्तिष्ठति यत्सुखं तत्तामसमुदाहृतम् ॥ ३९ ॥ ॥ ॥

अनुक्तमपि संगृह्णन्प्रकरणार्थमुपसंहरति नतदस्तीति एभिःप्रकृतिसंभवैः सत्वादिभिर्गुणैर्मुक्तंहीनंसत्वंप्राणिजातमन्यद्वायत्स्यात्तत्पृथि
व्यांमनुष्यलोकादिषुदिविदेवेषुचक्वापिनास्तीत्यर्थः ॥४०॥ ननुचयद्येवंसर्वमपिक्रियाकारकफलादिकंप्राणिजातंचत्रिगुणात्मकमेव कथंत
र्हिअस्यमोक्षइत्यपेक्षायां स्वस्वाधिकारविहितैःकर्मभिःपरमेश्वराराधनात्तत्प्रसादलब्धज्ञानेनेत्येवंसर्वगीतार्थसारंसंगृह्यप्रदर्शयितुंप्रकर
णांतरमारभते ब्राह्मणेत्यादियावदध्यायसमाप्ति हेपरंतपशत्रुतापन ब्राह्मणानांक्षत्रियाणांविशांचशूद्राणांचकर्माणिप्रविभक्तानिप्रकर्षे
णविभागतोविहितानि शूद्राणांस्वभावात्पृथक्करणंद्विजत्वाभावेनवैलक्षण्यात् विभागोपलक्षणमाह स्वभावःसात्विकादिःप्रभवतिप्रादुर्भ

नतदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ॥ सत्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ॥ कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥
शमो दमस्तपः शौचं क्षांतिरार्जवमेव च ॥ ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्मस्वभावजम् ॥ ४२ ॥

वतियेभ्यस्तैर्गुणैरुपलक्षणभूतैः यद्वा स्वभावःपूर्वजन्मसंस्कारस्तस्मात्प्रादुर्भूतैरित्यर्थः तत्रसत्वप्रधानाब्राह्मणाः सत्वोपसर्जनरजःप्रधा
नाःक्षत्रियाः तमउपसर्जनरजःप्रधानावैश्याः रजउपसर्जनतमःप्रधानाःशूद्राः ॥ ४१ ॥ तत्रब्राह्मणस्यस्वाभाविकानिकर्माण्याह शमइ
ति शमश्चित्तोपरमः दमोबाह्येंद्रियोपरमः तपःपूर्वोक्तंशारीरादि शौचंबाह्याभ्यंतरम् क्षांतिःक्षमा आर्जवमवक्रता ज्ञानंशास्त्रीयम् विज्ञा
नमनुभवः आस्तिक्यमास्तिपरलोकइतिनिश्चयः एतच्छमादिब्राह्मणस्यस्वभावाज्जातंकर्म ॥ ४२ ॥ ॥ ॥

क्षत्रियस्यस्वाभाविकानिकर्माण्याह शौर्यमिति शौर्यंपराक्रमः तेजःप्रागल्भ्यम् धृतिर्धैर्यम् दाक्ष्यंकौशलम् युद्धेचाप्यपलायनमपराङ्मु
खता दानमौदार्यम् ईश्वरभावोनियमनशक्तिःएतत्क्षात्रियस्यस्वभावजंकर्म॥४३॥वैश्यशूद्रयोःकर्माह कृषीति कृषिःकर्षणम् गारक्षतीतिगो
रक्षस्तस्यभावोगोरक्ष्यम् पाशुपाल्यमित्यर्थः वाणिज्यंक्रयविक्रयादि एतद्वैश्यस्यस्वभावजंकर्म त्रैवर्णिकपरिचर्यात्मकंशूद्रस्यापिस्वभा
वजंकर्म ॥ ४४ ॥ एवंभूतस्यब्राह्मणादिकर्मणोज्ञानहेतुत्वमाह स्वेस्वइति स्वस्वाधिकारविहितेकर्मणिअभिरतःपरिनिष्ठितोनरःसंसिद्धिं

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ॥ दानमीश्वरभावश्च क्षात्रं कर्मस्वभावजम् ॥ ४३ ॥
कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ॥ परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥
स्वेस्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ॥ स्वकर्मनिरतः सिद्धिं यथा विंदति तच्छृणु ॥ ४५ ॥
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ॥ स्वकर्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः ॥ ४६ ॥
श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ॥ स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषं ॥ ४७ ॥

ज्ञानयोग्यतांलभते कर्मणांज्ञानप्राप्तिप्रकारमाह स्वकर्मेतिसार्द्धेन स्वकर्मपरिनिष्ठितोयथायेनप्रकारेणतत्त्वज्ञानंलभते तंप्रकारंशृणु
॥ ४५ ॥ तमेवाह यतइति यतोऽतर्यामिणःपरमेश्वराद्भूतानांप्राणिनांप्रवृत्तिश्चेष्टाभवति येनात्मनासर्वमिदंविश्वंततंव्याप्तंतमीश्वरंस्वक
र्मणाभ्यर्च्यपूजयित्वासिद्धिंलभतेमनुष्यः ॥ ४६॥ स्वकर्मणेतिविशेषणस्यफलमाह श्रेयानिति विगुणोऽपिस्वधर्मःसम्यगनुष्ठितादपिपर

धर्माच्छ्रेष्ठः नचबंधुवधादियुक्ताद्युद्धादेः स्वधर्माद्भिक्षाटनादिपरधर्मः श्रेष्ठइतिमन्तव्यम् यतःस्वभावेनपूर्वोक्तेननियतंनियमेनोक्तंकर्मकु
र्वन्किल्बिषंनाप्नोति॥४७॥यदिपुनःसांख्यदृष्ट्यास्वधर्मेहिंसालक्षणंदोषंमत्वापरधर्मंश्रेष्ठंमन्यसे तर्हि सदोषत्वंपरधर्मेऽपितुल्यमित्याशये
नाह सहजमिति सहजंस्वभावविहितंकर्मसदोषमपिनत्यजेत् हियस्मात् सर्वेऽप्यारंभादृष्टादृष्टार्थानिसर्वाण्यपिकर्माणिदोषेणकेनाचिदावृ
तान्यासाएव यथासहजेनधूमेनाग्निरावृतस्तद्वत् अतोयथाग्नेर्धूमरूपंदोषमपाकृत्यप्रतापएवतमःशीतादिनिवृत्तयेसेव्यते तथाकर्मणोऽपि
दोषांशंविहायगुणांशएवसत्त्वशुद्धयेसेव्यतइत्यर्थः॥४८॥ ननुकथंकर्मणिक्रियमाणेदोषांशप्रहाणेनगुणांशएवसंपत्स्यतइत्यपेक्षायामाहअस

सहजं कर्म कौंतेय सदोषमपि न त्यजेत् ॥ सर्वारंभा हि दोषेण धूमेनाग्निरिवावृताः ॥४८॥
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ॥ नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥

क्तेति असक्तासंगशून्याबुद्धिर्यस्य जितात्मानिरहंकारः विगतास्पृहाफलविषयेच्छायस्मात्सएवंभूतेन सत्यागः सात्विकोमतइत्येवंपूर्वोक्ते
नकर्मासक्तितत्फलयोस्त्यागलक्षणेनसंन्यासेननैष्कर्म्यसिद्धिंसर्वकर्मनिवृत्तिलक्षणांसत्वशुद्धिमधिगच्छति यद्यपिसंगफलयोस्त्यागेनक
र्मानुष्ठानमपिनैष्कर्म्यमेव कर्तृत्वाभिनिवेशाभावात् तदुक्तम् नैवकिंचित्करोमीतियुक्तोमन्येततत्त्वविदित्यादिश्लोकचतुष्टयेन तथाप्यने
नोक्तलक्षणेनसंन्यासेनपरमांनैष्कर्म्यसिद्धिम् सर्वकर्माणिमनसासंन्यस्यास्तेसुखंवशीत्येवंलक्षणांपारमहंस्यचर्यांप्राप्नोति ॥ ४९ ॥ ॥

एवंभूतस्यपरमहंसस्यज्ञाननिष्ठयाब्रह्मभावप्रकारमाह सिद्धिंप्राप्तइतिषड्भिः नैष्कर्म्यसिद्धिंप्राप्तःसन्यथायेनप्रकारेणब्रह्मप्राप्नोतितथा तंप्रकारंसंक्षेपेणैवमेवचनान्निबोध॥५०॥तदेवाह बुद्ध्येति उक्तेनप्रकारेणविशुद्धयापूर्वोक्तयासात्विकबुद्ध्यायुक्तः धृत्यासात्विक्या आत्मानं कार्यकारणसंघातंतामेवबुद्धिंनियम्यनिश्चलांकृत्वाशब्दादीन्विषयांस्त्यक्त्वातद्विषयौरागद्वेषौचव्युदस्य बुद्ध्याविशुद्धयायुक्तइत्यादीनांब्रह्मभूयायकल्पतइतितृतीयेनान्वयः ॥५१॥ किंच विविक्तेति विविक्तसेवीशुद्धदेशावस्थायी लघ्वाशीमितभोजी एतैरुपायैर्यतवाक्कायमान

सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ॥ समासेनैव कौंतेय निष्ठा ज्ञानस्य या परा ॥५०॥ बुद्ध्या
विशुद्धया युक्तो धृत्यात्मानं नियम्य च ॥ शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ॥ ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ॥ विमुच्य निर्ममः शांतो ब्रह्मभूयाय कल्पते ॥ ५३ ॥

सः संयतवाग्देहचित्तोभूत्वानित्यंसर्वदाध्यानेनयोयोगोब्रह्मसंस्पर्शस्तत्परःसन् ध्यानाविच्छेदार्थंपुनःपुनर्दृढंवैराग्यंसम्यगुपाश्रितोभूत्वा ॥५२ ॥ किंच अहंकारमिति ततश्चविरक्तोऽहमित्याद्यहंकारं बलंदुराग्रहं दर्पंयोगबलादुन्मार्गप्रवृत्तिलक्षणम् प्रारब्धवशात्प्राप्यमाणेष्वपि विषयेषुकामंक्रोधंपरिग्रहंचविमुच्यविशेषेणत्यक्त्वा बलादापन्नेषुनिर्ममः सन् शांतःपरामुपशांतिंप्राप्तोब्रह्मभूयायब्रह्माहमितिनैश्चल्येनावस्थानायकल्पते योग्योभवति॥ ५३ ॥ ॥ ॥ ॥ ॥ ॥

ब्रह्माहमित्येवनैश्चल्येनावस्थानस्यफलमाह ब्रह्मभूतइति ब्रह्मभूतोब्रह्मण्यवस्थितः प्रसन्नचित्तो नष्टंनशोचति नचाप्राप्तंकांक्षति देहाद्य
भिमानाभावात् अतएवसर्वेष्वपिभूतेषुसमःसन् रागद्वेषादिकृतविक्षेपाभावात् सर्वभूतेषुमद्भावनालक्षणांपरांमद्भक्तिंलभते ॥५४॥ततश्च
भक्त्यामामिति तयाचपरयाभक्त्यातत्त्वतोमामभिजानातिकथंभूतम् यावान्सर्वव्यापीयश्चास्मिसच्चिदानंदघनस्तथाभूतं ततश्चमामेवं
तत्त्वतोज्ञात्वातदनंतरंतस्यज्ञानस्याप्युपरमेसति मांविशते परमानंदरूपोभवतीत्यर्थः॥५५॥स्वकर्मभिः परमेश्वराराधनादुक्तंमोक्षप्रकार

ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति ॥समः सर्वेषु भूतेषु मद्भक्तिं लभते परां ॥५४॥ भक्त्या
मामभिजानाति यावान्यश्चास्मि तत्त्वतः ॥ ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम्॥ ५५॥
सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ॥ मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययं ॥ ५६ ॥
चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ॥ बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥

मुपसंहरति सर्वकर्माणीति सर्वकर्माणिनित्यनैमित्तिकानिचकर्माणि पूर्वोक्तक्रमेणसर्वदाकुर्वाणःसन् मद्व्यपाश्रयः अहमेवव्यपाश्रयआ
श्रयणीयोनतुस्वर्गादिफलंयस्यसः ममप्रसादाच्छाश्वतमनादि अव्ययंनित्यंसर्वोत्कृष्टंपदंप्राप्नोति॥५६॥यस्मादेवंतस्मात् चेतसेति सर्वक
र्माणिचेतसामयिसंन्यस्यसमर्प्य मत्परःअहमेवपरःप्राप्यःपुरुषार्थोयस्यसः व्यवसायात्मिकयाबुद्ध्यायोगमाश्रित्यसततंकर्मानुष्ठानका
लेऽपिब्रह्मार्पणंब्रह्महविरितिन्यायेनमय्येवचित्तंयस्यसः तथाभूतोभव ॥ ५७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ततोयद्भविष्यतितच्छृणु मच्चित्तइति मच्चित्तःसन्मत्प्रसादात्सर्वाण्यपिदुर्गाणिदुस्तराणिसांसारिकाणिदुःखानितरिष्यसि विपक्षेदोषमा
हअथचेद्यदिपुनस्त्वमहंकाराज्ज्ञातृत्वाभिमानान्मदुक्तमेतन्नश्रोष्यसि तर्हिविनंक्ष्यसि पुरुषार्थाद्भ्रश्यसि५८कामंविनंक्ष्यामि नतुबंधुभि
र्युद्धंकरिष्यामीतिचेतत्राह यदिति मदुक्तमनादृत्यकेवलमहंकारमवलंब्ययुद्धंनकरिष्यामीतित्वंयन्मन्यसेअध्यवस्यसिएषतेव्यवसा
योमिथ्यैव अस्वतंत्रत्वात्तव तदेवाह प्रकृतिस्त्वांरजोगुणरूपेणपरिणतासतीनियोक्ष्यति युद्धेप्रवर्त्तयिष्यत्येव ५९किंच स्वभावेति स्वभाव

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ॥ अथ चेत्त्वमहंकारान्न श्रोष्यसि विनंक्ष्यसि ॥ ५८ ॥
यदहं कारमाश्रित्य न योत्स्य इति मन्यसे ॥ मिथ्यैषव्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥
स्वभावजेन कौंतेय निबद्धः स्वेन कर्मणा ॥ कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत्॥ ६० ॥
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ॥ भ्रामयन्सर्वभूतानि यंत्रारूढानि मायया ॥ ६१ ॥

वःक्षत्रियत्वेहेतुः पूर्वकर्मसंस्कारस्तस्माज्जातेनस्वकीयेनकर्मणाशौर्यादिनापूर्वोक्तेननिबद्धोयंत्रितस्त्वंमोहाद्यत्कर्मयुद्धलक्षणंकर्त्तुंनेच्छसि
अवशोऽपितत्कर्मकरिष्यस्येव ॥६०॥ तदेवंश्लोकद्वयेनसांख्यादिमतेनप्रकृतिपारतंत्र्यंस्वभावपारतंत्र्यंकर्मपारतंत्र्यंचोक्तं इदानींस्वमतमा
हईश्वरइतिद्वाभ्यां सर्वभूतानांहृदयमध्येईश्वरोंऽतर्यामीतिष्ठति किंकुर्वन् सर्वाणिभूतानिमाययानिजशक्त्याभ्रामयन्तत्तत्कर्मसुप्रवर्त्तय
न्यथादारुयंत्रमारूढानिकृत्रिमाणिभूतानिसूत्रधारोलोकेभ्रामयतितद्वत् यद्वायंत्राणिशरीराणि आरूढानिभूतानिदेहाभिमानिनोजीवान्

भ्रामयन्नित्यर्थः तथाचश्वेताश्वतराणाम्मन्त्रः एकोदेवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतान्तरात्मा कर्माध्यक्षःसर्वभूताधिवासःसाक्षीचे ताकेवलोनिर्गुणश्चेति अंतर्यामिब्राह्मणंच यआत्मनितिष्ठन्नात्मानमंतरोयमयति यमात्मानंवेद यस्यात्माशरीरम् एषतेंऽतर्याम्यमृतइ त्यादि॥ ६१॥तमिति यस्मादेवंसर्वेजीवाःपरमेश्वरपरतंत्रास्तस्मादहंकारंपरित्यज्यसर्वभावेनसर्वात्मनातमीश्वरमेवशरणंगच्छ ततस्तस्यैव प्रसादात्परमामुपशांतिंस्थानंचपारमेश्वरंशाश्वतंनित्यंप्राप्स्यसि॥ ६२॥सर्वगीतार्थमुपसंहरन्नाह इतीति इतिअनेनप्रकारेणतेतुभ्यं सर्वज्ञे नपरमकारुणिकेनमया ज्ञानमाख्यातमुपदिष्टम् कथंभूतम् गुह्यात् गोप्याद्रहस्यमंत्रयोगादिज्ञानादपिगुह्यतरं एतन्मयोपदिष्टंगीताशा

तमेव शरणं गच्छ सर्वभावेन भारत ॥ तत्प्रसादात्परां शांतिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ॥ विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥
सर्वगुह्यतमं भूयः शृणु मे परमं वचः ॥ इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥

स्त्रमशेषतोविमृश्यपर्यालोच्यपश्चाद्यथेच्छसितथाकुरु एतस्मिन्पर्यालोचितेसातितवमोहोनिवर्तिष्यतइतिभावः॥ ६३ ॥अतिगंभीरंगीताशा स्त्रमशेषतःपर्यालोचयितुमशक्नुवतःकृपयास्वयमेवतस्यसारंसंगृह्यकथयति सर्वगुह्यतममितित्रिभिः सर्वेभ्योऽपिगुह्येभ्योगुह्यतमंमेवचः तत्रतत्रोक्तमपि भूयःपुनरपिवक्ष्यमाणंशृणु पुनःपुनःकथनेहेतुमाह दृढमत्यंतंमेममत्वमिष्टःप्रियोऽसीतिमत्वा ततएवहेतोस्तेहितंव क्ष्यामि यद्वा त्वंममेष्टोऽसि मयावक्ष्यमाणंचदृढंसर्वप्रमाणोपेतमितिनिश्चित्यततस्तेवक्ष्यामीत्यर्थःदृढमतिरितिकेचित्पठंति ॥ ६४ ॥

तदेवाह मन्मनाइति मन्मनाभव मच्चित्तोभव ममैवभक्तोभव मद्यजनशीलोभव मामेवनमस्कुरु एवंवर्त्तमानस्त्वंमत्प्रसादाल्लब्धज्ञानेन मामेवैष्यसि प्राप्स्यसि अत्रचसंशयंमाकार्षीः त्वंहिमेप्रियोऽसि अतःसत्यंयथाभवत्येवंतुभ्यमहंप्रतिजाने प्रतिज्ञांकरोमि॥६५॥ततोऽपि गुह्यतममाह सर्वेति मद्भक्त्यैवसर्वंभविष्यतीतिदृढविश्वासेनविधिकैंकर्यंत्यक्त्वामदेकशरणोभव एवंवर्त्तमानःकर्मत्यागनिमित्तंपापंस्यादि तिमाशुचःशोकंमाकार्षीःयतस्त्वांमदेकशरणंसर्वपापेभ्योऽहंमोचयिष्यामि ॥६६॥एवंगीतार्थतत्त्वमुपदिश्यतत्संप्रदायप्रवर्त्तनेनियममाह

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥ मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥६५॥ सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ॥ अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६ ॥ इदं ते नातपस्काय नाभक्ताय कदाचन ॥ नचाशुश्रूषवे वाच्यं नच मां योऽभ्यसूयति ॥ ६७ ॥ य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ॥ भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः॥६८॥नच तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः॥भविता न च मे तस्मादन्यः प्रियतरो भुवि॥६९

इदमिति इदंगीतार्थतत्त्वंतेत्वयाऽतपस्कायस्वधर्मानुष्ठानहीनायनवाच्यं नचाभक्तायगुरौईश्वरेचभक्तिशून्यायकदाचिदपिनवाच्यंनचाशु श्रूषवे परिचर्यामकुर्वतेनवाच्यंमांपरमेश्वरंयोऽभ्यसूयतिमनुष्यदृष्ट्यादोषारोपेणनिन्दतितस्मैनवाच्यं।६७।एतैर्दोषैर्विरहितेभ्योगीताशास्त्रो पदेष्टुःफलमाहयइतिमद्भक्तेष्वभिधास्यातिमद्भक्तेभ्योयोवक्ष्यतिसमयिपरांभक्तिंकरोतिततोनिःसंशयःसन्मामेवप्राप्नोतीत्यर्थः॥६८॥ किंच

नचेति तस्मान्मद्भक्तेभ्योगीताशास्त्रव्याख्यातुः सकाशादन्योमनुष्येषुमध्येकश्चिदपिममप्रियकृत्तमोऽत्यंतंपरितोषकर्त्तानास्ति नचका
लान्तरेभविताभविष्यति ममापितस्मादन्यः प्रियतरोऽधुनाभुविताबन्नास्ति नचकालांतरेऽपिभविष्यतीत्यर्थः ॥ ६९ ॥ पठतःफलमा
ह अध्येष्यतइति आवयोःकृष्णार्जुनयोः इमंधर्म्यंधर्मादनपेतंसंवादंयोऽध्येष्यतेजपरूपेणपठिष्यति तेनपुंसासर्वयज्ञेभ्यः श्रेष्ठेन
ज्ञानयज्ञेनाहमिष्टःस्यांभवेयमितिमतिः यदप्यसौगीतार्थमबुद्ध्यमानएवकेवलंजपति तथापिममतच्छृण्वतोमामेवासौप्रकाशयतीति
बुद्धिर्भवति यथालोकेयदृच्छयाऽपिकश्चित्कदाचित्कस्यचिन्नामगृह्णाति तदासौमामेवायमाह्वयतीतिमत्वातत्पार्श्वमागच्छति यथाहम

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ॥ ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥
श्रद्धावाननसूयश्च शृणुयादपि यो नरः ॥ सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणां ॥ ७१ ॥
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ॥ कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनंजय ॥ ७२ ॥ ॥ ॥

पितस्यसन्निहितोभवेयं अतएवअजामिलक्षत्रबंधुप्रमुखानांकथंचिन्नामोच्चारणमात्रेणप्रसन्नोऽस्मि तथैवास्यापिप्रसन्नोभवेयमित्यर्थः
॥७०॥ अन्यस्यजपतोयोऽन्यःकश्चिच्छृणोतितस्यापिफलमाह श्रद्धावानिति योनरःश्रद्धायुक्तःकेवलंशृणुयादपिश्रद्धावानपि कश्चित्किम
र्थमुच्चैर्जपतिअबद्धंजपतीतिवादोषदृष्टिंकरोति तद्व्यावृत्त्यर्थमाह अनसूयश्चअसूयारहितोयःशृणुयात् सोऽपिसर्वैःपापैर्मुक्तः सन् अश्वमे
धादिपुण्यकृताँल्लोकान्प्राप्नुयात्॥७१॥सम्यग्बोधानुत्पत्तौपुनरुपदेक्ष्यामीत्याशयेनाह कच्चिदिति कच्चिदितिप्रश्नार्थःअज्ञानसंमोहःतत्त्वाज्ञा

नकृतोविपर्ययः स्पष्टमन्यत् ॥७२॥ कृतार्थःसन्नर्जुनउवाच नष्टइति आत्मविषयोमोहोनष्टः यतोऽयमहमस्मीतिस्वरूपानुसंधानरूपास्मृ
तिस्त्वत्प्रसादान्मयालब्धा अतःस्थितोऽस्मि युद्धायोत्थितोऽस्मि गतोधर्मविषयःसंदेहोयस्यसोऽहंतवाज्ञांकरिष्यइति॥७३॥ तदेवंधृतराष्ट्रं
प्रति श्रीकृष्णार्जुनसंवादंकथयित्वा प्रस्तुतांकथामनुसंधानःसंजयउवाच इतीति रोमहर्षणंरोमांचकरं संवादमश्रौषंश्रुतवानहं स्पष्टम

अर्जुन उवाच ॥ नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत॥ स्थितोऽस्मि गतसंदेहः करिष्ये वचनं त
व॥७३॥ संजय उवाच ॥ इत्यहं वासुदेवस्य पार्थस्य च महात्मनः॥ संवादमिममश्रौषमद्भुतं रोमहर्षण
म् ॥ ७४ ॥ व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ॥ योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम्
॥७५॥ राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम्॥ केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥
तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः॥ विस्मयो मे महान् राजन् हृष्यामि च पुनःपुनः॥ ७७ ॥

न्यत् ॥७४ ॥ आत्मनस्तच्छ्रवणेसंभावनामाह व्यासप्रसादादिति भगवताव्यासेनदिव्यंचक्षुःश्रोत्रादिमह्यंदत्तम् अतोव्यासस्यप्रसादादेत
दहंश्रुतवानस्मि किंतदतआह परंयोगम् परत्वमाविष्करोति योगेश्वराच्छ्रीकृष्णात्स्वयमेवसाक्षात्कथयतःश्रुतवानिति ॥७५॥ किंच राज
न्निति हृष्यामिरोमांचितोभवामि हर्षंप्राप्नोमीतिवा स्पष्टमन्यत् ७६ किंच तच्चेति विश्वरूपंनिर्दिशतिस्पष्टमन्यत् ॥ ७७॥ ॥ ॥

अतस्त्वंपुत्राणांराज्यादिशंकांपरित्यजेत्याशयेनाह यत्रेति यत्रयेषांपांडवानांपक्षेयोगेश्वरः श्रीकृष्णोवर्तते यत्रचपार्थोगांडीवधनुर्धरः त
त्रैवश्रीराज्यलक्ष्मीः तत्रैवविजयः तत्रैवचभूतिरुत्तरोत्तराभिवृद्धिश्च तत्रैवनीतिः नयोऽपि ध्रुवानिश्चितेतिसर्वत्रसंबध्यते इतिममर्मात
निश्चयः अतइदानीमपितावत्सपुत्रस्त्वं श्रीकृष्णंशरणमुपेत्यपांडवान्प्रसाद्यसर्वस्वंचतेभ्योनिवेद्यपुत्रप्राणरक्षणंकुर्वितिभावः ॥७८॥ भ
गवद्भक्तियुक्तस्यतत्प्रसादात्मबोधतः सुखंबंधविमुक्तिःस्यादितिगीतार्थसंग्रहः॥१॥तथाहि पुरुषःसपरःपार्थभक्त्यालभ्यस्त्वनन्यया भक्त्या
त्वनन्ययाशक्यअहमेवंविधोऽर्जुनेत्यादौभगवद्भक्तेर्मोक्षंप्रतिसाधकतमत्वश्रवणात् तदेकांतभक्तिरेवतत्प्रसादोत्थज्ञानावांतरव्यापारमा

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः॥ तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥७८॥ ॥ इति श्रीमद्भगवद्गीता
सूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नामाऽष्टादशोऽध्यायः॥१८॥ ॥

त्रयुक्तामोक्षहेतुरितिस्फुटंप्रतीयते ज्ञानस्यभक्त्यवांतरव्यापारत्वमेवयुक्तम् तेषांसततयुक्तानांभजतांप्रीतिपूर्वकम् ददामिबुद्धियोगंतं
येनमामुपयांतिते मद्भक्तएतद्विज्ञायमद्भावायोपपद्यतइत्यादिवचनात् तत्त्वज्ञानमेवभक्तिरित्युक्तम् समःसर्वेषुभूतेषुमद्भक्तिंलभतेपराम्
भक्त्यामामभिजानातियावान्यश्चास्मितत्त्वतइत्यादौभेदेननिर्देशात् नचैवंसतितमेवविदित्वातिमृत्युमेति नान्यःपंथाविद्यतेऽयनायेत्या
दिश्रुतिविरोधःशंकनीयः भक्त्यवांतरव्यापारत्वाज्ज्ञानस्य नहिकाष्ठैःपचतीत्युक्तेज्वालानामसाधनत्वमुक्तंभवति किंच यस्यदेवेपराभक्ति
र्यथादेवेतथागुरौ तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनाम् देहांतेदेवःपरंब्रह्मतारकंव्याचष्टे यमेवैषवृणुतेतेनलभ्यइत्यादि श्रुतिस्मृतिपुरा

णवचनान्येवंसतिसमंजसानिभवंति तस्माद्भक्तिरेवमोक्षहेतुरितिसिद्धम् तेनैवदत्तयामत्यातद्गीताविवृतिःकृता सएवपरमानंदस्तयाप्रीणा तुमाधवः ॥ १ ॥ परमानंदपादाब्जरजःश्रीधारिणाधुना श्रीधरस्वामियतिनाकृतागीतासुबोधिनी ॥२॥ स्वप्रागल्भ्यबलाद्विलोड्यभगवद्गीतांतदंतर्गतंतत्त्वंप्रेप्सुरुपैतिकिंगुरुकृपापीयूषदृष्टिंविना अंबुस्वांजलिनानिरस्यजलधेरादित्सुरंतर्मणीनावर्तैषुनाकिंनिमज्जतिजनःसत्कर्णधारंविना ॥३॥ इतिश्रीमन्महाभारतेशतसाहस्र्यांसंहितायांवैयासिक्यांभीष्मपर्वणिश्रीमद्भगवद्गीतासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रेश्रीकृष्णार्जुनसंवादे योगशास्त्रनिर्णयसंन्यासादितत्त्वनिर्णयेसुबोधिन्यांटीकायांश्रीधरस्वामिकृतौमोक्षयोगोनामाष्टादशोऽध्यायः॥१८॥

समाप्तोऽयंग्रंथः

इयं सुबोधिनीटीकासमेता श्रीमद्भगवद्गीता मुंबापुर्यां श्रीकृष्णदासात्मजाभ्यां गंगाविष्णुखेमराजगुप्ताभ्यां स्वीये श्रीवेंकटेश्वराख्यमुद्रायंत्रालयेमुद्रिता ॥ ॥ ॥ ॥ शकाब्दाः १८१२ ॥ ॥ संवत् १९४७ ॥ ॥ ॥

# अच्युताष्टकम्.

अच्युतंकेशवंरामनारायणंकृष्णदामोदरंवासुदेवंभजे ॥ श्रीधरंमाधवंगोपिकावल्लभंजानकीनायकंरामचंद्रंहरिम् ॥ १ ॥ अच्युतंकेशवं सत्यभामाधवंमाधवंश्रीधरंराधिकाराधनम् ॥ इंदिरामंदिरंचेतसासुंदरंदेवकीनंदनंनंदजंसंदधे॥ २॥विष्णवेजिष्णवेशंखिनेचक्रिणेरुक्मिणी रागिणेजानकीजानये ॥ वल्लवीवल्लभायाजितायात्मनेकंसविध्वंसिनेवंशिनेतेनमः ॥ ३ ॥ कृष्णगोविंदहेरामनारायण श्रीपतेवासुदेवार्चित श्रीनिधे ॥ आच्युतानंतहेमाधवाधोक्षजद्वारकानायकद्रौपदीरक्षक ॥ ४ ॥ राक्षसक्षोभितःसीतयाशोभितोदंडकारण्यभुकूपुण्यताकारणम् ॥ लक्ष्मणेनान्वितोवानरैःसेवितोऽगस्तिनापूजितोराघवःपातुमाम् ॥ ५ ॥ धेनुकारिष्टकानिष्टकृद्द्वेषिणांकेशिहाकंसहृद्वंशिकावादकः ॥ पूतनाशोषकोसूरजाखेलनोबालगोपालकः पातुमांसर्वदा ॥ ६ ॥ वैद्युतद्योतकासंस्फुरद्वाससाप्रावृडंभोदवत्प्रोल्लसद्विग्रहम् ॥ वैजयंतीप्रभाशोभितोरस्थलं लोहितांघ्रिद्वयंवारिजाक्षंभजे ॥ ७ ॥ कुंचितैःकुंतलैर्भ्राजमानाननंरत्नमौलिंलसत्कुंडलंगंडयोः॥ हारकेयूरिणंकंकणप्रोज्ज्वलंकिंकिणीमंजुलंश्यामलंभावये ॥ अच्युतस्याष्टकंयःपठेदिष्टदंप्रेमतः प्रत्यहंपूरुषःसस्पृहम् ॥ सर्वतःसुंदरंकर्तृविश्वंभरस्तस्यवश्योहरिर्जायतेसत्वरम् ॥ ९ ॥ इत्यच्युताष्टकस्तोत्रं संपूर्णम् ॥ ॥ ॥ ॥ ॥ ॥ ॥

# सूचना.

# सूचना.

पंचदशी सटीक किं० २॥ रु० ट० म० ४ आना गीताआनंदगिरिकृत टीका भाषा किं० ३॥ रु० ट० म० ६ आना गीता श्रीधरीटीका किं० १। रु० ट० म० ३ आना गीताचिद्घनानंदस्वामीकृत गूढार्थदीपिका मूल अन्वय पदच्छेदसहितभाषाटीका किं० ८ रु० ट० म० १ रु० श्रीरामगीता भाषाटीका किं० १० आना ट०म० अर्धा आना गीताबडेअक्षरकी १६ पेजी गुटका किं० १ रु० ट० म० २ आना गीता बडेअक्षरकी खुली किं० १२ आना ट० म० २ आना पंचरत्न अक्षरमोटा गुटका रेशमीवेनीका किं० २ रु० ट० म० ४ आना पंचरत्न बुकूफासन सप्तरत्न किं० १ रु० ट० म० २ आना पंचरत्न अक्षरबडा लंबोसंची खुला किं० १॥ रु० ट० म० ३ आना पंचरत्न और एकादशरत्नचित्रसहित वेनीका किं० १ रु० ट० म० २ आना निगमांतार्थदीपिका ( संप्रदायरहस्य ) किं० १० आना ट० म० १॥ आना.

**श्रीकृष्णदासात्मज–गङ्गाविष्णु खेमराज श्रीवेंकटेश्वर छापखाना ( बंबई.)**

